श्रीमत्सुरेश्वराचार्यकृता

# नैष्कर्म्यसिद्धिः

(श्रीमच्चित्सुखाचार्यकृता 'भावतत्त्वप्रकाशिका' सहिता)

**डॉ. स्वामी प्रज्ञानानन्द सरस्वती**

वेदान्ताचार्य, व्याकरणतीर्थ, शास्त्रचक्रवर्त्ती (पी.एच.-डी)

*द्वारा सटीप्पण सम्पादिता*

*प्रकाशक :*

**श्री श्री निगमानन्द विद्या निकेतन**

बी. ६/१०६, केदार घाट (पीताम्बरपुरा)

वाराणसी, उ.प्र. - २२१ ००१

□ प्रकाशक
**श्री श्री निगमानन्द विद्या निकेतन**
बी. ६/१०६, केदार घाट (पीताम्बरपुरा),
वाराणसी, उ.प्र. - २२१ ००१

□ प्रथम संस्करण : शङ्कराब्द २५१९
वैक्रमाब्द २०६९
खैष्टाब्द २०१२



□ विनिमय : २००.०० रुप्यकाणि

□ पुस्तक प्राप्तिस्थान :
१. प्रकाशक
२. शङ्कर मठ, रामराजातला,
पो. संतरागाच्छी, हावड़ा,
पश्चिम बंग - ७११९०४

□ मुद्रक :
**डिवाइन प्रेस**
शॉप नं. २६, प्रथम तल,
(केरला कफे के ऊपर),
विजया कॉम्पलेक्स,
भेलूपुर, वाराणसी

# भूमिका

श्रीकाशीश्वरभूधरेन्द्रतनया विश्वेशपादाम्बुज-
द्वन्द्वं द्वन्द्वविनाशकं श्रुतिशिखोत्थाखण्डधीगोचरम्।
देवीधीश्वरमौलिरत्नविसरप्रोद्भासिदिव्यद्युति-
प्रोद्यद्भापरिभासितं निरुपमं भूयो नमाम्यादरात्।।१।।

वृद्धश्रवः प्रमुखनिर्जरराजराजी राजीवमौलिसुमलालितवर्धितश्रि।
राधापदाब्जरतकृष्णपदारविन्दं भूयो भजे कनककोकनदातिशायि।।२।।

योऽभूच्छ्रीनिगमागमादिकमहापाथोधिमन्थाचल-
प्रोद्यत्तत्त्वमहासुधारससततीपानैकलीलोत्सवः
सन्न्यासव्रतदीक्षितामलतनुप्रोद्यन्मनोज्ञच्छविः
तं वन्दे परमं गुरुं हि निगमानन्दाह्वयं सन्ततम्।।३।।

सत्यानन्दसरस्वतीह विहरल्लीलामरालोपमः
सत्यानन्दसरस्वती प्रवचनव्यापारलीलाधनः।
सत्यानन्दसरस्वतीरससुधापानद्विरेफोत्सवः
सत्यानन्दसरस्वती मम गुरुर्वर्वर्ति सर्वोपरि।।४।।

सर्वैः शिष्यैः प्रशिष्यैरहमहमिकया पूजितो यस्य पादः
भूयस्तत्त्वोपलब्धौ क्वचिदपि न कदाचिद्यदीयो विषादः।
कुर्याद् भक्तौ प्रवृत्तिं प्रतिदिवसमहो भूयसीं यत्प्रसादोऽ-
खण्डानन्दो यतीन्द्रो जगति विजयते दुःखचक्रावसादः।।५।।

नैष्कर्म्यसिद्धिं हि पुरा प्रणीय सुरेश्वराचार्ययतीश्वरोऽसौ।
अद्वैततत्त्वं प्रकटीचकार तमार्यवर्यं शिरसा नमामि।।६।।
श्रीचित्सुखाचार्यपदाभिधेयः सच्चित्सुखार्थं प्रणिनाय पूर्वम्।
ग्रन्थोत्तमं यः किल भावतत्त्वप्रकाशिकाख्यं तमहं नमामि।।७।।

तं ग्रन्थदेवं निज टिप्पणोक्तिवल्लीमतल्लीसुमनोभिराराात्।
समर्च्य भूयो हि बुधालयेऽस्मिन् संस्थापयाम्यादरतो विनम्रः।।८।।

निखिलप्राणिवर्गाणां मध्ये मनुष्य एव विशेषरूपेणाभ्युन्नतिमिच्छन् प्रयत्नशीलः सन् तिष्ठति। तत्र धर्मार्थकामरूपपुरुषार्थत्रये निमज्जमानानां मनुष्याणां मध्ये कश्चिदेव सर्वोत्कृष्टरूपेण मोक्षरूपं चतुर्थं परमपुरुषार्थमाकाङ्क्षति। स च मोक्षः वेदान्तजन्य ब्रह्मविज्ञानादेव भवतीति श्रुतियुक्तिविद्वदनुभवैः प्रतिपादितमस्ति। अनादिकालतः मायामोहनिमग्नो जीवः सहसैकवारं महावाक्यश्रवणेनैव मुक्तो न भवति। एतदर्थमाचार्यैर्वेदान्तविचारात्मका अनेके ग्रन्था विनिर्मिताः। सूत्रकारैरप्युक्तं "आवृतेरस-कृदुपदेशात्"[१] इति। अर्थात् यथा छान्दोग्योपनिषदि[२] वेदान्ततत्त्वावबोधनाय "तत्त्वमसि" इति महावाक्यस्य सदृष्टान्तः नवकृतः उपदेशो वर्तते। तथैवास्मदृशां मन्दाधिकारिणां कृते पुनः नववारमपि न्यूनमेव, तर्हि वारम्बारविचारणाय विभिन्नग्रन्थपरम्परया आचार्यवर्यैर्व्यवस्था कृता। एवमेव विद्यमानेष्वपि बहुषु वेदान्तग्रन्थेषु स्वज्ञानपरिपुष्ट्यर्थं जिज्ञासूनामुपकाराय वा यथा श्रीसुरेश्वराचार्यो नैष्कर्म्यसिद्धिं विरचितवान् तथैव श्रीचित्सुखाचार्योऽपि मन्दमतीनामुपकारायास्योपरि "भावतत्त्वप्रकाशिका" नाम्नीं टीकामेकां विरचितवान्। इदानीमपि सा टीकाऽमुद्रिता एवासीत्। अतएव शोधप्रबन्धरूपेणास्या विदुषामग्रे आनयनायात्र प्रचेष्टा क्रियते मया। नैष्कर्म्यसिद्धौ प्रदत्तानां विषयाणां मध्ये यत्किञ्चित् किञ्चिच्च तदनुकुलमन्यदपि यथाप्रयोजनमालोच्यते खलु भूमिकायाम्।

## ग्रन्थाभिधानम्

नैष्कर्म्यसिद्धिरिति ग्रन्थाभिधानमत्यन्तं स्वारस्यमेव भवति। अत्र नैष्कर्म्यमित्येकं पदं सिद्धिरित्यपरं पदमिति पदद्वयमस्ति। निष्कर्मणः भावः नैष्कर्म्यमिति व्युत्पत्त्या भवति। को नाम निष्कर्म? इति पृष्टे निर्गतानि कर्माणि यस्मादित्युत नास्ति कर्मेति अथवा नास्ति कर्म यत्रेति निष्कर्म। अत्र प्रथमपक्षे पुनः किं नाम खलु कर्मणः निर्गमनम्? किमात्मन्यध्यारोपितं कर्म नास्तीत्यभिप्रायः उत आत्मा न कर्मसाध्यः आहोस्विदध्यारोपितकर्मणः विद्यमानेऽप्यात्मनि कर्मणः पारमार्थिकता नास्ति। अत्र द्वितीयपक्षं न समीचिनम्, यतः कर्मणोऽनुभूयमानत्वात्सर्वथैव नास्तीति न वक्तुं शक्यते। कर्मणः निर्गमनविचारावसरेऽपि न तत्र प्रथमकल्पः, अत्मैवाखिलप्रपञ्चा-नामधिष्ठानत्वात् कर्मणोऽपि अधिकरणमात्मैव भवति, अतोऽध्यारोपितं कर्म आत्मनि नास्तीति कथनमयुक्तमेव। इतरेषु पक्षेषु यस्य कस्यापि ग्रहणे आत्मनः ब्रह्मणो वा नैष्कर्म्यशब्देन ग्रहणं भवति। तस्य सिद्धिर्निश्चय इति नैष्कर्म्यसिद्धिरिति शब्दार्थः।

"नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति"[३] इत्युक्तं हि भगवता वासुदेवेन

---

१. ब्र.सू., ४.१.१.  २. छा.उ., षष्ठाध्यायः।

३. श्रीमद्भगवद्गीता, १८.४९

श्रीमद्भगवद्गीतायाम्। तस्यैव व्याख्यायां 'निर्गतानि कर्माणि यस्मान्निष्क्रियब्रह्मात्मसंबोधात्स निष्कर्मा तस्य भावो नैष्कर्म्यं च तत्सिद्धिश्च सा नैष्कर्म्यसिद्धिः नैष्कर्म्यस्य वा सिद्धिर्निष्क्रियात्मस्वरूपावस्थानलक्षणस्य सिद्धिर्निष्पत्तिरिति सा च सर्वकर्मसंन्यासपूर्वकेण सम्यग्दर्शनेन लभ्या सद्योमुक्तिरिति भगवता भाष्यकारेण निगदितम्। श्रीशंकरानन्दस्वामिनाऽत्र—"न यत्र कर्म तन्निष्कर्म निष्क्रियं परं ब्रह्म "निष्कलं निष्क्रियं शान्तम्" इति श्रुतेः। निष्कर्मणो भावो नैष्कर्म्यं ब्रह्मभावस्तत्प्राप्तिरिति" अथवा "श्रौतस्मार्तादिसर्वकर्मभ्यो निर्गतो यः स निष्कर्मा तस्य भावो नैष्कर्म्यमित्युक्तम्।"

अत्र खलु केचन "नैष्कर्म्यसिद्धिशब्देन श्रीभगवत्स्वरूपमङ्गलविग्रहविषयकश्रीगङ्गाप्रवाहवदनवच्छिन्नस्मृतिसन्तानरूपां भक्तिं" प्रतिपादयन्ति। तदयुक्तम्, यतः भक्तस्य भगवदिच्छाधीनत्वात्, भक्तिरपि वृत्त्यात्मकक्रियारूपत्वात् तत्र सर्वकर्मसंन्यासपूर्वकं ब्रह्मात्मैक्यलक्षणं मोक्षं न भवति। अतएव नैष्कर्म्यसिद्धिशब्देन निष्क्रियात्मस्वरूपावस्थानलक्षणस्य ब्रह्मणो निश्चयः प्राप्तिर्वेति प्रायशः आचार्याः स्वीकृतवन्तः। एतद्भावमाश्रित्य ग्रन्थकारः प्रकरणमिदमकरोत्, प्रकरणस्यापि तादर्थ्यादभिधानमपि तदेव। अखिलकर्मणः कारणं खल्वज्ञानमेव। वेदान्तप्रमाणजनितनिष्कर्मात्मस्वरूपज्ञानेनैव सम्भवति तस्य तिरोधानम्। न त्वन्यथा। अतएवान्वर्थमेव ग्रन्थाभिधानम्। उक्तञ्च ग्रन्थकारैः—

वेदावसानवाक्योत्थसम्यग्ज्ञानाऽऽशुशुक्षणिः।
दन्दहीत्यात्मनो मोहं न कर्माप्रतिकूलतः।।[१]

## ग्रन्थप्रकारः

ग्रन्थोऽयमद्वैतशास्त्रस्य प्रकरणरूपेण ख्यातः। प्रकरणलक्षणञ्चोक्तं पराशरोपपुराणे—

शास्त्रैकदेशसम्बन्धं शास्त्रकार्यान्तरे स्थितम्।
आहुः प्रकरणं नाम ग्रन्थभेदं विपश्चितः।।[२]

लक्षणमिदं ग्रन्थेऽपि अन्वर्थमेव। यतः वेदान्तप्रकरणत्वात् ग्रन्थेऽस्मिन् सर्वे वेदान्तशास्त्रनिरूपणीयाः विषयाः न परिशीलिताः। तथाहि—अस्मिन् ग्रन्थे मुक्तिकारणत्वेन कर्मणः ज्ञानकर्मसमुच्चयस्य वा निराकरणम्, स्थूलसूक्ष्मशरीरादेः विवेकः, अविद्यायाः निरूपणम्, द्वैतस्य प्रतीतिमात्रसिद्धत्वम्, तत्त्वमस्यादिवाक्यादेवाज्ञाननिवृत्तिः, मोक्षप्राप्त्यर्थं तत्त्वमस्यादिमहावाक्यानां विचारः, जीवन्मुक्तस्याचरणम्, इत्यादिविषयाणां

१. नैष्कर्म्यसिद्धिः, १.८ २. पराशरोपपुराणम्, १८.२१-२२

निरूपणे विद्यमानेऽपि मिथ्यात्वश्रुतेः विचारः, दृष्टिसृष्टिवादस्य सृष्टिदृष्टिवादस्य वा विचारः, बिम्बप्रतिबिम्बवादस्यावच्छेदवादस्य वा विचारः, जीवाणुत्वविचारः, एकजीववादस्य बहुजीववादस्य वा विचारः, अनिर्वचनीयादिख्यातेः विचार, सत्तात्रैविध्यविचारः, ब्रह्मणः निर्गुणत्वादे विचारः, अध्ययनविध्यादेर्विचारः, एवं प्रकारेण बहुविषयाणां निरूपणं नास्ति। अतोऽस्य ग्रन्थस्य शास्त्रैकदेशसम्बद्धत्वात् वेदान्तप्रकरणत्वम् सिद्ध्यति। स्वयमेव ग्रन्थकारेण "अशेषवेदान्तसारसंग्रहप्रकरणमिदमारभ्यते[१] इति ग्रन्थारम्भे प्रतिज्ञातम्। अर्थात् मोक्षकारणभूतं ब्रह्मात्मविज्ञानमेवाखिलवेदान्तानां सारः, तस्य तत्त्वमत्र संगृहीतमस्तीत्यभिप्रायः। वेदान्तान्तर्गत "तत्त्वमसि" "अहं ब्रह्मस्मी"-त्यादिश्रुत्युक्तमहावाक्यानां विचारादेव भवति तत्त्वज्ञानम्। येनाखिलानर्थभूताविद्यातिरोभूता स्यात्। अपि चायं ग्रन्थः प्रमेयप्रधानः, भाष्यकाराभिमतस्यैव श्रुतियुक्तिबलेन प्रपञ्चितत्वात्।

## भारतीयदर्शनशास्त्रम्

भारतीयदर्शनशास्त्राणि मुख्यतया नास्तिक-आस्तिक इति भेदेन द्विधा विभक्तानि। तत्र खलु न्याय-वैशेषिक-सांख्य-पातञ्जल-पूर्वमीमांसा-उत्तरमीमांसा (वेदान्त) भेदेन षड्विधानि पुनः आस्तिकदर्शनानि सन्ति। एतेषु दर्शनेषु वेदस्य प्रामाणिकत्वेनाङ्गी-कृतत्वादेतानि आस्तिकदर्शनत्वेन प्रसिद्धानि। अस्ति वेदो परलोको वेति मतिर्यस्य स आस्तिक इति प्रसिद्धिः। यद्यपि सांख्यपूर्वमीमांसादर्शने ईश्वरं न स्वीकुर्वतः, तथापि न हि ते नास्तिकदर्शने, अपि तु आस्तिक एव, वेदप्रामाण्याङ्गीकृतत्वात्।

ये पुनः वेदस्य प्रामाण्यं नाङ्गीकुर्वन्ति वेदस्य निन्दां वा कुर्वन्ति ते हि नास्तिकाः। "नास्तिको वेदनिन्दक" इति प्राञ्चः। तत्र चार्वाक-सौत्रान्तिक-वैभाषिक-योगाचार-माध्यमिक-आर्हत (जैन) भेदेन षड्विधानि नास्तिकदर्शनानि सन्ति। अत्र एकस्यैव बौद्धदर्शनस्य सिद्धान्तभेदमङ्गीकृत्य सौत्रान्तिक-वैभाषिक-योगाचार-माध्यमिका इति भेदचतुष्टयं सम्पादितम्।

अत्र खलु (१) महर्षिगौतमप्रणीतम्-न्यायदर्शनम्, (२) कणादप्रणीतम्—वैशेषिकदर्शनम्, (३) महामुनिकपिलप्रणीतम्—सांख्यदर्शनम्, (४) महर्षिपतञ्जलि-प्रणीतम्—योगदर्शनम्, (५) आचार्यजैमिनीप्रणीतम् —मीमांसादर्शनम्, (६) महर्षि-वेदव्यासप्रणीतम्—वेदान्तदर्शनम् वर्तन्ते।

एवमेव नास्तिकदर्शनेष्वपि—(१) देवगुरुवृहस्पतिप्रणीतम्—चार्वाकदर्शनम्, (२) सौत्रान्तिकबौद्धदर्शनम्, (३) वैभाषिकबौद्धदर्शनम्, (४) योगाचारबौद्धदर्शनम्, (५) माध्यमिकबौद्धदर्शनम् (उक्त दर्शनचतुष्टयं भगवता बुद्धेनैव क्षणिकं क्षणिकं,

१. नैष्कर्म्यसिद्धिः १.१

दुःखं दुःखं, स्वलक्षणं स्वलक्षणम्, शून्यम् शून्यमिति भावनाचतुष्टयमादाय प्रोक्तमिति प्रसिद्धिः) (६) महावीरप्रणीतम्—जैनदर्शनम्।

## दर्शनशब्दार्थः

दर्शनशब्दः व्युत्पत्त्यनुसारेण विभिन्नेऽर्थे प्रयुक्तः भवति। तथाहि "दृश्" भावे ल्युट् इति पक्षे प्रकारद्वयं भवति। प्रथमम् चाक्षुषप्रत्यक्षम्, यथा—घटदर्शनम्, चन्द्रदर्शनमित्यादि। द्वितीयं पुनः—मानसप्रत्यक्षम्, यथा आत्मदर्शनम् "आत्मा वा अरे द्रष्टव्यः"[१] इति च श्रुतेः। दृश्यतेऽनेनेति करणव्युत्पत्तिपक्षे (दृश + ल्युट् (करणे) ) तु — यज्जनितवृत्त्या विषयी क्रियते तत्त्वमिति दर्शनपदार्थः दर्शनशास्त्रम्। अर्थात् तत्त्वज्ञानसाधनभूतम् शास्त्रम्, यथा—वेदान्तदर्शनम्, न्यायदर्शनमित्यादीनि।

यद्यपि साधारणदृष्ट्या दर्शनशब्देन चाक्षुषप्रत्यक्षम् गृह्यते तथाप्यत्र दर्शनशब्देन मानसदर्शनमेवोच्यते। सम्यग्दर्शनम्, यथार्थदर्शनमित्यादिशब्दैरपि उक्तार्थे दर्शनशब्दस्य भवति प्रयोगः। दर्शनशब्देन मुख्यतः साक्षात्कारात्मकः बोधः ज्ञेयः। उक्तं हि कठोपनिषदि—"दृश्यते त्वग्र्यया बुद्ध्या"[२] एकाग्रबुद्ध्या सर्वव्यापी प्रच्छन्नात्मा दर्शनार्हः भवति। अपरोक्षानुभवे दर्शनशब्दस्य मुख्यार्थे सत्यपि शास्त्रोपदेशसहायेन परोक्षज्ञानमपि दर्शनशब्दस्य गौणार्थो भवितुमर्हति। तस्मात् दर्शनशब्देनोभयार्थ एव ग्राह्यः।

वस्तुतस्तु दर्शनशब्दस्य प्रत्यगभिन्नपरमात्मन्येव तात्पर्यम्। दर्शनशास्त्रस्य शब्दात्मकत्वेऽपि तदधीनशाब्दबोधस्य विषयोऽपि चिदात्मैव भवति, "शास्त्रयोनित्वात्" "तत्तुसमन्वयात्" इति शारीरकसूत्राभ्यामुपक्रमादिषड्विधतात्पर्यनिर्णायकलिङ्गैश्च सर्वेषामुपनिषद्वाक्यानामद्वितीयब्रह्मस्वरूपपरत्वात्। शाब्दबोधश्च शाब्दत्वे सप्रकारकत्वव्याप्तेरप्रामाणिकत्वात्तुरीयविषयतातिरिक्तविषयत्वानिरूपकवृत्त्यात्मकमानसबोधोऽवसेयः। तस्य शब्दप्रयोज्यतया शब्दकरणकत्वेऽपि दशमस्त्वमसीतिवत् साक्षादपरोक्षात्मविषयकत्वात् साक्षात्काररूपत्वमनुपपन्नं न भवति।

अथवा दृश्यतेऽनेनेति करणव्युत्पत्त्या चक्षुरादीन्द्रियाणां दर्शनपदार्थत्वेऽपि तत्र दृश्यते तत्त्वं येनेति योजनया दर्शनं ब्रह्मप्रतिपादकशास्त्रमेव। तत्त्वशब्दस्य ब्रह्मणि शक्तत्वात्। "तत्त्वं ब्रह्मणि याथार्थ्ये" इति कोषात्।

अपि च दृश्यतेऽनुभवविषयी क्रियते यदिति कर्मणि ल्युटापि दर्शनपदार्थ आत्मैव भवति। पक्षेऽस्मिन् ब्रह्मैव दर्शनपदार्थः। यद्यपि दृश्यते चक्षुरादीन्द्रियैर्गृह्यते इति कर्मणि ल्युटा दर्शनं प्रपञ्चस्तथापि ब्रह्मैव दर्शनपदार्थः। प्रपञ्चस्य ब्रह्मण्यारोपितत्वादारोपितस्याधिष्ठानसत्तातिरिक्तसत्ताभावात्सद्रूपेण ब्रह्मैव।

---

१. बृहदारण्यकोपनिषद्, ४.५.६. २. कठोपनिषत्, १.३

यद्यपि "करणाधिकरणयोश्चे[१]"ति पाणिनीयप्रयोगानुसारेण करणाधिकरणयोरेव भवति ल्युट्, तथापि राजभोजनाः शालय इतिवत् बाहुकादन्यत्रापि ल्युट् भवितुमर्हतीति शाब्दिकानां विचारः। तस्मात् "मुखनासिकावचनोऽनुनासिकः"[२] इत्यत्र वचने कर्मल्युन्तता स्वीकृता शेखरकृता। अपि च "असति बाधके प्रमाणानां सामान्ये पक्षपातः"[३] इति नियमेन करणाधिकरणातिरिक्तांशे बाहुलकत्वाश्रयणे करणाधिकरणातिरिक्तत्वा-विशेषादन्यत्रापि ल्युट् सम्भवात्— दृश्यते यस्मात्, यज्ज्ञानं यदधीनं तदित्यर्थः। अधिष्ठानव्यतिरेकेणास्य प्रपञ्चस्य ज्ञानमेव न सम्भवति। न ही कुत्रापि निरधिष्ठानो भ्रमः दृश्यते। यद्वा यस्मात् = यज्ज्ञानादित्यर्थः। "तस्य भासा सर्वमिदं विभाति"[४] इति च श्रुतेः।

दृश्यते प्रपञ्चो यस्मै तद्दर्शनम्। "अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्चयते" इति न्यायेन सर्वोऽपि प्रपञ्चः निष्प्रपञ्चब्रह्मावबोधनायैव विवेचितः। उक्तं हि भगवता श्रीकृष्णद्वैपायनमुनिना—

"बुद्धीन्द्रियमनः प्राणान् जनानामसृजत्प्रभुः।
मात्रार्थञ्च भावार्थञ्चात्मने कल्पनाय च।।"[५]

अत्र—"आत्मने स्वस्मै स्वज्ञानार्थं स्वोपासनार्थं यद् बुद्ध्यादीनां कल्पनं विनियोगस्तस्मै" इति वंशीधरः। "नेति नेति"[६] इत्यादिश्रुतयोऽपि एतन्निराकृत्यैव तात्पर्येण ब्रह्मणि पर्यवश्यन्ति। अपवादोऽपि अध्यारोपं विना न सम्भवतीति आत्मतत्त्वविज्ञानायैव प्रपञ्चस्य विचारः।

एवमेव दृश्यते प्रपञ्चो यस्मिन् = अधिष्ठाने तद् दर्शनम् इत्यपि भवितुमर्हति। अथवा भावल्युटा दृष्टिदर्शनमित्यपि "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते"[७] इति च श्रुतेः। पक्षेऽस्मिन् स्वप्रकाशचैतन्यमेव दर्शनशब्देनोच्यते। अतएव परमात्मैव दर्शनशब्दस्याप्यर्थ इत्येव निष्कर्षः।

## वेदान्तदर्शनम्

सर्वदा परिवर्तनशीलत्वेन प्रतीयमानयोः जीवप्रपञ्चयोर्मध्ये[८] चरमसत्यं प्रथमतः परोक्षभावेन, अनन्तरं निर्दिष्टप्रणाल्या साधनेन वा अपरोक्षेणानुभूयते येन शास्त्रेण भवति तदेव दर्शनशास्त्रम्। आस्तिकदर्शनानां मध्ये मुख्यरूपेण वेदान्तवाक्यानि

---

१. पाणिन्यष्टाध्यायी, ३.३.११७.
२. तदेव, १.१.८.
३. भुवनेशलौकिकन्यायसाहस्री, पृ. १४५.
४. मुण्डकोपनिषत्, २.२.१०.
५. श्रीमद्भागवतम्, १०.८७.२.
६. वृहदारण्यकोपनिषत्, २.३.६.
७. तदेव, ४.३.२३.
८. जीवप्रपञ्चावेव प्रत्यक्षौ, न तु शास्त्रविचारात् प्राक् ब्रह्मणः प्रत्यक्षमिति तयोर्मध्ये इत्युक्तम्।

उपनिषद्वाक्यानि वा अवलम्ब्य औपनिषत्सिद्धान्त: परिस्काररूपेण यस्मिन् दर्शने वर्तते, तदेव "वेदान्त-दर्शनम्" इति नाम्ना प्रसिद्धम्। अर्थादिदमौपनिषददर्शनमेव वेदान्तदर्शनम्। यद्यपि साधारणत: जनैर्वेदान्तदर्शनमिति कथिते सति शाङ्करभाष्यसम्मतम-द्वैतसिद्धान्तमेव मन्यन्ते मुख्यतया, तथापि वेदव्यासकृतब्रह्मसूत्रोपरि आचार्याणां नैका व्याख्योपलभ्यते। तत्सर्वं द्वैतपरं, विशिष्टाद्वैतपरं, शुद्धाद्वैतपरं, द्वैताद्वैतपरं व्याख्यासम्वलितं ब्रह्मसूत्रम् वेदान्तदर्शननाम्ना तत्तत् सम्प्रदायेषु अभिधीयते। विद्यमानेष्वपि बहुमतवादेषु वेदान्तदर्शनमिति कथनेन अद्वैतसिद्धान्त एव मुख्यतया औपनिषत्सिद्धान्त-रूपेण ज्ञाप्यते। विरुद्धवादिनोऽपि बौद्धादय: प्राचीनकाले औपनिषद्दर्शनशब्देन अद्वैतवेदान्तमेव अज्ञासिषु: इति प्रतीयते। शरीरसम्बन्धिमात्मानमवलम्ब्यैवास्य दर्शनस्य विचारविषयत्वात् "शारीरकमीमांसादर्शनमि" त्यपि कथयन्ति बुधा:।

## अद्वैतवेदान्तदर्शनम्

यत्र द्वैतमर्थात् भेदो नास्ति, तदेव अद्वैतम्। यद्वस्तु द्वयस्य भाव प्राप्नोति तदेव द्वैतम्। तथाहि—द्विधा इतं प्राप्तं द्वीतं, तस्य भाव: द्वैतम् अथवा द्वयो: भाव: द्विता, द्विता एव द्वैतम्। उक्तं हि सुरेश्वराचार्येण—

"द्विधेतं द्वीतमित्याहुस्तद्भावो द्वैतमुच्यते"[१]

एवमेव द्वयस्य भावो यत्र नास्ति तदेवाद्वैतं इति कथ्यते। "को मोह: क: शोक: एकत्वमनुपश्यत:"[२] "नेह नानास्ति किञ्चन:"[३] इत्याद्या अपरिमिता: श्रुतय: अद्वैत-वेदान्तदर्शनस्य मूलमन्त्रा:। "मृत्यो: स मृत्युमाप्नोति य इह नानेव पश्यति"[४] इत्यादीनि द्वैतनिन्दापराणि श्रुतिवाक्यान्यपि बहुधा उपलभ्यन्ते। एतदतिरिक्ता उपपत्ति: विद्वदनुभवश्चात्र प्रमाणरूपेण वर्तेते। उपनिषत्सिद्धान्तमवलम्ब्य ब्रह्मसूत्रकार भगवान् वेदव्यास: माण्डुक्य-कारिकाकार: आचार्यप्रवर: श्रीगौडपाद:, भगवद्भाष्यकारप्रभृतय: स्वनामधन्या: आचार्या: यन्मतवादं प्रतिपादितवन्त:, तदेवाद्वैतवेदान्तदर्शननाम्ना प्रसिद्धं वर्त्तते।

## वेदान्ते प्रस्थानत्रयम्

अस्य वेदान्तदर्शनस्य मुख्यरूपेण त्रीणि प्रस्थानानि (त्रय: मार्ग: उपदेशो विभागो वा) वर्त्तन्ते। तद्यथा—१. श्रुतिप्रस्थानम्, २. स्मृतिप्रस्थानम्, ३. न्यायप्रस्थान-

---

१. बृहदारण्यकवार्तिकम्, ४.३.१८०७. २. ईश., ७.

३. बृ.उ., ४.४.१९. ४. तदेव; कठ., २.१.११.

मिति भेदात्। वेदानां सारभूतः तात्पर्यस्वरूपः यदुपनिषद्भागः तदेव श्रुतिप्रस्थानम्। सर्वासामुपनिषदां साररूपेण प्रसिद्धा भगवता वासुदेवेनोपदिष्टा[१] श्रीमद्भगवद्गीतैव स्मृतिप्रस्थानरूपेण ख्याता। भगवत् श्रीवादरायणव्यासविरचितमुपनिषदर्थग्रन्थनात्मकं ब्रह्मसूत्रमेव (वेदान्तदर्शनम् शारीरकमीमांसा वा) वेदान्तशास्त्रस्य न्यायप्रस्थानरूपेण ज्ञेयम्। यतोऽत्र विचारोपपत्तिभ्यां औपनिषद्दर्शनम् सुप्रतिष्ठितम्। अत्र शारीरकपदवाच्य जीवस्वरूपनिर्णयस्य कृतत्वादिदम् शारीरकसूत्रमित्यभिधीयते।

प्रस्थानत्रयमिदं लघुप्रस्थानत्रयरूपेणापि ख्यातम्। तथा च बृहत्प्रस्थानत्रयरूपेण चित्सुखी (तत्त्वप्रदीपिका), खण्डनखण्डखाद्यम्, अद्वैतसिद्धिश्चेति ग्रन्थत्रयस्य ग्रहणम् भवति। अपि च प्रकारान्तरेण भामतीप्रस्थानम्, विवरणप्रस्थानम्, वार्तिकप्रस्थानमिति प्रस्थानत्रयस्यापि ग्रहणम् भवति इति दिक्।

## अद्वैतवेदान्तस्य परतत्त्वम्
## (स्वतःसिद्धः - निर्विशेष - अपरिणामि चैतन्यम्)

प्रस्थानत्रयभेदेन विभक्तस्यापि वेदान्तशास्त्रस्य यन्मूलसिद्धान्तः स तु एक एव। तथाहि—निर्विशेष-शुद्ध-चैतन्यस्वरूपं—ब्रह्मैव एकं सत्यवस्तु तदेव पारमार्थिकसत्यम् निरपेक्षसत्यं भवति। यतः स्वप्रकाशस्वभावः चैतन्यात्मा स्वतःसिद्धः, न प्रमाणसापेक्षः, नाप्यन्यसापेक्षः, सुतरां स एव निरपेक्षपरमार्थसत्यः। अस्य चैतन्यात्मनः प्रामाणिकत्वविषये प्रश्न एवासम्भवः, यतः चैतन्यस्यानुभवस्य वा स्वीकारं विना प्रमाणपदार्थस्यापि सिद्धिर्न भवति।[२] नास्तित्वन्त्वस्य "मम मुखे जिह्वा नास्ति" इतिवद् वदतो व्याघातदोष एव आपादयति।

निर्विशेष-निर्धर्मकस्वरूपमिदं चैतन्यं, यावद्विशेषाणां धर्माणाम्वा चिद्भास्यत्वात् चैतन्यप्रकाशस्य विषयत्वाद्वा,[३] तस्मात् परमार्थतः कोऽपि धर्मः चैतन्यस्य धर्मो भवितुं नार्हति। चिद्भास्यत्वात् घटपटादयः चैतन्यस्य धर्मा यथा न भवन्ति, तथैव सर्वेऽपि धर्माः चैतन्यप्रकाश्यत्वात् चैतन्यस्य धर्माः न भवन्ति। ब्रह्मणि आत्मनि वा

---

१. "सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः।
पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत् ॥ श्रीमद्भगवद्गीतामाहात्म्यम्-७

२. "न हि आत्मा आत्मनः प्रमाणमपेक्ष्य सिद्ध्यति, आत्मा तु प्रमाणादिव्यवहाराणामाश्रयत्वात् प्रागेव प्रामाण्यादिव्यवहारात् सिद्ध्यति।" ब्र.सू.शां.भा., २.३.७
अपि च—
आत्मानुभवमाश्रित्य प्रत्यक्षादि प्रसिद्ध्यति।
अनुभूतेः स्वतःसिद्धः काऽपेक्षा ह्यात्मसिद्धये।। सम्बन्धवार्तिकम्, १८९

३. "तमेव भान्तमनुभाति सर्वं, तस्य भासा सर्वमिदं विभाति।"

सत्यत्व-ज्ञानत्व-अनन्तत्वादय: धर्मा: मिथ्यात्व-जड़त्व-अन्तवत्वादीनां निराकरणायैव कल्पिता:, न हि ते चैतन्यातिरिक्ता: कश्चिद् धर्मविशेषा:।

चैतन्यन्त्वपरिणामि, कदापि चैतन्यस्य परिणाम: विकारो परिवर्तनम् वा न भवति। पदार्थस्य परिणाम: परिवर्तनम् वा द्वेधा भवितुं शक्यते—(१) धर्मपरिवर्तन-माध्यमेन, (२) स्वरूपपरिवर्तनद्वारेण वा। नाद्य:, चैतन्यस्य निर्धर्मकत्वात्, तस्य धर्मपरिवर्तनमपि असम्भव एव स्यात्। नापि द्वितीय:, कूटस्थत्वात् चैतन्यस्य स्वरूपपरिवर्तनेन तत्र जड़त्वाद्यापत्ति: अचैतन्यत्वापत्तिरिति भाव:। चैतन्यस्याचैतन्यत्वे सति जगति ज्ञानाभाव: स्यात्, तेन जगदान्ध्यं प्रसज्येत। तस्मात् सर्वधर्मशून्यापरिणामि खलु चैतन्यवस्तु।

ननु चैतन्यात्मा शुद्ध-चैतन्यस्वरूप-ब्रह्मैव परमार्थसत्य इति स्वीकृते सत्यपि तदेवाद्वितीयसत्यमिति कथं स्वीकृतं भवितुमर्हति? कुतो वाऽऽगतोऽयं प्रतीयमानो विचित्र: प्रपञ्च:? विद्यमानेऽस्य विश्वप्रपञ्चस्य कथमद्वितीयं भवति खल्विदं ब्रह्म? इति चेदुच्यते चैतन्यसापेक्षत्वात् प्रमाणसापेक्षत्वाद्वा प्रपञ्चस्य पारमार्थिकसत्यत्वं नास्ति, परमार्थत: सृष्ट्यपि नास्ति तस्य। पारमार्थिकसृष्टिरूपेण न किमपि वस्तु कुत्रापि विद्यते।[१] ब्रह्मण: विवर्त्तमात्र खल्वयं प्रपञ्च:।[२] तथापि प्रश्न: भवत्येव—को हेतुरस्य विवर्तस्य? कस्य समीपे प्रकाशमानोऽयं विवर्त्त:? शुद्धे निर्विशेषे ब्रह्मणि कथम्वा सम्भवत्ययं विवर्त:?

## ब्रह्मशक्ति: वा माया

समाधानप्रकारस्तूच्यते—अस्मिन् पारमार्थिके शुद्धे ब्रह्मणि चैतन्यसापेक्षहेतु: अपारमार्थिकी कश्चिदनादि—शक्तिर्विद्यते—या माया अज्ञानमित्यादिशब्दैर्व्यवह्रयते।[३] चिद्भास्यत्वात् ब्रह्मशक्ते: तस्या चिदतिरिक्ता काऽपि स्वतन्त्रसत्ता नास्ति, नापि किञ्चित् पृथक् तत्त्वम्।

अस्या ब्रह्मशक्तेरविद्याया: ब्रह्मसत्तातिरिक्तसत्ताकत्वाभावादपारमार्थिकत्वाच्च ब्रह्मसत्तामादाय व्यावहारिकसत्तामादाय वा सत्यत्वव्यवहारेऽपि स्वतन्त्रपारमार्थिकसत्ताया अभावात् अद्वितीयस्य ब्रह्मणोऽद्वैतहानिर्नास्ति। भ्रान्तिद्विचन्द्रदर्शने सत्यपि दृष्टद्वितीय-

---

१. न कश्चिज्जायते जीव: सम्भवोऽस्य न विद्यते।
एतत्तदुत्तमं सत्यं यत्र किञ्चिन्न जायते।। मा. का., ३.४८

२. प्रपञ्चो यदि विद्येत निवर्तेत न संशय:।
मायामात्रमिदं द्वैतमद्वैतं परमार्थत:।। मा.का., १.१७

३. निस्तत्त्वा कार्यगम्यास्य शक्तिर्मायाग्निशक्तिवत्। पञ्चदशी, २.४७.

चन्द्रेण चन्द्रस्याद्वैतत्वव्याकोपो यथा नास्ति, तथैव वेदान्तसिद्धान्तेऽपि। "ब्रह्मण्यविद्याशक्तौ सत्यपि न सिद्धान्तहानिर्वर्तते, तस्माज्जगत्कारणताऽपि विद्यते ब्रह्मणि"- एतत्सर्वं व्यावहारिकमविद्याधीनञ्चेति सिद्धान्तः। परमार्थतस्तु ब्रह्मण्येतत्सर्वं नास्त्येव।[1] ब्रह्मात्मा नित्यनिरञ्जनोऽद्वितीयः। अस्या मायाशक्तेरविद्याया वा आवरणशक्तिः विक्षेपशक्तिरितिभेदेन द्विविधाशक्तिर्वर्तते। आवरणशक्तिः ब्रह्मात्मनः स्वरूपमावृत्य "नाद्वितीयः ब्रह्मात्माऽस्ति, न प्रकाशते नापि भातीत्येवं भ्रान्तप्रतीतिं व्यवहाराञ्च जनयति। विक्षेपशक्तिस्तु ब्रह्मात्मनि "अहं कर्त्ता, अहं भोक्ता, अहं सुखी, अहं दुःखी" इत्यादिप्रकारेण विभ्रमं जनयति, सैव च मिथ्या जीवत्वेश्वरत्वादि विभ्रममप्युत्पादयति।[2]

छान्दोग्योपनिषदि "सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्—तदैक्षत बहुस्यां प्रजायेय, तत्तेजोऽसृजत"[3] इत्यादिनाऽद्वितीयब्रह्मणः सृष्टिप्रक्रिया या उक्ता, अस्याऽयमभिप्रायः—सृष्टेः प्राक् "एकमेवाद्वितीयम्" अर्थात् सजातीय-विजातीय-स्वगतभेदत्रयरहितं = एकमात्रं "सद्" एव आसीत्। अत्र भाष्यकारवचनमनुधावनीयम्।[4] तथाहि—एकमेवेति स्वकार्यभावापन्नम् किमपि भिन्नं नास्तीत्यभिप्रयेणोक्तं हि श्रुतिः "एकमेवे"ति। "अद्वितीयमिति" यथा मृत्तिकां घटाद्याकारेण परिणमयितुं मृद्व्यतिरेकेण कुम्भकार-चक्र-चीवरादिनिमित्तकारणं दृष्टं भवति, एवमेव सद्भिन्नं सतः सहकारिकारणं द्वितीयं वस्त्वन्तरं प्राप्तं निषिध्यतेऽद्वितीयमिति। "तदैक्षत बहुस्यां प्रजायेयेति तत्तेजोऽसृजत—"[5] इत्यस्याभिप्रायो यथा—"सत्" शब्देनानभिव्यक्तमायाशक्तियुक्तः चैतन्यात्मा ब्रह्मैवावगम्यते। अन्यथा तस्येक्षणं बहुभवनञ्चासम्भवमेव मायाशक्तेः व्यावहारिकस्य जगतः व्यावहारिकसृष्टिः भवति। अस्य किञ्चिदपि न स्वयं सिद्धोऽस्ति, नापि पारमार्थिकः भवति। आकाशे मेघक्रीडेव ब्रह्मणि मायाशक्तेः क्रीड़ा प्रचलति। ब्रह्मातिरिक्तस्य वस्तुनः अभावात्, ब्रह्मैव मायाशक्तेरविद्याशक्तेराश्रयः।[6] परन्त्वत्र आधारत्वमाश्रयत्वम्वा कुण्डे वदरि इव न वास्तविकमपि तु यथा रज्जुः अध्यस्तसर्पस्याश्रयः अधिष्ठानं वा तथैवाध्यासिकमाश्रयत्वमत्रापि। अतः चैतन्यस्वरूपे ब्रह्मणि सविलासमाया अध्यस्ता। वस्तुन्यवस्तु आरोपितरूपेणाध्यासिकतादात्म्यसम्बन्धेन तिष्ठति। वस्तु

---

१. अविद्यास्येत्यविद्यायामेवासित्वा प्रकल्प्यते।
ब्रह्मदृष्ट्या त्वविद्येयं न कथञ्चन युज्यते।। सम्बन्धवार्तिकम्, ३६.

२. आच्छाद्य विक्षिपति संस्फूरदात्मरूपं जीवेश्वरत्वजगदाकृतिभिर्मृषैव।
अज्ञानमावरण-विभ्रमशक्तियोगादात्ममात्रविषयताश्रयताबलेन।। सं०शा०, १.२०.

३. छान्दोग्योपनिषत्, ६.२.१,३.

४. छान्दोग्योपनिषत्, शाङ्करभाष्यम्, ६.२.१.

५. छान्दोग्योपनिषत्, ६.२.३.

६. "आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला।" संक्षेपशारीरकम्, १.३१९.

ब्रह्मैवावस्तुभूतस्य सत्कार्याज्ञानस्याध्यासिकसम्बन्धेनाधिष्ठानमस्ति।[१] अस्मिन् सत्येऽधिष्ठाने मायाद्वारा वा या सृष्टिः स एवाध्यारोपः। विचारेण ज्ञानदृष्ट्या च कार्यमात्रं कारणादभिन्नं ज्ञात्वा अध्यारोपितं प्रपञ्चं वस्तुस्वरूपमेवेति बोध एवापवाद इति विज्ञेयम्।[२]

## अज्ञानस्य भावरूपत्वम्

मायैव ग्रन्थान्तरे पर्यायरूपेण वाऽविद्या-अज्ञानमित्यादिभिः शब्दैर्व्यवहृता भवति। सा तु अनिर्वचनीया, यतः ज्ञानानन्तरं निवृत्तत्वात् सत्त्वेन कथयितुं न पार्यते, अहमज्ञ इत्यनुभूयमानत्वात् त्रिगुणात्मकत्वात्, भावरूपत्वाच्च नास्तीत्यपि वक्तुं न शक्यते अर्थात् साऽविद्या सती भवितुं नार्हति, यतः बाध्यमानत्वात्। नाप्यसती प्रत्यक्षतयाऽनुभूयमानत्वात्। सत्त्वासत्त्वयोरेकदा एकत्रासम्भवादुभयात्मकत्वमपि भवितुं नार्हति। सुतरां सदसद्भ्यामतिरिक्ताऽप्यनिर्वचनीयकोट्यामेव परिगणनीया भवति। अस्य लक्षणत्वेन वेदान्तसारकाराः श्रीसदानन्दयोगीन्द्राः कथयन्ति— "सदसद्भ्यामनिर्वचनीयं त्रिगुणात्मकं ज्ञानविरोधिभावरूपं यत्किञ्चिद्।"[३] इति।

नैयायिकाः ज्ञानस्याभावमेवाज्ञानमिति अज्ञानमभावरूपमिति सप्तमपदार्थत्वेन परिगणयन्ति। नैतद् युक्तम्। यतः तेषामेव तन्त्रेऽभावज्ञानम्प्रति प्रतियोगिज्ञानस्य कारणत्वमङ्गीकृतम्। अर्थात् प्रतियोगिज्ञानं विना अभावज्ञानस्य सम्भवो नास्तीति तेषामाशयः। ज्ञानस्याभावमेवाज्ञानमिति कथनेऽत्रापि उक्तरीत्या प्रतियोगिनः "ज्ञानस्य" ज्ञानमपेक्षते। ज्ञानस्य ज्ञानं विद्यमाने पुनः ज्ञानस्याभावोऽस्तीति वदतो व्याघातापत्तिः। तस्मात् ज्ञानविरोधि अनिर्वचनीयं भावरूपमेवाज्ञानमिति युक्तम्।

### भावरूपाज्ञाने प्रत्यक्षं प्रमाणम्

अपि चोक्ताज्ञानस्य सिद्धिः प्रत्यक्षात्मकप्रमाणत्रयेणापि भवितुमर्हति। तथाहि— प्रथमप्रकारस्तावत् "अहमज्ञः" इत्यनुभव आत्माश्रितत्वेनाज्ञानस्य साधकं सामान्य-प्रत्यक्षरूपम्। "मामन्यञ्च न जानामि" इत्यत्रात्मविषयकत्वात् भिन्नविषयकस्याज्ञानस्य सामान्यतया प्रत्यक्षं भवति।

---

१. "अज्ञानस्याश्रयो ब्रह्मेत्यधिष्ठानतया जगुः"

२. "अपवादो नाम रज्जुविवर्त्तस्य रज्जुमात्रत्ववत् वस्तुविवर्त्तस्यावस्तुनोऽज्ञानादेः प्रपञ्चस्य वस्तुमात्रत्वम्" (वेदान्तसार : ६०)
"अधिष्ठानावशेषो हि नाशः कल्पितवस्तुनः" (सूतसंहिता, ४.२.८.)

३. वेदान्तसार- १३.

द्वितीयप्रकारस्तु—"त्वदुक्तमर्थं न जानामि" एवम्प्रकारेण विषयविशेषिताज्ञानस्य साधकं विशेषप्रत्यक्षं भवति।

तृतीयप्रमाणप्रकार: पुन:–"एतावन्तं कालं सुखमहमस्वाप्सम्, न किञ्चिदवेदिषम्" एवं जाग्रत्कालीनस्मरणबलात् सिद्धं सुषुप्तिकालीनसाक्षिप्रत्यक्षमपि अज्ञानं साधयति। यद्यपि साक्षिप्रत्यक्षद्वारा वस्तुविषयकप्रमा नोत्पद्यते, शुक्तिरजतादौ व्यभिचारदर्शनात्, तथापि "अज्ञाने साक्षिप्रत्यक्षं प्रमाणमिति" कथनेनाज्ञानस्यासत्त्वापादनं निवर्तते अपि च साक्षिप्रत्यक्षेणाज्ञानस्य सत्तासिद्धिर्भवति। सा च सत्ता व्यावहारिकी, अबाधितत्त्वरूपपारमार्थिकत्वाभावात्।

## भावरूपाज्ञानेऽनुमानं प्रमाणम्

भावरूपाज्ञानसाधकमनुमानप्रमाणमप्यस्ति; तच्च विवरणे प्रदर्शितम् तत्किल अद्वैतसिद्धिकारैरपि आद्वैतसिद्धौ[१] अनुदितम्। तद्यथा—"विवादपदं प्रमाणज्ञानम्, स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकम्, अप्रकाशितार्थ-प्रकाशकत्वाद् अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावत्" इति। विद्यारण्यस्वामिपादै:[२] चित्सुखाचार्यैश्चापि तदेवाङ्गीकृतम्।

अत्र ज्ञानमात्रस्य पक्षत्वस्वीकारेऽनुवादज्ञाने हेत्वसिद्धिर्भवति, यत: अनुवादज्ञानं पूर्वप्रकाशितार्थस्य ज्ञानत्वात् "न त्वप्रकाशितार्थस्य ज्ञानं तत्"। अत: प्रमाण-ज्ञानमित्युक्तम्।

विषयेन्द्रियसंयोगादेव भवति घटादे: प्रमात्मकं ज्ञानम्। विरोधिवृत्युत्पत्तिं विना प्रदीपशिखावत् तस्य ज्ञानधाराबाहुल्यं[३] भवति। इयं ज्ञानधारा सजातीयत्वात् प्रमाणज्ञानं भवति। उत्तरोत्तरां धारां प्रति पूर्वपूर्वधाराया: वस्त्वन्तरत्वात् धारावाहिकज्ञाने पक्षत्वापत्ति:, अतस्तद्व्यावृत्तये विवादपदमिति। धारावाहिकज्ञाने विवादाभावात् नातिव्याप्ति:। वस्तुपूर्वकमित्येव कथिते सति प्रमाणज्ञानस्याश्रयीभूतैरात्मा[४] अन्त:करणं[५] तद्वृत्त्यादिभि: सिद्धसाधनता स्यादिति वस्त्वन्तरेत्युक्तम्।

अत्र स्वाश्रयातिरिक्तचक्षुरादिसामग्रीनिवारणाय स्वदेशगतेति विशेषणम्। कार्यमात्रं प्रति अदृष्टस्य (धर्म + अधर्मदि:) कारणत्वात् सिद्धसाधनमर्थान्तरं वा न स्यादिति स्वनिवर्त्यपदम्। प्रमाणज्ञानेन धर्मादे: निवृत्ति: न भवति, योग्यविभुगुणानां

---

१. अद्वैतसिद्धि :, पृ. ५६२ (निर्णयसागरसंस्करणम्)
२. वि.प्र.संग्रह, पृ. ५८ (अच्युतग्रन्थमालाकार्यालय)
३. अत्र परमतमवलम्ब्य स्वमतस्थापनं विद्यते। परं प्रति अनुमानप्रमाणस्यात्र प्रयुक्तत्वात्।
४. न्यायमतानुसारेणात्र आत्मेत्युक्तम्।
५. वेदान्तमतमवलम्ब्यान्त:करणेत्युक्तम्।

स्वोत्तरवर्तिगुणनाश्यत्वेनोत्तरज्ञानेन पूर्वज्ञानस्य निवृत्तिर्भवति, अपि चोक्तप्रमाण-ज्ञानात्पूर्वमपि भवति, तस्मादस्य व्यावर्त्तये स्वविषयावरणपदं विशेषणम्। पूर्वज्ञानं स्वनाशकोत्तरज्ञानस्य विषयं नाच्छादयति, एवमेव कार्यम्प्रति प्रागभावस्य कारणत्वम्। उक्तविशेषण-विशिष्टप्रागभावं गृहीत्वा पूर्वोक्तसिद्धसाधनमर्थान्तरं वा न स्यादिति "स्वप्रागभावव्यतिरिक्त" इति विशेषणम् प्रयुक्तमिति दिक्।

## भावरूपाज्ञाने श्रुतिप्रमाणम्–

भावरूपाज्ञानस्य प्रतिपादनाय श्रुतिप्रमाणमप्युपलभ्यते। तथाहि—छान्दोग्येऽ-ष्टमप्रपाठके "तद्यथाऽपि हिरण्यं निधिनिहितमक्षेत्रज्ञा उपर्युपरिसञ्चरन्तो न विन्देयुरेवमेवेमा: सर्वा: प्रजा: अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन प्रत्यूढा"[१] इति श्रुति: ब्रह्मात्मैक्यबोधप्रतिबन्धकरूपेणानृतं ब्रुवाणा भावरूपाज्ञानस्यापि प्रमाणत्वेन विद्यते। "अनृतेन प्रत्यूढा:" इत्यत्र "अनृत-प्रत्यूढ" इति शब्दाभ्यां यस्याऽत्यन्धकाररूपावरण-शक्ते: स्वरूपं निरूपितं, तदेवाविद्या। भूमिगतसुवर्णराशिं यथा सामान्यजना: तदुपरिनिव-समाना अपि न जानन्ति एवमेव प्रत्यहं सुषुप्त्यवसरे प्राणिन: ब्रह्मणा सह एकीभूता: भवन्तोऽपि स्वीय ब्रह्मरूपतां न लभन्ते। एवमनृतत्त्वं भावरूपामविद्यां विहायऽन्यद्भवितुं नार्हति। अस्याऽविद्याया: ज्ञाननिवर्त्यत्वेऽपि "भूयश्चान्ते विश्वमायानिवृत्ति"[२] इति श्रुतिप्रमाणमस्ति। "प्राप्तौ सत्यां निषेध:" इति नियमानुसारेणोक्तश्रुतिप्रमाणबलादपि भावरूपस्याज्ञानस्य सिद्धिर्भवति। "नासदासीन्नो सदासीत्"[३] इत्यादि श्रुत्याऽज्ञानस्य पारमार्थिकत्वमलीकत्वञ्च निरस्य "तत्र आसीत्"[४] इत्यनेन तस्य व्यावहारिक-त्वमनिर्वचनीयत्वञ्च प्रतिपादयति। अत "अनृतेन प्रत्यूढा"[५] "नीहारेण प्रावृता:"[६] "तत्र आसीत्" "मायान्तु प्रकृतिं विद्याद्"[७] "अजामेकां लोहितशुक्लकृष्णाम्"[८] "अविद्यायामन्तरे वर्तमाना:"[९] "भूयश्चान्ते विश्वमायानिवृत्ति" रित्याद्या: श्रुतयो भावरूपा-ज्ञाने प्रमाणमिति दिक्।

## भावरूपाज्ञानेऽर्थापत्तिप्रमाणम्–

भावरूपस्याज्ञानस्य सिद्ध्यर्थमर्थापत्तिप्रमाणमपि वर्तते। तथाहि—जीवस्य निरवच्छिन्नब्रह्मानन्दाप्रकाशान्यथानुपपत्तिरूपं[१०] प्रमाणमज्ञानं साधयति। जीवब्रह्मणोरभेदस्तु

---

१. छान्दोग्योपनिषत्, ८.३.२.
२. श्वेताश्वतरोपनिषत्, १.१०.
३. ऋग्वेद:, १०. ११.१२९.
४. तदेव
५. छान्दोग्योपनिषत्, ८.३.२.
६. तदेव, ४.१०.
७. ऋग्वेद:, ८.७.१७.
८. तदेव, ४.५.
९. कठोपनिषत्, २.५.
१०. अद्वैतसिद्धि:, पृ. ५७३ (निर्णयसागरप्रेस:)

श्रुति[१]-युक्ति[२]-अनुभवमाध्यमेनाचार्यैः[३] बहुषु स्थलेषु प्रतिपादितः। अयमेव वेदान्तस्य सिद्धान्तः। नापि निरवच्छिन्नानन्दस्य प्रकाशमानप्रत्यङ्मात्रत्वादप्रकाशमानत्वानुपपत्तिरिति शङ्क्यम्, शरीरप्रतियोगिकस्यात्मनि स्वरूपसम्बन्धेन भेदस्यात्मत्वेन प्रकाशमानत्वेऽपि भेदत्वेनाप्रकाशमानत्ववद् शुद्धचित्स्वरूपेण प्रकाशमानत्वेऽपि निरवच्छिन्नानन्दरूपेणाविद्यावशादप्रकाशमानत्वोपपत्तेः। जीवब्रह्मणोराविद्यकभेदस्य स्वीकृतत्वात्।

अपि च भ्रमस्य सोपादानत्वान्यथानुपपत्तिरपि अविद्यायां प्रमाणम्। अन्तःकरणस्य ज्ञानजनने विषयगतप्रमाणव्यापारसापेक्षत्वेन प्रमाणव्यापारशून्ये शुक्तिरूप्यादौ ज्ञानाजनकत्वात्, सादित्वेनानादिभ्रमपरम्परानुपादानत्वाच्च नोपादानत्वमन्तःकरणस्य भवितुमर्हति। ब्रह्मणश्चापरिणामित्वान्न भ्रमोपादानत्वम्।[४] ननु विवर्ताधिष्ठानत्वेन शुक्त्यादेरेवोपादानत्वमिति चेदुच्यते, अज्ञानं विना अतात्त्विकान्यथाभावलक्षणस्य विवर्तस्यैवासम्भवात्, शुक्त्यादेरधिष्ठानावच्छेदकतया विवर्ताधिष्ठानत्वासम्भवात्। एवम्प्रकारेणार्थापत्तिप्रमाणेनापि भावरूपस्याज्ञानस्य भवति सिद्धिः।

अज्ञानस्याभावरूपत्वस्वीकारेऽसतो सज्जायते इति औपनिषत्सिद्धान्तविरुद्धं बौद्धैकदेशीमतमापद्यते, तस्यैव निखिलप्रपञ्चम्प्रति परिणाम्युपादानत्वात्। नैतत्सारम्, उपर्युक्त श्रुति-युक्ति-अनुभवविरोधात्।

अपि चाज्ञानं नाभावरूपं, आवरकत्वात् पटवत्। अभावपदार्थः कदाचित् कस्याप्यावरको न भवति। भावपदार्थस्यैवावरणशक्तिमत्वं भवति हि लोके। उक्तं हि भगवता वासुदेवेन—

"अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः"[५]

अत्राज्ञानस्यावरकत्वं श्रीभगवान् वासुदेव आह। अज्ञानस्य भावरूपत्वं उक्तं हि संक्षेपशारीरके—

नाभावताऽस्य घटते वरणात्मकत्वा-
न्नाभावमावरणमाहुरभावशौण्डाः।
अज्ञानमावरणमाह च वासुदेव-
स्तद्भावरूपमिति तेन वयं प्रतीमः।।[६]

तस्मात् अज्ञानस्य भावरूपत्वमेव सुनिश्चितमिति सिद्धम्।

---

१. श्रुतिः—"तत्त्वमसि" "ब्रह्मवेद ब्रह्मैव भवति"।
२. युक्तिः—ब्रह्मभिन्नं सर्वं मिथ्या, ब्रह्मभिन्नत्वादित्यादि।
३. अनुभवः—जीव ब्रह्मैव नापरः।
४. ब्रह्मणि जगत्प्रति विवर्तोपादानत्वे विद्यमानेऽपि परिणाम्युपादानत्वं नास्ति विवर्त्तोपादानत्वमप्याविद्यकमेव।
५. श्रीमद्भगवद्गीता, ५.१५.
६. संक्षेपशारीरकम्, १.३२०.

## दृग्दृश्ययोः विवेकः

अद्वैतवेदान्तसिद्धान्ते दृक्-दृश्यञ्चेति पदार्थद्वयं स्वीक्रियते। तत्र दृक्पदार्थो नाम स्वप्रकाशः (अनन्याधीनप्रकाशः) शुद्धचैतन्यस्वरूपः आत्मा। अयं खलु स्वरूपतः स्वतःसिद्धः अद्वितीयश्च। एतद्द्वारैवान्ये पदार्थाः प्रकाशिताः सिद्धाश्च भवन्ति। चैतन्यस्वरूपः दृक्पदार्थस्तु केनापि प्रमाणेन भिन्नेन वोपायेन प्रकाशितः सिद्धश्च भवितुं नार्हति। उक्तं हि श्रुतौ—"तमेव भान्तमनुभाति सर्वम्, तस्य भासा सर्वमिदं विभाति।"[१] यतः प्रत्यक्षादीनि प्रमाणानि चैतन्येनैव सिद्ध्यन्ति, तस्मात् सर्वाणि प्रमाणानि पूर्वसिद्धं चैतन्यात्मानं (दृक्पदार्थम्) साधयितुं प्रमाणयितुं वा समर्थानि न भवन्ति। उक्तं हि सुरेश्वराचार्यैः—

"आत्मानुभवमाश्रित्य प्रत्यक्षादिप्रसिध्यति"[२]

अपि च भाष्यवार्तिकेऽपि—

"प्रमाता च प्रमाणञ्च प्रमेयो निश्चितिस्तथा।
यत्सांनिध्यात्प्रसिद्ध्यन्ति तत्सिद्धौ किमपेक्षते।।"[३]

तस्मात् चैतन्यात्मा दृक्पदार्थो स्वतःसिद्धो भवति। अयं पुनः कालत्रयाबाधितः कालत्रये एवाविनाशी–अविकारी इति पारमार्थिकस्वरूपो भवति। दृग्दृश्ययोर्विवेकायोक्तं हि भगवत्पादैः[४]—

"रूपं दृश्यं लोचनं दृक् तद्दृश्यं दृक्तु मानसम् ।
दृश्या धीवृत्तयः साक्षी दृगेव न तु दृश्यते ।।"[५]

अपरो दृश्यपदार्थो नाम चिद्भास्यः सकलजड़पदार्थः। अज्ञानमज्ञानेन व्याप्तञ्चाखिलाज्ञानकार्यञ्चाकाशादिसकलजगत्प्रपञ्चोऽस्य दृश्यपदार्थस्यैवान्तर्गतो भवति। अद्वैतवेदान्तसिद्धान्तेऽज्ञानं (अविद्या) तस्य कार्यं यद् विश्वप्रपञ्चः सर्वं दृक्पदार्थे चैतन्येऽध्यस्तत्वादज्ञानकल्पितत्वाद्वा अपारमार्थिकं मिथ्या एव भवति। अर्थात् सदसद्विलक्षणमेव तस्य स्वरूपमिति। पारमार्थिकसत्यत्वाभावेऽप्यस्य प्रपञ्चस्य व्यावहारिकसत्यत्वमवश्यस्वीकार्यं[६] भवति। अन्यथा तदन्तर्गतेन गुरुशास्त्रान्तःकरणसहायै[illegible]रुपासनादेर-

---

१. कठोपनिषत्, २.५.१५.
२. सम्बन्धवार्तिकम्, १८९.
३. बृहदारण्यकोपनिषद्भाष्यवार्तिकम् १.४.८७.
४. वाक्यसुधायाः लेखकविषयेऽस्ति मतभेदः। प्रायशः सम्पादकाः ग्रन्थोऽयं श्रीमच्छङ्करभगवत्पादविरचित इति स्वीकुर्वन्ति। परन्त्वस्य ग्रन्थस्य संस्कृतटीकाकारः श्री ब्रह्मानन्द भारती श्री भारतीतीर्थस्येयं रचनेति स्वकीयायां टीकायां कथितवान्—"श्री भारतीतीर्थगुरुप्रकरणप्रतिपाद्यमर्थं संक्षिप्य प्रथमश्लोकेन तावद्दर्शयति" इति।
५. वाक्यसुधा- १.
६. विचारोऽयं विवरणप्रस्थानुसारेण वर्तते। भामतीकारास्तु व्यावहारिकसत्तां नाङ्गीकुर्वन्ति।

सम्भवः, नापि भवति तत्त्वज्ञानलाभः परमपुरुषार्थश्च, पूर्णानन्दस्वरूपप्राप्तेरसम्भवात्, तत्त्वसाक्षात्काराय गुरुशास्त्रान्तःकरणवृत्तेरावश्यकत्वात्। साक्षिसिद्धः प्रमाणसिद्धश्चायं दृश्यपदार्थः। अज्ञानमन्तःकरणम् तस्य ज्ञानसुखादयः धर्माश्च सर्वे साक्षिसिद्धाः, आकाशादयः विश्वप्रपञ्चास्तु प्रत्यक्षानुमानागमादिभिः प्रमाणैः सिद्धाः। एते दृश्यपदार्थाः कारण-सूक्ष्म-स्थूलभेदात् अव्याकृताः अमूर्त्ताः मूर्ताश्चेति त्रिविधाः भवन्ति। दृक् चैतन्यस्याभासप्रतिबिम्बयुक्ता निखिलमूर्त्तामूर्त्तयोः बीजशक्तिरूपा याऽविद्या सैवाव्याकृता। अस्याः सकाशादेव सूक्ष्म-स्थूलरूपस्यामूर्तमूर्त्तरूपस्य प्रपञ्चस्य सृष्टिर्भवति।

उक्तं हि प्राक् यदविद्या-अन्तःकरणं तद्धर्मसुखदुःखादयश्च सर्वे साक्षिसिद्धाः। साक्षी नाम दृक्-चैतन्यस्यैव प्रकाशविशेषः। दृक्पदार्थः स्वरूपतः एकत्वेऽपि दृश्यान्तर्गतस्याविद्याऽन्तःकरणाद्युपाधेः सम्बन्धवशात् त्रिविधो भवति। ईश्वरः जीवः साक्षी एते त्रयः एकस्यैव दृक्चैतन्यस्य त्रिविधा उपाधिकृताः भेदाः भवन्ति। उक्तं हि सिद्धान्तविन्दौ—"अविद्यात्मकत्वात् त्रयाणां तुरीयस्तुदेकोऽवशिष्टश्शिवः केवलोऽहम्।"[१] तत्र कारणीभूता या माया, तत्र प्रतिबिम्बितं यत् दृक् चैतन्यं (आत्मा = ब्रह्म) तदेवाज्ञानोपाधिकृत ईश्वरः। अन्तःकरणे प्रतिबिम्बितं यद्दृक्चैतन्यं तदेव जीवः, अन्तःकरणतत्संस्कारावच्छिन्नाज्ञाने प्रतिबिम्बितं दृक्चैतन्यम्वा। मतेऽस्मिन् ईश्वरोऽपि जीव एव। अनयोरुभयप्रतिबिम्बयोः बिम्बभूतं यद्दृक्चैतन्यं तदेव साक्षी। वार्त्तिककारास्तु ईश्वरः बिम्ब एव न तु प्रतिबिम्बः, तेषां मते बिम्बभूत ईश्वर एव साक्षी इति स्वीकुर्वन्ति। मतेऽस्मिन् ईश्वरः जीवश्चेति भेदेन दृक्पदार्थः द्विविधः। साक्षी तु ईश्वर एव।

ननु ईश्वरजीवाभ्यां पृथक् साक्षि-स्वीकारे कोऽवसर इति चेदुच्यते— यः प्रमाता सुखी-दुःखी जीवः सैव प्रकृतः आत्मेति वक्तुं न पार्यते, विकारीत्वात्। जीवगतसुखदुःखादिरूपः यद्विकारः तस्य च द्रष्टा स्वयं न भवितुं शक्नोति, कर्तृकर्मविरोधात्। तस्मात् प्रमातुः जीवस्य स्वीयविकारस्य द्रष्टारूपेण साक्षी अवश्यं स्वीकरणीयः। उक्तं हि सिद्धान्तविन्दौ—"विकारित्वेन स्वसाक्षित्वानुपपत्तेर्दृश्यस्यास्य द्रष्टृत्वाभावात्।"

## महावाक्यविचारः

अद्वैतवेदान्तसम्प्रदाये मुख्यतया उपनिषदुक्तं महावाक्यचतुष्टयं स्वीकृतमस्ति। तानि च "तत्त्वमसि",[२] "अहं ब्रह्मास्मि",[३] "अयमात्मा ब्रह्म",[४] "प्रज्ञानं ब्रह्म"[५]

---

१. सिद्धान्तबिन्दुः ८.

२. छान्दोग्योपनिषत्, ६.८.७.

३. बृहदारण्यकोपनिषत्, १.४.१०.

४. माण्डुक्योपनिषत्, २.

५. ऐतरेयोपनिषत्, ३.३.

इत्याख्यानि। उपनिषत्सु यानि वाक्यानि साक्षादेव ब्रह्मसाक्षात्कारप्रतिपादकानि तान्येव महावाक्यशब्देनाभिहितानि। तस्मात् "संज्ञानं ब्रह्म"[१] "सर्वं खल्विदं ब्रह्म"[२] इत्यादीन्यपि वाक्यानि महावाक्यत्वेन निर्णितानि। भवन्ति हि जीवब्रह्मणोः साक्षादभेदपराणि खल्वेतानि महावाक्यानि। अर्थात् महावाक्यद्वारा साक्षादेव ब्रह्मसाक्षात्कारो जन्यते। तद्विषयस्य ऐक्यरूपब्रह्मणः अपरोक्षत्वात्। अपरोक्षं नाम अपरोक्षार्थविषयज्ञानमिति। तस्मात् "तं त्वौपनिषदं पुरुषं पृच्छामी"ति ऋषियाज्ञवल्क्यो शाकल्यं पृच्छति। यथा "अब्भक्षः" कथनेन यः अम्मात्रं भक्षयति स उच्यते, तथैव उपनिषद्भिरेवावगम्यत्वात् ब्रह्मणः औपनिषत्त्वमुच्यते। सम्बन्धग्रहणाभावात् ब्रह्मणि अनुमानादिकं न प्रवर्तते।

बोधप्रकारश्चैवम्—प्रथमतः तत्त्वंपदयोः सामानाधिकरण्यज्ञानं ततः विशेषण-विशेष्यभावज्ञानं ततः तयोरैक्यविरोधप्रतीतिः ततः लक्षणाज्ञानं ततः ऐक्यस्य साक्षात्कारः। तथाहि—"तत्त्वमसी"त्यत्र "तत्" "त्वम्" इतिपदयोः इत्येकविभक्त्यन्तत्वात् सामानाधिकरण्यं बोध्यते। अत्र "तत्" पदस्य वाच्यार्थरूपेण मायावच्छिन्न ईश्वर उच्यते। लक्षार्थत्वेन तु "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" (छा.उ., ६·२·१) इति वाक्यगतं स्वगतादिभेदशून्यं नामरूपरहितं यत्सद्वस्तु तदेवोच्यते। "त्वं" पदस्यापि वाच्यार्थरूपेणान्तःकरणावच्छिन्नचैतन्यं जीव उच्यते। लक्ष्यार्थत्वेन तु देहेन्द्रियातीतं शरीरेन्द्रियोपलक्षितस्थूलादिशरीरत्रयसाक्षितया तद्विलक्षणं सद्वस्त्वेव ग्राह्यम्। अत्र वाच्यार्थयोः स्पष्टविरोधेऽपि लक्ष्यांशे विरोधो नास्ति। अत्र जहदजहल्लक्षणया (भागत्यागलक्षणया वा) उभयोर्वाच्यांशं त्यक्त्वा, असिपदेन तयोः लक्ष्यार्थयोः ऐक्यप्रतिपत्तिर्बोध्या। एवमेव अन्येष्वपि महावाक्येषु ऐक्यप्रतिपत्तिर्बोधव्या।

अत्र उभयोः संसर्गज्ञानं नास्ति, नीलमुत्पलमितिवत् पदार्थयोर्भेदाभावात्। अपि तु अखण्डमेकं वस्तु भासते, भेदभ्रमोऽपि भानकाल एव निवर्तते। अस्मिन् बोधे नीलमुत्पलमित्यादाविव पदार्थयोः संसर्गो न भासते। यतो हि "तत्त्वं" पदाभ्यां जहदजहल्लक्षणया एकमेव प्रकृतं ब्रह्मतत्त्वं प्रतिपाद्यते, न चैतस्मिन् स्वस्य स्वेन सम्बन्धः स्वं न स्वीयमित्यनुभवात्।

अद्वैतसिद्धान्तमसहमानाः केचन "तत्त्वमसि[३]" इति महावाक्यं द्वैतपरं योजयन्ति। तथाहि—जीवब्रह्मणोरभेदो नैव सम्भवति, भिन्नधर्मित्वात् "तत्त्वमसी"ति वाक्यस्यापि

---

१. काशीसुमेरुपीठाचार्याः काञ्चिकामकोटिपीठाचार्याश्च संन्यासपरम्परायां महावाक्योऽयं कथयन्ति। यद्यपि शब्दतः वाक्योऽयं मया श्रुतौ न दृष्टस्तथापि ऐतरेयोपनिषदि (३.२) अर्थतः वाक्योऽयं वर्तते।

२. छान्दोग्योपनिषत्, ३.१४.१. ३. छान्दोग्योपनिषत्, ६.८.७.

भेदपरत्वेन प्रतिपादनसम्भवाच्च। तस्मै परमेश्वराय त्वं समर्पणीयोऽसि, यद्वा तस्माद्विश्वकारणाद्भगवतः त्वमुत्पन्नोऽसीति, अथवा तस्मिन् विश्वाधिष्ठाने ब्रह्मणि त्वमाश्रितोऽसीत्यर्थः। "आत्मा अतत्त्वमसि" इति वा पदच्छेदः कर्तव्यः, अतदित्यत्र च नञर्थो भेदः। तथा च उद्दालकः स्वपुत्रं श्वेतकेतुमुपदिशति, "यः स्वातन्त्र्यादिगुणोपेतः स एव परमात्मा," त्वन्तु अतत् तस्मात्परमात्मनो भिन्नः परतन्त्रो जीवोऽसीत्यर्थ उपेयः। एवं "तत्त्वमसि" इति महावाक्यात् जीवेश्वरयोर्भेद एव सिद्ध्यति।

अत्रोच्यते, अविचाररमणीयोऽयं सिद्धान्तः। अपरिशीलितोपनिषदां परदर्शितदर्शिनामविवेकिनामेवैवं व्यामोहः। तथाहि—"अनन्यलभ्यो हि शास्त्रार्थः"[१] इति न्यायेन शास्त्रादतिरिक्तेन प्रमाणेन यत्र लभ्यते तत्रैवास्ति तात्पर्यम् शास्त्रस्य। प्रत्यक्षादिप्रमाणसिद्धस्य जीवब्रह्मणोर्भेदस्य पुनः भेदसिद्ध्यर्थं शास्त्रस्य प्रयत्नः सर्वथैवायुक्तः, सिद्धसाधनापत्तिश्च। अपि च "तत्त्वमसि" महावाक्ये द्वैतवादिविहितः पूर्वोक्तो भेदार्थः तात्पर्यभूताद्वैतार्थबोधकोपक्रमोपसंहारादिगर्भित—महाप्रकरणविरुद्धत्वात्-अप्रामाणिकतया कथमपि नोपादेयः। तथाहि—अत्र महाप्रकरणे उपक्रमरूपेण गुरुकुलात् वेदानधीत्य गृहमागतं स्तब्धं मानिनं स्वपुत्रं श्वेतकेतुम्प्रति पितुरुद्दालकस्य तत्स्तब्धताद्यपनोदनायायमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपवृंहितः प्रश्नः"उततमादेशमप्राक्ष्यः" इत्यनन्यलभ्याद्वैततत्त्वविषयक एवं स्पष्टतयाऽवगम्यते। न हि जीवब्रह्मणोः वास्तविकभेदानङ्गीकारे एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा कथमपि सङ्गच्छेत। मृदादिदृष्टान्तमनुरुध्यविवर्तवादमाश्रित्यैव एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा समर्थनीया, न तु परिणामवादाभिप्रायेण। न हि मृदः घटादयः भिद्यन्ते, न चाभिन्नाः, न वा भिन्नाभिन्नाः, परन्त्वनिर्वचनीया एव। उपादानस्वरूपविज्ञाते सति उपादेयवस्तूनामपि स्वरूपविज्ञानं भवत्येव, तदतिरिक्तत्वाभावात्। एतदेव प्रतिपादनाय मृदादिदृष्टान्तः प्रदर्शितः। न तु परिणामाभिप्रायकं मृदादिदृष्टान्तमिति ज्ञेयम्। एवं सति दार्ष्टान्तिकं ब्रह्माऽप्यविकृतं समर्थितं भवति। न हि नित्यस्य निष्कलस्य परमात्मनः सर्वात्मनैकदेशेन वा परिणामः सम्भवति, नित्यत्वादविकृतत्वात् निरवयव(निरंश)त्वाच्च।

---

१. शास्त्रस्वरूपमुक्तं स्कान्दे

> ऋग्यजुस्सामाथर्वा च भारतं पाञ्चरात्रकम्।
> मूलरामायणञ्चैव शास्त्रमित्यभिधीयते।।
> यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितम्।
> अतोऽन्यः शास्त्रविस्तारो नैव शास्त्रं कुवर्त्म तत्।।" इति।

तदनेनाऽनन्यलभ्यः शास्त्रार्थ इति न्यायेन भेदस्य प्राप्तवत्वेन तत्र न तात्पर्यम्, किन्त्वद्वैत एव वेदवाक्यानां तात्पर्यमिति।

—भुवनेश लौकिकन्यायसाहस्री, ७।।

वेदार्थविचारणाय चोपक्रमोपसंहारावभ्यासापूर्वताफलार्थवादोपपत्त्याख्यानि षड्विधानि तात्पर्यलिङ्गानि निर्णितानि। छान्दोग्ये षष्ठाध्याये उपक्रमरूपेण "एकमेवाद्वितीयमि"[१] ति प्रकरणप्रतिपाद्यस्याद्वितीयवस्तुनः कथितमस्ति, अन्ते च "ऐतदात्म्यमिदं सर्वम्"[२] इति तदेवाभिप्रायमुपसंहरति। तत्रैव तत्त्वमसीति वाक्यं अद्वितीयपरकं दृष्टान्तादिमुखेन नवकृत्वः प्रतिपादितमिति अभ्यासः। अत्र तत्त्वमसीति महावाक्यगताद्वितीयवस्तुनः प्रमाणान्तरगम्यत्वं नास्तीति अपूर्वः। फलरूपेणापि "आचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये"[३] इत्यद्वितीयवस्तुज्ञानस्य तत्प्राप्तिः प्रयोजनं श्रूयते। अपि चार्थवादत्वेन "उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतम्, अविज्ञातं विज्ञातम्"[४] इत्यद्वितीयवस्तुप्रशंसा दृश्यते। उपपत्तिरपि— "यथा सौम्येकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्"[५] इति अद्वैतवस्तु एव प्रतिपादयति। द्वितीयवस्तुसाधने विकारस्य वाचारम्भणमात्रत्वे युक्तिः श्रूयत इति भावः। तस्मात् तत्त्वमस्यादिमहावाक्यानामद्वैत एव तात्पर्यमिति निष्कर्षः।

अत्र द्वितीयाध्यायस्यारम्भे श्रीसुरेश्वराचार्योऽपि महावाक्यविचारः कृतवान्। तथाहि—

श्रावितो वेत्ति वाक्यार्थं न चेत्तत्त्वमसीत्यतः ।
त्वंपदार्थानभिज्ञत्वादतस्तत्प्रक्रियोच्यते ॥[६]

## एकविज्ञानेन सर्वविज्ञानम्

वेदान्तसिद्धान्ते एकस्यैव ब्रह्मणः पारमार्थिकनित्यत्वात् सर्वव्यवहारप्रपञ्चस्याधिष्ठानत्वात्, निखिलपदार्थं प्रति विवर्तोपादानत्वाच्च तस्य विज्ञानेनैव भवति अखिलपदार्थानां विज्ञानम्। यथा मृत्तिकाज्ञानेनैव भवति मृत्पात्राणां विज्ञानं यथा वा सुवर्णविज्ञानेनैव भवति सुवर्णनिर्मितकटककुण्डलादीनां विज्ञानमेवमेव एकस्य ब्रह्मणः विज्ञानेनैव भवति खल्वखिलप्रपञ्चानां विज्ञानम्। उपनिषन्मननेनापि स्पष्टतया भात्ययं पक्षः। तथाहि—

छान्दोग्ये षष्ठाध्याये "उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवती"[७] त्यादि श्रूयते। मुण्डकेऽपि "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवती"ति।[८] आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञातमिदं सर्वं विदितमि"त्यपि मैत्रेयीब्राह्मणद्वये श्रूयते।

---

१. छान्दोग्योपनिषत्, ६.२.१.
२. तदेव, ६.८.७.
३. तदेव, ६.१४.२.
४. तदेव, ६.१.३.
५. छान्दोग्योपनिषत्, ६.१.४.
६. नैष्कर्म्यसिद्धिः, २.१
७. छान्दोग्योपनिषत्, ६.१.३.
८. श्रीमद्भगवद्गीता, ७.२.

श्रीमद्भगवद्गीतायामपि—

ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः।
यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते।।[१]

इति स्मर्यते।

एतत्प्रतिपादनपरमेव छान्दोग्यवाक्यं ''यथा सौम्येकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि''[२]ति ब्रह्मज्ञानेन सर्वं तत्त्वतो ज्ञातं भवतीत्येवास्य निष्कर्षः। ब्रह्मज्ञानेनेत्यत्राभेदे तृतीया, अभेदस्य च विज्ञातमित्यत्र विज्ञानेऽन्वयः, तथा च ब्रह्मज्ञानाभिन्नं यज्ज्ञानं स्वीयतत्त्वज्ञानाभिन्न-ज्ञानविषयब्रह्मकं सर्वमिति तात्पर्यम्। ''येनाश्रुतं श्रुतं भवती''त्यस्य यदभिन्नश्रुतव्यतिरिक्त-स्वीयतात्त्विकरूपशून्यमिति भावः। मुण्डकादावेवं वाक्याभावेऽपि ''पुरुष एवेदं विश्वमि''ति दृश्यते। ''अत्मैवेदं सर्वमि''ति च मैत्रेयीब्राह्मणे। अत्रोभयस्थाने बाधायां समानाधिकरण्यं श्रुत्याभिप्रेतमतः ब्रह्मव्यतिरेकेण प्रपञ्चो नास्ति। रजतादेः शुक्तिरिव ब्रह्मैव तात्त्विकं रूपं प्रपञ्चस्यातः इदमिति शुक्तिविज्ञानेन तद्गतरजतविज्ञानवत् अधिष्ठानभूतब्रह्मविज्ञानेन प्रपञ्चोऽपि तत्त्वतो ज्ञातो भवति। यथा वा सुवर्णविकाराणां कटककुण्डलादीनां सुवर्णोपादानकत्वेन शुक्तिरजतज्ञानवत् विकाराणां मिथ्यात्वात् तज्ज्ञानमज्ञानमेव। तस्मात् विकाराणां प्रत्येकं ज्ञानाभावे न सर्वज्ञत्वव्याहतिः।

विषयेऽस्मिन् विविधसम्प्रदायगता अनर्थाः यथा निराकृताः पण्डितराजै एस. सुब्रह्मण्यशास्त्रिपादैः[३] तद्यथा—

एकविज्ञानेन सर्वविज्ञानमिति मृद्विज्ञानेन मृत्सादृश्यात् सर्वं मृन्मयं विज्ञायते इति श्रीमध्वाचार्यः कथितवान् यत्, तत् ''वाचारम्भणं विकारो नामधेयमि''[४] त्यादिना उपपादनविरोधात् साररहितमतः उपेक्षितव्यम्। अपि च ''प्रतिज्ञाऽहानिरव्यति-रेकाच्छब्देभ्य''[५] इति ब्रह्मसूत्रोक्तसर्वविज्ञानप्रतिज्ञोपपादनमपि विरुद्ध्यते, तस्मादयुक्तम्।

यदपि तैरैवोक्तं ब्रह्मणः प्राधान्यात् ब्रह्मविज्ञानेन खलु भवति सर्वेषां विज्ञानमिति, तदप्ययुक्तम् यतः तथासति अस्मिन् ग्रामे धनिकोऽयं दृष्टश्चेत् सर्वे दृष्टा एव भवन्तीतिवत् सर्वज्ञानस्यापि गौणत्वं स्यात् परन्तु श्रौतवाक्यस्य गौणत्वं वक्तुं न पार्यते, अयुक्तत्वात्। ''कथं नु भगव'' इति प्रश्नस्य ''यथा सोम्यैकेन मृत्पिण्डेने''त्यनेन तदुपादानस्य च अनवसरप्रलापापत्तेः तदनन्यत्वसूत्रस्य अव्यतिरेकाच्छब्देभ्य इति सूत्रकारोक्तन्यायस्य विरोधात्।

---

१. मुण्डकोपनिषत्, १.३.
२. छान्दोग्योपनिषत्, ६.१.४.
३. छान्दोग्योपनिषत् टिप्पणम्, (म.अ.स.), ६.१.४.
४. छान्दोग्योपनिषत्, ६.१.४.
५. ब्रह्मसूत्र, २.३.६.

"मृतिकेत्येव" इत्यत्र इति शब्द आद्यर्थः, मृत्तिकादिकारणं सत्यमिति भावः। अथवा मृत्तिकात्मनैव घटादीनां सत्यत्वं न तु स्वरूपेणेति तात्पर्यः। इतिशब्दस्य प्रकारार्थत्वं छान्दोग्योपनिषदि—"दत्तमित्युपासते तिलमाषा इति जायन्ते"[१] इत्यादौ प्रसिद्धं, तस्मादस्य वैयर्थ्यत्वमपि न भवति। नामधेयपदन्तु वाचारम्भणशब्दस्य विवरणपरम्। सत्यमित्यस्य मध्वाचार्योक्तं विवरणं नित्यमिति शब्दार्थत्वाभावादनुपादेयम्।

अद्वितीयमित्यस्य अस्मिन् ग्रामेऽयमेकः इति शौर्यादिवैशिष्ट्यमुपलक्ष्य एकत्वप्रतिपादनवत् समानाधिकवर्जितमित्यपि वक्तुं न पार्यते, मुख्यार्थत्यागात्। नास्ति द्वितीयं यत्रेति व्युत्पत्त्या द्वितीयसामान्याभावः शक्त्या उच्यते। "नेह नानास्ति किञ्चन"[२] इति श्रुत्या स्वहस्तितम्। प्राधान्यार्थं सृष्टिकथनमिति चेत्, न स्वशब्देनैव ब्रह्मणः प्राधान्योक्तिसम्भवेन बहुभिर्वाक्यैः सृष्टिक्रमकथनायोगात्।

ननु विजातीयाभावे येनाश्रुतं श्रुतमित्यादिविशेषणवैयर्थ्यमिति चेन्न, विजातीयमत्राचेतनं तच्च ब्रह्मण एवोत्पद्यते। तच्च नास्तीत्यस्य विवर्तत्वात् ब्रह्मव्यतिरेकेण नास्तीत्यर्थः। "तदन्यत्वमारम्भणशब्दादिभ्य"[३] इति न्यायात्। विजातीयस्य जडत्वेन ब्रह्मविलक्षणस्य ब्रह्मण उत्पत्तिश्च "यथोर्णनाभिः सृजते गृह्णते चे" त्यादिना मुण्डकोपनिषदि निर्णीता। तथा च सजातीयं वा विजातीयं वा ब्रह्मण उत्पन्नं ब्रह्मोपादानकं ब्रह्मव्यतिरेकेण नास्ति। ब्रह्मज्ञानेन तत्त्वतो ज्ञातं भवेदेव।

एकविज्ञानेन सर्वविज्ञानप्रकारः विशिष्टाद्वैतवादे श्रीरामानुजीयसम्प्रदायेऽपि सम्यक् न। यतस्तेषां मते जडप्रपञ्चस्य ब्रह्मोपादानत्वेनोक्तत्वात् कथञ्चित् ब्रह्मज्ञानेन ज्ञानं भवेत् जीवानान्तु तन्मतेऽपि नित्यत्वाङ्गीकारात् न लयः सम्भवति येन जीवो-पादानकत्वमनुमीयेत, सृष्टिप्रकरणेऽपि जीवसृष्टिः नोक्ता। नापि ब्रह्मैक्यात् तज्ज्ञानेन ज्ञातता तयोर्भेदात्।

यत्तु जडोपादानत्वं जडभूतप्रकृतिशरीरकतयेति। तदयुक्तम्। तथापि विशिष्टे उच्यमानमुपादानत्वं विशेषणं पर्यवस्यतीति प्राप्तम्। तथा च विशेष्यमपरिणामीत्येव सिद्ध्येत्। तथा चोपादानत्वानुपपत्तिः। चिद्रूपाः जीवास्तु नित्या तल्लयः उत्पत्तिर्वा धर्मभूतज्ञानस्य न जीवस्येति न तदुपादानत्वं ब्रह्मणः।

## आत्मनः व्यापकता असङ्गता च

सर्वे दार्शनिकाः निर्विवादमात्मसत्तां स्वीकुर्वन्तो आत्मनः स्वरूपविशेषविषये विवदन्ते। तत्र चार्वाकाः आत्मानाम चतुर्भूतेभ्य उत्पन्नः मादकद्रव्यवत् स्थूलशरीरात्मकः

१. छान्दोग्योपनिषत्, ५.१०.६.
२. बृहदारण्यकोपनिषत्, ४.४.१९.
३. ब्रह्मसूत्रम्, २.१.१४.

कश्चिच्चैतन्यविशेषः, मनो-प्राणो वेति कथयन्ति।[१] बौद्धास्तु क्षणिकविज्ञानं शून्यम्वा आत्मेति जल्पन्ति। एतेषां मते आत्मा विनाशी परिणाम्यपि। जैनाः उक्तमतद्वयं निरस्यात्मनोऽविनाशीत्वं स्थिरपरिणामित्वञ्च प्रतिष्ठापयन्ति। एते दार्शनिकाः श्रुतिप्रमाणं नाङ्गीकुर्वन्ति। अतएव एते नास्तिकाः, तस्मादेतेषां दर्शनान्यपि नास्तिकदर्शनत्वेनैव ख्यातानि।

श्रुति-प्रामाण्यं स्वीकुर्वतां दार्शनिकानां मते त्वात्मा अविनाशीअपरिणाम्यपि। अत्र नैयायिकाः "ज्ञानाधिकरणमात्मा" इति कथयन्ति। तेषां मते चैतन्यस्य ज्ञानस्याश्रयः एवात्मा भवति। "अत" धातोः गत्यर्थकत्वात् ज्ञानार्थकमपि भवति "सर्वे गत्यर्थाः ज्ञानार्थका" इति न्यायात्। अतएव "आत्मन्" शब्देन ज्ञानस्याश्रयः ज्ञातेति वा सिद्ध्यति। एतेषां मते आत्मा जीवात्मापरमात्माभेदेन द्विविधः। जीवात्मनः विभूत्वेऽपि प्रतिशरीरावच्छेदेन भिन्नत्वादसंख्यत्वमस्ति, ईश्वरस्त्वेक एवेति तेषां राद्धान्तः। एतेषां आत्मा सर्वस्य द्रष्टा, सर्वस्य भोक्ता, सर्वज्ञः सर्वानुभावकोऽपि वर्तते। एतन्मते आत्मनः विभूत्वेन व्यापकतायां सत्यामपि असङ्गता नास्ति। अकर्तृत्वमभोक्तृत्वं जीवात्मपरमात्मनोः श्रुत्यनुसारिभिरिव एते नाङ्गीकुर्वन्ति। वैशेषिकाः एतन्मतमेवाङ्गीकुर्वन्ति। सांख्य-पातञ्जलास्तु आत्मा निर्लिप्तः, निर्विकारचैतन्यस्वरूपोऽकर्ता, भोक्ता, विभूः, बहुः, सकलचित्तवृत्तेः साक्षीति स्वीकुर्वन्ति। एतेषां मते आत्मनः विभूत्वेऽसङ्गत्वेऽपि श्रुतिसिद्धान्त-विरुद्धं तस्य भोक्तृत्वमनेकत्वञ्चाङ्गीकुर्वन्ति। वस्तुतस्तु—

यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह।
यच्चास्य सन्ततो भावस्तस्मादात्मेति कथ्यते।।[२]

अत्र यस्मादर्थे यच्छब्दः, च समुच्चये, अर्थात् यस्मात् कृत्स्नमनात्मानं निरवशेषतया व्याप्नोति, तस्मादेतदात्मा। "इदं सर्वं यदयमात्मा"[३] "एकमेवाद्वितीयम्"[४] यस्मात् सुषुप्त्यादावज्ञानकार्य्याणि अनात्मनोऽज्ञानवशादेवात्मन्युपसंहरतीति वा तस्मात् "आत्मा"। यस्माच्च विषयान् अत्ति निवर्तयति तस्मादात्मा। "यस्य ब्रह्म च क्षत्रञ्चोभे भवत ओदनः"[५] "अत्ताचराचरग्रहणात्"[६] अथवा अत्ति निखिलवस्तुनि प्रकाशयति इति आत्मा। "तस्य भासा सर्वमिदं विभाति"[७] यस्मात् चास्य निरूपणीयत्वेन

---

१. तत्र पृथिव्यादीनि भूतानि चत्वारितत्त्वानि। तेभ्य एव देहाकारपरिणतेभ्य किण्वादिभ्यः मदशक्तिवत् चैतन्यमुपजायते। (सर्वदर्शनसंग्रहे चार्वाकदर्शनम्)

२. वेदान्तसिद्धान्त मुक्तावली, पृ. १२५ (जीवानन्दविद्यासागरः)।

३. बृहदारण्यकोपनिषत्, २.४.६ ४. छान्दोग्योपनिषत्, ६.२.१.

५. कठोपनिषत्, १.२.२५. ६. ब्रह्मसूत्रम्, १.२.९.

७. मुण्डकोपनिषत्, २.२.१०.

प्रकृतस्य सन्ततो नैरन्तर्येण भावोऽवस्थितिः (अत सततगमने) पूर्णस्वरूपेण विद्यमानेति भावः, तस्मादात्मा। "पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते"[१] इति च श्रुतेः। अतएवात्मनः सर्वव्यापकत्वं सिद्धम्।

ननु व्यापकस्यापि आकाशादेरनित्यत्वं दृष्टमिति चेन्न, व्यापकत्वापरिज्ञानात्, सर्वसम्बन्धत्वं हि व्यापकत्वम्। तथाहि—सर्वस्मिन् सर्वात्मना सम्बद्धत्वम्, अननुगतानामधिष्ठानमिति यावत्। व्याप्यस्वरूपासत्त्वप्रसङ्गात्, व्यापकस्वरूपविनिर्मुक्त-स्वस्वरूपाभावाच्चान्येनान्यत् सर्वात्मना न व्याप्यते। अन्यथा सर्वात्मना व्याप्त्यसम्भवात्।

न हि आत्मा कर्तृत्व-भोक्तृत्वादिधर्मयुक्तो भवति। स च नित्य-शुद्ध-बुद्ध-मुक्तस्वभावः कर्तृत्वभोक्तृत्वादिधर्मरहितः "असङ्ग" इति श्रुतिभिः प्रतिपादितम्। "असङ्गो ह्ययं पुरुषः"[२] इति च श्रुतेः। श्रीसुरेश्वराचार्योऽपि आत्मनोऽसङ्गत्वं द्वितीयाध्यायस्य एकपञ्चाशतमे श्लोके निरूपितवान्। तथाहि— "न चायं क्रियाकारकफलात्मक आभास ईषदपि परमार्थवस्तु स्पृशति तस्य मोहमात्रोपादानत्वात्। अभूताभिनिवेशेन"[३] इत्यादिनाऽर्थतः आत्मनोऽसङ्गत्वप्रतिपादनं वर्तते।

## दशोपनिषत्सु आत्मनः आनन्दरूपतानिरूपणम्

आनन्दलाभायैव प्रयतन्ते सर्वे प्राणिनः। धर्मार्थकाममोक्षाख्येषु चतुर्विधपुरुषार्थेष्वपि यःप्रयत्नः सोऽपि आनन्दप्राप्त्यर्थमेव। तस्मात् परमपुरुषार्थरूपस्य मोक्षस्य प्राप्त्यर्थं यःप्रयत्नः, आनन्दानुसन्धानात्मक एवेति अर्थादेव सिद्ध्यति। यद्यपि मोक्षविषयेऽस्ति विदुषां विप्रतिपत्तिः तथापि आत्मस्वरूपावगतिरेव मोक्ष इति औपनिषत्सिद्धान्तः। आत्मनः आनन्दरूपतां विना परमपुरुषार्थरूपान्मोक्षादानन्दावाप्त्यसम्भव एव। यद्यपि भगवता सूत्रकारेण आनन्दमयाधिकरणे आत्मनः प्राचूर्यार्थकमयडन्तआनन्दमयशब्देन सङ्केतः कृत इति भाति, तथापि भगवान् भाष्यकारः "आनन्द" एवात्मनः स्वरूपमिति औपनिषत्सिद्धान्तः श्रुतियुक्तिभिः तत्रैव भाष्ये प्रतिपादितः।

यद्यपि प्रथमव्याख्याने भाष्यकाराः "तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमयः"[४] इति श्रुत्युक्तं आनन्दमयशब्दगतं "मयट्" प्रत्ययं प्राचुर्यार्थत्वेन गृहीत्वा आनन्दप्राचुर्यं ब्रह्मण एवेति आत्मन आनन्दमयस्वरूपत्वं निर्णयन्ति। परन्त्वत्र द्वितीयव्याख्याने भगवान् भाष्यकारः प्राचुर्यार्थे मयट्स्वीकारेऽपि आपेक्षिकन्यूनताऽ-वश्यम्भावी, अन्नमययज्ञवत्, किन्तु ब्रह्मणः पूर्णरूपत्वात्तत्र न्यूनतायाः सम्भव एव नास्ति। तस्मात् "आनन्दमयः" इत्यत्र विकारार्थे "मयट्" स्वीकृत्य आनन्दमयोऽपि

---

१. ईशावास्योपनिषदः मङ्गलाचरणम्।
२. बृहदारण्यकोपनिषत्, ४.३.१५.
३. नैष्कर्म्यसिद्धिः, २.५१
४. तैत्तिरीयोपनिषत्, २.५.

विज्ञानमय इव कोशविशेषः यदवच्छेदेनात्माऽपि आनन्दमयत्वेन भाति। उपनिषत्सु आनन्दस्यैवाऽभ्यासः श्रूयते न तु आनन्दमयस्य। तथाहि तैत्तिरीये—"आनन्दो ब्रह्मेति व्यजानात्"[१] "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते"[२] "आनन्दं ब्रह्मणो विद्वान् न विभेति कुतश्चन"[३] "रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" "को ह्येवान्यात्कः प्राण्यात्। यदेष आकाश आनन्दो न स्यात्। एष ह्येवानन्दयाति"[४] "सैषानन्दस्य मीमांसा भवति" "एतमानन्दमयमात्मानमुपसंक्रामति"[५] इत्यादिषु श्रुतिषु आत्मनः आनन्दरूपत्वं स्पष्टमेव सङ्कीर्त्तितम्। तत्रैव पुनः "तस्य प्रियमेव शिरः। मोदो दक्षिणः पक्षः। प्रमोद उत्तरः पक्षः। आनन्द आत्मा ब्रह्म पुच्छं प्रतिष्ठा"[६] इति श्रूयते। अत्र "प्रियमोदादिविशेषणस्यानन्दमयस्य सर्वलोकप्रसिद्धत्वादि"त्युक्तं भाष्यकारैः। तस्मात् सिद्धं खल्वात्मन आनन्दरूपत्वम्।

बृहदारण्यकेऽपि "विज्ञानमानन्दं ब्रह्म"[७] इति ब्रह्मण्येवानन्दशब्दो दृष्टः। अत्रैवोपनिषदि—"एषोऽस्य परम आनन्द एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति"[८] इति आत्मन आनन्दरूपतां स्पष्टं निर्दिश्य तस्यैवांशेनान्यानि भूतानि आनन्दलेशम्प्राप्योपजीवन्तीत्युक्तम्। ईशावास्योपनिषदि यद्यपि आनन्दशब्दोल्लेखद्वारा आनन्दरूपतायाः निर्णयो नास्ति तथापि "तत्र को मोहः को शोकः एकत्वमनुपश्यतः"[९] इत्यत्र शोकमोहाभावोपलक्षित आनन्दरूपस्य ब्रह्मणः विज्ञानमेवोपदिष्टम्।

छान्दोग्योपनिषदि सनत्कुमार-नारदसंवादे आत्मस्वरूपविज्ञानशून्यत्वात् नारदस्य शोकाभिभूतत्वं श्रूयते।[१०] आनन्दरूपस्यात्मनः यथार्थविज्ञानानन्तरमेव नारदस्य शोकनिवृत्तिर्जाता। उक्तं हि तत्र— "तरति शोकमात्मवित्"[११]। एकत्रैकदाऽऽनन्दशोकयोरवस्थानासम्भवादपि आत्मनः आनन्दरूपताऽर्थतः सिद्ध्यति। अपि च छान्दोग्ये "भूमैव सुखमि"[१२]त्युक्तम्। अत्र भूमाशब्दस्य बहुत्ववाचकत्वात्, बहुत्वञ्च निरतिशयरूपं निरतिशयसुखमपि आनन्दरूपमेवेति, आत्मन एव आनन्दरूपता सिद्ध्यति। केनोपनिषद्यन्ते "स्वर्गे लोके ज्येये प्रतितिष्ठति"[१३] इति श्रूयते। अत्र तु भाष्यकारः— "स्वर्गे लोके सुखप्राये निर्दुःखात्मनि परे ब्रह्मणि। ज्येये महति सर्वमहत्तरे प्रतितिष्ठति

---

१. तैत्तिरीयोपनिषत्, ३.६.
२. तदेव, ३.६.
३. तदेव, २.९.
४. तदेव, २.७.
५. तदेव, २.८.
६. तदेव, २.५.
७. बृहदारण्यकोपनिषत्, ३.९.२८.
८. तदेव, ४.३.३२.
९. ईशावास्योपनिषत्, ७.
१०. सोऽहं भगवो मन्त्रविदेवास्मि नाऽऽत्मवित्...सोऽहं भगवः शोचामि। छा.उ., ७.१.३.
११. तदेव, ७.१.३.
१२. तदेव, ७.२३.१.
१३. के.उ., ३४.९

सर्ववेदान्तवेद्यं ब्रह्माऽऽत्मत्वेनावगम्य तदेव ब्रह्म प्रतिपाद्यत इत्यर्थः''[१] इत्यवादीत्। अत्र स्वर्गशब्दस्य सुखरूपत्वात् सुखशब्दोऽपि निर्दुःखात्मनि ब्रह्मण्येव पर्यवस्यतीति निर्दिष्टम्। ऐतरेयोपनिषद्यपि ''स्वर्गे लोके सर्वान् कामानाप्त्वामृतः समभवत्''[२] इत्यात्मनः स्वर्गलोकप्राप्तित्वं पूर्ववत् आनन्दस्वरूपमेव ज्ञेयम्। भगवान् भाष्यकारोऽपि ''स्वर्गे लोके स्वस्मिन्नात्मनि'' इति कथितवान्।

कठोपनिषद्युक्तं ''स मोदते मोदनीयं हि लब्ध्वा''[३] इति। मोदशब्दस्य आनन्द[४]-पर्यायत्वात् मोदनीयमात्मानम् अर्थात् आनन्दस्वरूपमात्मानं ज्ञात्वा मोदते इति आत्मनः आनन्दरूपता प्रकटी भवति। श्रीगोपालयतीन्द्रस्त्वत्र ''मोदनीयमात्मानं लब्ध्वा स विद्वान्मोदत इत्यनेनाऽऽनन्दावाप्तिरुक्ता''[५] इत्यकथयत्। अपि चाह— ''तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम्''[६] इत्यत्र भगवान् भाष्यकारस्त्वाह— ''यत्तदात्मविज्ञानसुखमनिर्देश्यं निर्देष्टुमशक्यं परमं प्रकृष्टं प्राकृतपुरुषवाङ्मनस-योरगोचरम्''[७] इति। अत्रात्मनः न केवलसुखरूपत्वमपितु सर्वोत्तमसुखस्वरूपं निर्णितम्।

प्रश्नोपनिषद्यपि ''तदैतस्मिन् शरीर एतत्सुखं भवति''[८] इति। तत्रैव ''एतत्सुखं भवति यद्विज्ञानम्'' इति भाष्यकाराः आनन्दगिरिस्तु ''विज्ञानरूपं स्वरूपसुखमित्यर्थः'' इत्यवदत्। यथा जीवः विषयेभ्यः उपरतः सन्नपि स्वप्नान्न पश्यति तथा यदानन्दानुभवः सः तु स्वरूपानन्द एव। तत्र आत्मसत्तातिरिक्तसत्तायाः अभावात् आत्मन एवानन्दरूपतेति ज्ञेयम्।

मुण्डकोपनिषदि ''आनन्दरूपममृतं यद्विभाती''त्युक्तम्। अत्र पुनः भगवान् भाष्यकारः— ''आनन्दरूपं सर्वानर्थदुःखायासप्रहीणममृतं यद्विभाति विशेषेण स्वात्मन्येव भाति सर्वदा''[९] इत्यकथत्। माण्डुक्योपनिषदि पञ्चममन्त्रे ''आनन्दभुक्'' इति कथितम्। अनेन जीवस्य विषयविषयीकार-स्पन्दनात्मकः आयासदुःखरहितत्वमेवानन्दमयत्वमा-नन्दप्रायः, न त्वानन्द एवेति भावः। आत्मनः आनन्दस्वरूपत्वात्तत्र भोक्तृभोग्यभावो नास्ति। अतएव दशोपनिषत्सु आत्मनः आनन्दरूपता प्रतिपादितास्ति।

## आत्मनः स्वप्रकाशत्वम्

आत्मप्रकाशबलादेव प्रकाश्यन्ते सर्वे पदार्थाः। यदि चक्षुरेव न स्यात्तदा शतसूर्या अपि रूपं प्रकटयितुम् समर्थाः न स्युः। तथैव आत्मसत्ताया अभावे

---

१. के.शा.भा., ३४.९.
२. ऐ.उ., ४.६.
३. कठोपनिषत्, १.२.१३.
४. ''मुत्प्रीतिः प्रमदो हर्षः प्रमोदामोदसम्मदाः स्यादानन्दः'' इत्यमरः। १.४.२४.
५. कठ.गो.टी., १.२.१३.
६. कठ., २.२.१४.
७. कठ. शा. भा., २.२.१४.
८. प्रश्न. ४.६.
९. मु.उ., शा.भा., २.२.७.

इन्द्रियाणि किमपि प्रकाशनाय समर्थाः न स्युः। उक्तञ्च श्रुतौ—

"न तत्र सूर्यो भाति न चन्द्रतारकं
नेमा विद्युतो भान्ति कुतोऽयमग्निः।
तमेव भान्तमनुभाति सर्वं
तस्य भासा सर्वमिदं विभाति॥"[१]

तस्यैव ब्रह्मणः प्रकाशानन्तरं सर्वेषां वस्तूनां प्रकाशो भवति। तस्य आत्मनः प्रकाशेनैव सर्वे पदार्थाः प्रकाशन्ते। उक्तञ्च वृहदारण्यके "अत्रायं पुरुषः स्वयंज्योतिः"[२]। वस्तुतस्तु आत्मसत्तां विना ईश्वरसत्ताऽपि प्रतिपादयितुं न शक्यते। अतः आत्मनः स्वप्रकाशत्वस्वीकारेण विना गत्यन्तरं नास्ति।

स्वप्रकाशत्वस्य नामश्रवणमात्रेणैव भीताः भवन्ति खलु नैयायिकाः। तेषां "सर्वं ज्ञेयं वाच्यत्वात्" इत्याद्यात्मकस्य केवलान्वय्यनुमानस्य व्याकोपो भवत्येतत्स्वीकारे। एतन्मतनिरासाय श्रीचित्सुखाचार्यः संविदःस्वप्रकाशत्वे पूर्वपक्षरूपेण दशलक्षणानि प्रतिपाद्य उत्तरोत्तरलक्षणद्वारा च पूर्व पूर्वलक्षणं निराकृत्य सिद्धान्तरूपेण एकादशतमं लक्षणं संविदः स्वप्रकाशस्य प्रतिपादितवान्—"अवेद्यत्वे सति अपरोक्षव्यवहार-योग्यत्वम्" इति। कथितञ्च तैर्नैयायिकरीत्या आत्मनः ज्ञानस्य वा वेद्यत्वस्वीकारे तस्य पुनः प्रकाशको कः भविष्यति? अनुव्यवसाय इति चेत्, अनुव्यवसायः पुनः केन ज्ञेयः स्यात्? पुनरनुव्यवसायश्चेत्, तदर्थं पुनरनुव्यवसायश्चेदनवस्था, अनवस्था-परिहारार्थं व्यवसायात्मकेन प्रथमज्ञानेनानुव्यवसायप्रकाशः कल्प्यते चेत्, त्रिषु परस्परप्रकाशकत्वस्वीकारे चक्रकापत्तिः, प्रथमस्य द्वितीयादिव द्वितीयस्यापि प्रथमाच्चेत् द्वयोः सापेक्षत्वात् परस्पराश्रयः। अनुव्यवसायः स्वयमेव प्रकाशते चेत् सिद्धं नः समीहितम्। गतं खलु सर्वज्ञेयत्वसाधकं केवलान्वय्यनुमानम्।

एवं सम्बिदः स्वप्रकाशत्वसिद्धे संबिद्रूपत्वात् आत्मनोऽपि स्वप्रकाशत्वं स्वीकृतं तैः। उक्तञ्च श्रीचित्सुखाचार्यैः—

"चिद्रूपत्वादकर्मत्वात्स्वयंज्योतिरिति श्रुतेः।
आत्मनः स्वप्रकाशत्वं को निवारयितुं क्षमः॥"[३]

अत्र तावदनुमानद्वयं विवक्षितम्—आत्मा स्वयंप्रकाशः चिद्रूपत्वात् आत्मा स्वयंप्रकाशः अकर्मत्वादिति। आत्मनः स्वप्रकाशत्वे श्रुतिरपि प्रमाणमित्याह—'स्वयंज्योतिरिति' श्रुतेः। आत्मनः चिद्रूपत्वे विवदमानम्प्रति तत्साधनमपि तैः कृतम्। तथाहि—

---

१. श्वेताश्वतरोपनिषत्, ६.१४. २. बृहदारण्यकोपनिषत्, २.३९.

३. तत्त्वप्रदीपिका (षड्दर्शन कार्यालय, वाराणसी), पृ. ३८.

आत्मा सम्बिद्रूपः सम्बिद्कर्मतामन्तरेणापरोक्षत्वात् सम्बेदनवदिति प्राभाकरं प्रत्यनुमानम्। नैयायिकम्प्रति तु घटतज्ज्ञानयोः सम्बन्धः आत्मनिष्ठः ज्ञाननिष्ठत्वात् पदविषयत्ववदिति अनुमित्या साधयित्वा चिद्रूपत्वहेतुना आत्मनः स्वप्रकाशत्वमपि स्वीकरोति। यदि आत्मनः स्वप्रकाशत्वं न स्यात्तदा कैश्चित्पृष्टे सत्यस्तित्वविषये आत्मविषयकसंशयः स्यात्। न ह्यात्मन्यहमनहं वेति कश्चित्संदिग्धे, नैवाहमिति वा विपर्यस्यति। अपि चैतत्स्वप्रकाशज्ञानरूपतां विना कल्पयितुं न शक्यते।[१]

विषयेऽस्मिन् श्रीसुरेश्वराचार्योऽपि नैष्कर्म्यसिद्धावर्थतः कथितवान्। श्रीसुरेश्वराचार्यो नैष्कर्म्यसिद्धेः प्रथमाध्याये आत्मनोऽप्रमेयत्वं स्वतःसिद्धत्वञ्च कथितवान्। तथाहि— "अप्रमेये स्वतस्सिद्धेऽविश्वासः कथमात्मनि"[२] अपि च द्वितीयाध्यायस्य नवनवतितमे श्लोके एतदेव "अनुभूतिफलार्थित्वादात्मा ज्ञः किमपेक्षते" इत्यनेन वाक्येन कथयत्याचार्यः। तृतीयाध्यायस्य दशोत्तरैकशततमे श्लोकेऽप्यस्य स्वप्रकाशस्यार्थत एव प्रतिपादनं विद्यते—

अतिदुःस्थोऽप्रबोधोऽत्र ह्यात्मैवास्य प्रबुद्धता।
निमित्तमात्राद्धयेत्येषा नासाग्रे वदरं यथा।।

श्रीसुरेश्वराचार्यः बृहदारण्यकोपनिषद्भाष्यवार्तिकेऽप्युक्तम्—

प्रमाता च प्रमाणञ्च प्रमेयो निश्चितिस्तथा।
यत्सांनिध्यात्प्रसिद्ध्यन्ति तत्सिद्धौ किमपेक्षते।।[३]

वस्तुतस्तु वेदान्तप्रक्रियायां ब्रह्मणः परप्रकाश्यत्वाभावात् स्वात्मस्वरूपस्यानुभवैक्यवेद्यत्वात्, वाह्यप्रमाणनिरपेक्षत्वाच्च स्वप्रकाशत्वसिद्धिः। ननु "तं त्वौपनिषदं पुरुषं पृच्छामि"[४] ति श्रुतिवचनबलात् श्रुतिवेद्यत्वमस्त्वत्रेति चेन्न, अज्ञाननिवृत्तावेव श्रुतेः परिसमाप्तत्वात्। अविद्यायाः निवृत्तिरेव वेदान्तप्रक्रियायाः प्रयोजनम्। यतः अज्ञानस्य निवृत्तावेवात्मतत्त्वस्य प्रकाशः घननिवृतौ सूर्यावभास इव।

## सत्कार्यवादः

यद्यपि अद्वैतवेदान्तराद्धान्ते जगत्प्रपञ्चस्य ब्रह्मविवर्त्तत्वात् तत्रारम्भवादस्य परिणामवादस्य वा नियमानुवर्तित्वं नास्ति, तथापि जगत्प्रपञ्चस्य मायापरिणामत्वात् तत्र व्यावहारिकसत्ता स्वीकृता भवति। तस्मात् सृष्टिक्रमोऽपि श्रुत्युक्तन्यायेन स्वीकृतो भवति।

---

१. तत्त्वप्रदीपिका (षड्दर्शन कार्यालय, वाराणसी), पृ. ३९.
२. नैष्कर्म्यसिद्धिः, १.८९.
३. बृहदारण्यकोपनिषद्भाष्यवार्तिकम्, १.४.८७०.
४. बृहदारण्यकोपनिषत्, ३.९.२६.

अत्र तावत् वाचस्पतिमिश्रमतेन सत्ताद्वयपक्षः विवरणकारमतेन च सत्तात्रयपक्षः। तत्राद्ये ब्रह्म पारमार्थिकं सत्त्वं, तदतिरिक्तस्य सर्वस्यापि प्रातिभासिकी सत्ता। प्रातिभासिकस्य च पदार्थस्याधिष्ठानभूते चैतन्ये मूलाविद्यापरिणामित्वात् तन्मात्र सत्तैव आरोपितस्य। अत उत्पत्तेः प्रागपि अधिष्ठानरूपेण सत्।

द्वितीये तु ब्रह्मणः पारमार्थिकं सत्त्वं प्रपञ्चस्य व्यावहारिकं सत्त्वं, प्रपञ्चान्तः-पातिभ्रमविषयस्य प्रातिभासिकं सत्त्वम्। अत्रापि प्रपञ्चस्य मूलाविद्यापरिणामित्वात् अधिष्ठानसत्तयैव सद्रूपेण प्रपञ्चस्य भानमुत उत्पत्तेः प्राक् सदेव जगत्।

दुग्ध-दधिवत् माया-जगतोः परिणामवादः तत्सम्बद्धः सत्कार्यवादः स्वीकृतो भवति, अर्थात् उत्पत्तेः प्रागपि कार्यस्य सत्तेति स्वीकृतमस्ति। मूलतः परिणाम-वादिसांख्यसिद्धान्ते सत्कार्यवाद एवाङ्गीकृतः वेदान्तेऽपि सः स्वीकृतः। "तद्धेदं तर्ह्यव्याकृतमासीत्" इति श्रुत्यनुसारेणोत्पत्तेः प्राक् कार्यमात्रस्यैकं स्थायिरूपमस्त्येव, तत्पुनः प्रलयकालेऽपि तिष्ठति। वेदान्तमते पूर्वावस्थातादात्म्यापन्नोत्तरावस्थैव विनाशः। घटादयः विनाशकाले यदवस्थां प्राप्नुवन्ति सैव पूर्वावस्थातादात्म्यापन्नोत्तरावस्था। वेदान्तसिद्धान्तेऽपि व्यवहारदशायां पूर्वापरकालस्थायी किञ्चित् कार्यरूपं स्वीकृतं भवति। अतएव सांख्यसिद्धान्त इव वेदान्तेऽपि सत्कार्यवादः स्वीकृतोऽस्ति। परन्त्वत्र सांख्यसिद्धान्त इव कार्यस्य पारमार्थिकत्वं नास्ति, मिथ्यात्वात्, तत्त्वज्ञाननाश्यत्वाच्च।

## अनिर्वचनीयकार्यवादः

यद्यपि अद्वैतवेदान्तसिद्धान्ते जगत्प्रपञ्चस्य मायापरिणामवशात् स्वीकृतः सत्कार्यवादः, तथापि मूलाधिष्ठानकारणे ब्रह्मणि सम्पूर्णकार्यभूतस्य जगत्प्रपञ्चस्य विवर्तत्वादनिर्वचनीयकार्यवाद एवाद्वैतवेदान्तसिद्धान्ते स्वीकृतो भवति। विवर्तमताव-लम्बिनः अद्वैतवादिनः राद्धान्ते कार्यमात्रमेव खलु स्वकारणे कल्पितो भवति, तस्मात् कारणात्मनैव कार्यस्यापि सत्त्वं तिष्ठति। मूलाधिष्ठानकारणन्तु सद्रूपं ब्रह्मैव। तेन रूपेण विद्यमानत्वात् सत्कार्यवादः सिद्ध्यति। अपि च कार्यमात्रस्य स्वकारणे कल्पितत्वात् तस्य मिथ्यात्वं सिद्ध्यति। मिथ्यावस्तुनः सदसद्विलक्षणत्वादनिर्वचनीयत्वम्। अतएव सत्कार्यवादित्वेऽप्यनिर्वचनीयकार्यवादी[१] खल्वद्वैतवेदान्ती। उभयोर्विरोधोऽपि नास्ति। उक्तं हि संक्षेपशारीरककारैः —

विवर्तवादस्य हि पूर्वभूमि वेदान्तवादे परिणामवादः।
व्यवस्थितेऽस्मिन् परिणामवादे स्वयं समयाति विवर्तवादः।।[२]

---

१. सत्कार्यवादासत्कार्यवादनिषेधेनानिर्वचनीयकार्यवादमात्रे कार्यकारणभावपर्यवसानात्। अ.सि., पृ. ५०४, (निर्णयसागरसंस्करणम्)

२. संक्षेपशारीरकम्, २.६१.

परिणामवादः विवर्तवादस्य सोपानस्वरूपः पूर्वभूमि वर्तते। यद्वस्तु अज्ञानस्य परिणामः भवति तदेवाज्ञानाधिष्ठानब्रह्मणः विवर्तः भवति। स तत्त्वतः अन्यथावादः अन्यथा प्रतीतिर्वा नाम परिणामः। अतत्त्वतोऽन्यथाभावः प्रतीतिर्वा नाम विवर्तः।[१] कार्यस्यानिर्वचनीयत्वं कथमिति चेदुच्यते - अविद्यात्मना प्रपञ्चस्य विद्यमानत्वात् सत्कार्यवादः, अपि चाविद्यायाः ब्रह्मण्यारोपिततत्वात् न पारमार्थिकी सत्ता, बाधिततत्वात्। नापि सर्वथाऽसती सा प्रत्यक्षतयाऽनुभूयमानत्वात्, नापि सती असती इत्युभयात्मिका विरोधात् अतः सदसद्विलक्षणरूपाऽनिर्वचनीया, एवञ्च तत्परिणामभूतः प्रपञ्चोऽपि अनिर्वचनीयः।

आरम्भवादिनां नैयायिकानामिवोत्पत्तेः प्राक् कार्यमसत् इति कथयितुं न शक्यते, यतः असतः बन्ध्यापुत्रादेः कदापि प्रादुर्भावः न भवति। परिणामवादिसांख्यानामिवोत्पत्तेः प्राक् कार्यस्य सत्ता स्वीकर्त्तुमपि न पार्यते, यतो हि सांख्यानां मते सा सत्ता पारमार्थिकी, अस्माकं मते सा व्यावहारिकी प्रातिभासिकी वा। तथा सति कारकव्यापारस्य सार्थकतार्थं कार्यस्याभिव्यक्तिमात्रं स्वीकरणीयम्। एवं सत्यभिव्यक्तिरूपकार्यः उत्पत्तेः प्राक् सत्-असद्वा आसीत्, सच्चेद्व्यापारवैयर्थ्यापत्तिः। द्वितीये असत्कार्यवादप्रसङ्गः श्रुतिविरोधश्च।[२] कार्यमपि प्रागनभिव्यक्तदशायामासीत्, कारकव्यापारेणाभिव्यक्तं भवतीति चेत् पुनः तस्याऽप्यभिव्यक्त्यन्तरस्यापेक्षा, अतोऽनवस्था दुर्वारः। सुतरां सूक्ष्मेक्षणेन कार्यस्यानिर्वचनीयत्वमेवाङ्गीकर्तव्यः। उत्पत्तेः प्राक् कार्यस्य सत्त्वमसत्वं वा स्वीकर्तुं न पार्यते इति भावः। तस्मात् प्रत्येकं कार्यमनिर्वचनीयमेव। अपि च कारणापेक्षया कार्यस्य मिथ्यात्वादनिर्वचनीयत्वमेव सिद्ध्यति।

## अनिर्वचनीयख्यातिः

प्राचीनपरम्परायां पञ्चविधाःख्यातयः प्रचलन्ति। उक्तं हि विभ्रमविवेके—

आत्मख्यातिरसत्ख्यातिरख्यातिख्यातिरन्यथा ।
तथानिर्वचनख्यातिरित्येतत् ख्यातिपञ्चकम् ॥

अत्र सौत्रान्तिक-वैभाषिक-विज्ञानवादिनः बौद्धाः आत्मख्यातिमङ्गीकुर्वन्ति, द्वैतवेदान्तिनः यां सत्ख्यातिं स्वीकुर्वन्ति सा आत्मख्यातावेव अन्तर्भावः भवति। शून्यवादिनस्तु असतख्यातिं स्वीकुर्वन्ति। प्राभाकराः अख्यातिवादमङ्गीकुर्वन्ति। तार्किकाः पुनरन्यथाख्यातिमुररीकुर्वन्ति। भाट्टा अपि एतदेवाङ्गीकुर्वन्ति।

---

१. सतत्त्वतोऽन्यथा प्रथा विकार इत्युदीरितः।
अतत्त्वतोऽन्यथा प्रथा विवर्त इत्युदाहृतः।। वे.सा. ६०.

२. छान्दोग्योपनिषत्, ६.२.२.

भ्रमविषयेऽद्वैतवेदान्तस्य सिद्धान्त एवानिर्वचनीयख्यातिशब्देनाभिधीयते। भ्रमपदार्थं सर्वे दार्शनिकाः स्वीकुर्वन्ति। यद्यपि प्राभाकराः अन्यथाग्रहणरूपं भ्रमं न स्वीकुर्वन्ति, तथापि ते विवेकाग्रहनिबन्धनविशिष्टव्यवहारगतमेव भ्रमत्वं स्वीकुर्वन्ति। तार्किकानां भ्रमः अन्यथाख्यातिशब्देनाभिधीयते। तेषां मते ज्ञानलक्षणासन्निकर्षेण पुरोवर्तिशुक्तौ देशान्तरीयरजतत्वस्य भवति प्रतीतिः। प्राभाकरमतेऽन्यथाख्यातिर्नास्ति, यतः तेषां मते— "सर्वे प्रत्ययाः यथार्थाः, प्रत्ययत्वात्"। ते कथयन्ति भ्रमस्थले इदमित्यनुभवात्मकं रजतमिति च स्मृतिरिति ज्ञानद्वयं भवति। इदं रूपस्य पुरोवर्तिपदार्थस्य प्रत्यक्षे जाते तद्‌गतचाकचिक्यदर्शनेन रजतस्य स्मृतिर्भवति एकसम्बन्धिज्ञानस्यापरसम्बन्धिस्मारकत्व-नियमात्। परन्तु दोषवशात् ज्ञानद्वयस्य तद्‌गतविषययोश्च यद्‌भेदः विवेको वा तस्य ग्रहो नास्ति, तस्मात् विवेकाग्रहनिबन्धनः इदं रजतमितिविशिष्टव्यवहारो विभ्रमो भवति।

अद्वैतवेदान्तिमते तार्किकाभिमतोक्तरीत्या ज्ञानलक्षणासन्निकर्षः स्वीकर्त्तुं न शक्यते, अनुमित्युच्छेदप्रसङ्गात्। तथाहि— धूमदर्शने ज्ञानलक्षणासन्निकर्षेण वह्नेः प्रत्यक्षज्ञानसम्भवेऽनुमितिवैयर्थ्यापत्तिः। अतएव तार्किकाणामन्यथाख्यातिः न युक्तिसहा। प्राभाकराभिमते अख्यातिवादेऽपि भिन्नज्ञानद्वयस्याभिन्नबोधः, भिन्नविषययोश्चाभिन्नबोधद्वारा इदं रजतमिति पुरवर्त्तिवस्तु अङ्गुलिनिर्देशेन निर्दिशति। अनेन विवेकाग्रहमात्रादेव भ्रमः भवतीति न भाति, अपि तु अन्यपदार्थस्यावभासताऽपि अस्ति।[१] तस्माददद्वैतवेदान्त-सिद्धान्ते प्रायः[२] भ्रमस्थलेषु अनिर्वचनीयभ्रमविषयस्योत्पत्तिः तत्काले एव भवति, तस्यैव भवति मिथ्याप्रतीतिः। अयमेवानिर्वचनीयख्यातिवादः। अनिर्वचनीयस्य = सदसद्विलक्षणस्य ख्यातिः = अवभासः अनिर्वचनीयख्यातिः।[३] "इदं रजतमि"त्यादि भ्रमस्थले आरोप्यरजतं "सत्" इति कथयितुं न शक्यते, "नेदं रजतमिति" बोधेन बाधितत्वात्। नापि "असत्", सत्त्वेन प्रत्यक्षतया प्रतीयमानत्वात्। न च "सदसत्" परस्परविरोधात्। अतएव तत्र सदसद्विलक्षणात्मकस्यानिर्वचनीयरजतस्य भवत्युत्पत्तिः शुक्तेः चाकचिक्यदर्शनेन रजतसंस्कारस्योद्बुद्धे सति तिमिरादिदोषवशात् शुक्तिविषयकाज्ञानं (अधिष्ठानगतं विशेषांशविषयकाज्ञानम्) अनिर्वचनीयरजताकारेण रजतज्ञानाभासाकारेण

---

१. "अन्यस्यान्यावभासतां न व्यभिचरन्ति।" ब्र.सू.शां.भा., १.१.१.

२. वेदान्तपरिभाषायां पक्षद्वयस्य स्वीकारात् रक्तस्फटिकस्थले अन्यथाख्यातिः "इदं रजतमिति स्थलेऽनिर्वचनीयख्यातिरिति प्रायः शब्देन ध्वनितम्।

३. प्रत्येकं सदसत्त्वाभ्यां विचारपदवीं न यत्।
गाहते तदनिर्वाच्यमाहुर्वेदान्तवेदिनः।। चित्सुखी, १.१३.
सच्चेद् भाति कथं बाधो भाति चेत्तदसत्कथम्।
सदसद्भ्यामतो वाच्यं शुक्तौ रूप्यमितिस्थितम्। इष्टसिद्धिः, १.१७.

च परिणमते। उक्तञ्च श्रुतौ— "न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते",[१] "सन्ध्ये सृष्टिराहहि"[२] "मायामात्रन्तु कार्त्स्न्येनानभिव्यक्त-स्वरूपात्"[३] इति च स्मृतौ। अयमेव शुक्तौ रजतस्य भ्रमो वाध्यासः, अद्वैतवेदान्तसिद्ध अनिर्वचनीयख्यातिवादश्च। विषयः तत्प्रतीतिश्चोभावपि एवानिर्वचनीयौ। इयं प्रतीतिः नान्तःकरणवृत्तिरूपं ज्ञानम् अपि तु अविद्यावृत्तिरूपो ज्ञानाभासः।

यद्यपि न निर्वचनीयमित्यनिर्वचनीयमिति शब्दव्युत्पत्यनुसारेण "यतो वाचो निवर्तन्ते"[४] इति श्रुत्यनुरोधेन निर्वक्तुमशक्यत्वमनिर्वचनीयत्वं ब्रह्मण्यपि वर्तत इति ब्रह्मणोऽपि प्रपञ्चवदनिर्वचनीयत्वं सम्भवति तथापि ब्रह्मणः सत्स्वरूपत्वात् नित्यत्वात् त्रिकालाबाध्यत्वाच्च तत्र मिथ्यात्वमुत्पत्तिमत्वं ज्ञानबाध्यत्वञ्च न सम्भवति। तर्हि विरोधाभासः दृश्यते। अतः न प्रकृते प्रपञ्चे तादृशमनिर्वचनीयत्वं विवक्षितमपि तु पारिभाषिकम्। वेदान्तराद्धान्ते "अनिर्वचनीयत्वम्" सद्रूपेणासद्रूपेण सदसद्रूपेण च निर्वक्तुमशक्यत्वरूपमिति भवति।

## प्रपञ्चमिथ्यात्वम्

ब्रह्मैव एकमात्रं सत्यमिति अद्वैत-वेदान्तसिद्धान्तः। अतः ब्रह्म-व्यतिरिक्तस्य समस्तप्रपञ्चस्य मिथ्यात्वं स्वतः सिद्ध्यति। उक्तञ्च प्राचीनैः —

श्लोकार्द्धेन प्रवक्ष्यामि यदुक्तं ग्रन्थकोटिभिः।
ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः।।

यथा शुक्तिरजतस्य प्रसिद्धेऽपि मिथ्यात्वे रजताकारेण भवति तस्य भानम्, यथा वा रज्जुसर्पं दृष्ट्वा भीतिरुत्पद्यते यथा च स्वप्नावस्थायां देशान्तरपर्यटनं भवतीति सुदृढत्वेन भाति, परन्तु अधिष्ठानज्ञानानन्तरं जाग्रदवस्थायां वा तत्सर्वं भ्रान्तिरेवेति निश्चीयते। तथा मिथ्याभूतोऽपि प्रपञ्चः व्यवहारकाले भाति अधिष्ठान-भूतब्रह्मसाक्षात्कारे सम्पन्ने च निवर्ततेऽतो प्रपञ्चोऽपि भासन्नपि रज्जुसर्पवत् मिथ्यैव। एतदर्थं लक्षणप्रमाणाभ्यां दर्शयति प्रपञ्चमिथ्यात्वं श्रीचित्सुखाचार्यवर्यः —

सर्वेषामपि भावानामाश्रयत्वेन सम्मते।
प्रतियोगित्वमत्यन्ताभावं प्रति मृषात्मता।।

तथाहि—

"पटादीनां भावानां स्वाश्रयत्वेनाभिमतास्तन्त्वादयो।
ये तन्निष्ठात्यन्ताभावप्रतियोगितैव तेषां मिथ्यात्वम्।।"[५]

---

१. बृहदारण्यकोपनिषत्, ४.३.१०.
२. ब्रह्मसूत्रम्, ३.२.१.
३. तदेव, ३.२.३.
४. तैत्तिरीयोपनिषत्, २.१.
५. तत्त्वप्रदीपिका, पृ० ६७ (षड्दर्शनप्रकाशन, वाराणसी)

प्रमाणं यथा—

"अंशिनः स्वांशगात्यन्ताभावस्य प्रतियोगिनः।
अंशित्वादितारांशीव दिगेषैव गुणादिषु।।"

विमतः पटः एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी अवयवित्वात्पटान्तरवत्। एवमेतद्गुणकर्मजात्यादयोऽपि तत्तत्तन्तुनिष्ठात्यन्ताभावप्रतियोगिनः तत्तद्रूपत्वा-दितरतत्तद्रूपवदित्येवमादि प्रयोगः।[१]

स्वीय अधिष्ठाने एव वस्तुनः अत्यन्ताभावः सिद्धेश्चेदन्यत्र नास्तीति कौमुतिकन्यायेनैव मिथ्यात्वं सिद्ध्यति। आनन्दबोधाचार्यः न्यायदीपावल्युपक्रमे "विवादपदं मिथ्या दृश्यत्वात्"[२] इति कथयित्वा प्रपञ्चस्य मिथ्यात्वं प्रतिपादितवान्। अद्वैतसिद्धिकारोऽपि प्रपञ्चस्य मिथ्यात्वप्रतिपादनाय हेतुत्रयं दत्त्वा विरोधनिरसनञ्च कृत्वा प्रपञ्चस्य मिथ्यात्वं द्रढयति—"विमतं मिथ्या, दृश्यत्वात्, जड़त्वात्, परिच्छिन्नत्वात् शुक्तिरूप्यवत्" इति।

लक्षणपञ्चकञ्चावतारितं सिद्धिकारैः प्रपञ्चस्य मिथ्यात्वप्रतिपादनाय। तथाहि—

१. सदसद्विलक्षणत्वम् नाम मिथ्यात्वम्। लक्षणमिदं "मिथ्याशब्दोऽनिर्वच-नीयतावचनः" इति पञ्चपादिकाकारवचनादपि सुदृढं भवति। तत्त्वज्ञानेन बाध्यमानत्वात् प्रपञ्चस्य सत्त्वं न सिद्ध्यति।
अज्ञानदशायां प्रतीयमानत्वात् बन्ध्यापुत्रवदलीकोऽपि वक्तुं न पार्यते। अपि च ब्रह्मणः सद्रूपत्वेन तदत्यन्ताभावानधिकरणत्वात् निर्धर्मकत्वेनैवाभाव-रूपधर्मानधिकरणत्वाच्च ब्रह्मणि लक्षणस्य नातिव्याप्तिः। लक्षणमिदं "नासदासीत् नो सदासी"[३] दित्यादि श्रुत्यनुसारेणोक्तम्।

२. मिथ्यात्वं नाम प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वम्। अत्र "नेह नानास्ती"[४]-त्यादिश्रुत्यर्थं कथितवान्।

३. "ज्ञाननिवर्त्यत्वं वा मिथ्यात्वम्"। अत्र आत्मसाक्षात्कारत्वेन ज्ञाननिवर्त्यत्वं विवक्षितम्। तत्त्वज्ञानेन प्रपञ्चस्य निवर्त्यत्वात् प्रपञ्चस्य मिथ्यात्वं सिद्ध्यति। "विद्वान् नामरूपाद्विमुक्तः" इत्यादिश्रुत्यनुसारेणोक्तमिदं लक्षणम्।

४. "स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वं वा मिथ्यात्वम्।" तच्च स्वात्यन्ताभावाधिकरण एव प्रतीयमानत्वम्। अत्रापि द्वितीयलक्षणमिव "नेह नानास्ति किञ्चन" इति श्रुत्यर्थं कथितवान्।

---

१. तत्त्वप्रदीपिका, पृ० ६९.
२. वेदान्तदर्शनेर इतिहास (बंगला), पृ० १४१.
३. तैत्तिरीयब्राह्मण, २.८.९.७; ऋक्संहिता, १०.१२९.१.
४. बृहदारण्यकोपनिषत्, ४.४.१९.

५. ''सद्विविक्तत्वं वा मिथ्यात्वम्।''

सत्त्वं च प्रमाणसिद्धत्वम्। प्रमाणत्वञ्च दोषासहकृतज्ञानकरणत्वं, तेन स्वप्नादिवत्प्रमाणसिद्धभिन्नत्वेन प्रपञ्चस्य मिथ्यात्वं सिद्ध्यति। अत्र पुनः प्रथमलक्षणोक्तं ''नासदासीत्'' इत्यादि श्रुत्यर्थमेवोक्तम्।

अत्र खलु प्रथममिथ्यात्वलक्षणं पञ्चपादिकाकारसम्मतम्, द्वितीयं तृतीयञ्च मिथ्यात्वलक्षणं विवरणाचार्योक्तम्, चतुर्थमिथ्यात्वलक्षणं पुनः चित्सुखाचार्यवचनानुसारेण प्रोक्तम्, आनन्दबोधाचार्योक्तं पञ्चममिथ्यात्वलक्षणं वर्तते। उक्तं हि लघुचन्द्रिकाकारेण—

''आद्यं स्यात् पञ्चपाद्योक्तं ततो विवरणोदिते।[१]
चित्सुखीयं चतुर्थं स्यादन्तिमानन्दबोधजम्।।
इति पञ्चविधं प्रोक्तं मिथ्यात्वं ध्वान्तनाशकम्।।''[२]

''एकमेवाद्वितीयम्''[३] ''नेह नानास्ति किञ्चन''[४] ''इन्द्रो मायाभिः पुरुरूप ईयते'',[५] ''मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति'',[६] ''नेति नेति आत्मा''[७] ''यत्र नान्यत्पश्यति नान्यच्छृणोति''[८] इत्यादयः श्रुतयोऽपि प्रपञ्चस्य मिथ्यात्वमेव प्रकटयन्ति।

दृग्दृश्यसम्बन्धानुपपत्तिरूपार्थापत्तिः ''तरतिशोकमात्मवित्''[९] इति श्रुतिबोधित-ज्ञाननिवर्त्यत्वानुपपत्तिरूपार्थापत्तिश्चापि प्रपञ्चमिथ्यात्वे प्रमाणम्।

## मोक्षस्वरूपविचारः

अद्वैतवेदान्तानुसारेण मोक्षस्य साध्यमिव (फलमिव) व्यवहृतेऽपि तत्र साध्यत्वं नास्ति, आत्मस्वरूपत्वात् नित्यसिद्धत्वाच्च। वस्तुतस्तु मोक्षप्राप्तिः स्वरूपावाप्तिः प्राप्तस्यैव प्राप्तिः, विस्मृतस्वकण्ठगतचामीकरस्य बोधे यथा प्राप्तिः तथैव। अज्ञाननिबन्धनदुःखरूपानर्थस्य निवृत्त्यपि आत्मन्यारोपितस्य मिथ्याभूतस्यानर्थस्य निवृत्तिरिति नित्यनिवृत्तेरेव निवृत्तिः। नित्य-शुद्ध-बुद्ध-मुक्त-ब्रह्मात्मस्वरूपस्य अज्ञानवशादेव मनुष्यः आत्मानं कर्ता-भोक्ता-सुखी-दुःखी जीव इतिमत्वाऽब्रह्मेवामुक्त इव सकलाननर्थानवाप्नोति। अज्ञानस्यावरणः ब्रह्मसत्तां चैतन्यं नावृणोति, अपि तु ब्रह्मात्मनः पूर्णानन्दरूपतामावृणोति, अत एव जीवस्य बन्धनान्यनर्थप्राप्तिश्च भवन्ति। आत्मनः आनन्दरूपतामावृणोति इत्यपि वक्तुं न पार्यते। यतः आत्मनः आनन्द-

---

१. विवरणोदिते इति द्विवचनप्रयोगात् द्वितीयतृतीयमिथ्यात्वं विवरणकारोक्तमिति भावः।
२. लघुचन्द्रिका, पृ० २०६.
३. छान्दोग्योपनिषत्, ६.२.१.
४. बृहदारण्यकोपनिषत्, ४.४.१९.
५. ऋग्वेदसंहिता, ४१.१८.
६. कठोपनिषत्, २.१.११.
७. बृहदारण्यकोपनिषत्, ३.९.२६, ४.२.४.
८. छान्दोग्योपनिषत्, १.२४.१.
९. तदेव, ७.१.३.

रूपताऽऽवृते सति आत्मानम्प्रति स्वाभाविकं परमप्रेमास्पदत्वं नोत्पद्यते। पक्षे पुनः आत्मानन्दस्य परमता परिपूर्णता वा प्रकाशिते सति क्षुद्रविषयानन्दाय अस्माकं विषये स्पृहा न स्यात्। पञ्चदशीकाराः पुनः कथयन्ति—"अस्माकं समीपे आत्मनः परमानन्दरूपता प्रकाशिताऽपि न प्रकाशते।[१] अनाद्यविद्यारूपप्रतिबन्धकस्य सद्भावादेव, तादृशरूपताप्रकाशमानापि अप्रकाशमाना इव भवति। अधिकारी साधकः श्रवणादिसाधनैः अनाद्यविद्यात्मके प्रतिबन्धके विदुरिते, आत्मनश्च पूर्णानन्दतायां प्रकाशितायां सत्यां जीवन्मुक्तो भवति। अस्यामवस्थायां स्वरूपस्य नित्य-शुद्ध-मुक्ततोपलब्धत्वात् देहादावात्मबुद्धिविलोपाच्च, साधकः शरीरयुक्तो सन्नपि अशरीरत्वेन तिष्ठति, चक्षुरादियुक्तोऽपि अचक्षुरिव तिष्ठति।[२]

श्रीसुरेश्वराचार्योऽपि नैष्कर्म्यसिद्धेः चतुर्थाध्याये मुक्तिप्रकारं सुष्ठु-निरूपितवान्। तथाहि—

ज्ञेयाभिन्नमिदं यस्माज्ज्ञेयवस्त्वनुसार्यतः।
न प्रवृत्तिं निवृत्तिं वा कटाक्षेणापि वीक्ष्यते।।
प्रागात्मबोधाद्बोधोऽयं बाह्यवस्तूपसर्जनः।
प्रध्वस्ताखिलसंसार आत्मैकालम्बनः श्रुतेः।।
वास्तवेनैव वृत्तेन निरुणद्धि यतो भवम्।
निवृत्तिमपि मृद्गाति सम्यग्बोधः प्रवृत्तिवत्।।
सकृदात्मप्रसूत्यैव निरुणद्ध्यखिलं भवम्।
ध्वान्तमात्रनिरासेन न ततोऽन्यान्यथामतिः।।
देशकालाद्यसंबन्धाद्देशादेर्मोह कार्यतः।
नानुत्पन्नमदग्धं वा ज्ञानमज्ञानमस्त्यतः।।
सम्यग्ज्ञानशिखिप्लुष्टमोहतत्कार्यरूपिणः ।
सकृन्निवृतेर्बाध्यस्य किं कार्यमवशिष्यते।।[३] इत्यादिभिः।

## जीवन्मुक्तिः

वेदान्तदर्शनानुयायिनः जीवन्मुक्तिविदेहमुक्तिभेदेन द्विविधां मुक्तिं स्वीकुर्वन्ति। तत्र तत्त्वज्ञानोपलब्ध्यनन्तरमपि जीवितावस्थायां, विद्यमानप्रकारः जीवन्मुक्तिरिति कथ्यते। तथाहि—"अहं ब्रह्मास्मि" इत्याकारकस्वस्वरूपाखण्ड-शुद्ध-बुद्ध-मुक्तस्वभाव-

---

१. अभाने न परं प्रेम भाने न विषयस्पृहा।
अतो भानेऽप्याभाताऽसौ परमानन्दतात्मनः।। पञ्च०, १.११.

२. स चक्षुरचक्षुरिव...पश्यन्नपि" (इन्द्रजालवत्) बाधितत्वात् परमार्थतो न पश्यति। (वेदान्तसारः)।

३. नैष्कर्म्यसिद्धिः, ४.५४-५९.

ब्रह्मसाक्षात्कारानन्तरमज्ञानं तत्कार्यं द्वैतप्रपञ्चो बाधितो भवति। परन्तु प्रारब्धकर्मवशात् यः शरीरधारणं करोति सः जीवन्मुक्तः। एवं जीवन्मुक्तः पुरुषः जाग्रद्दशायां (असमाहितस्थितौ) रक्तमांसादेराधारं स्थूलशरीरम्, अन्धत्वादेः धर्मस्याधारमिन्द्रियम्, क्षुधा-तृष्णा-शोक-मोहादेश्चाधारमन्तःकरणञ्चेत्येतेभ्यः ज्ञानस्याविरोधेन प्रारब्धमुपभुञ्जन् दृश्यमानं जगद् दृष्ट्वापि न पश्यति अर्थात् (मिथ्येति ज्ञात्वा) आस्थां न स्थापयति। ऐन्द्रजालिकपदार्थानां स्वरूपज्ञाने सति दृष्ट्वापि वस्तुसमूहं, तत्र सत्यताबोधो न भवतीव। अनुभूतेऽपि तत्त्वज्ञाने जीवन्मुक्तस्य प्रारब्धकर्मरूपप्रतिबन्धकवशात् तत्त्वज्ञानेन आवरणशक्तिविशिष्टाज्ञाने विनष्टेऽपि तदीयविक्षेपशक्तेर्विनाशो न भवति। तेन शरीरादेरनुवृत्तिर्भवतीत्येके। अन्ये तु सुप्रक्षालितेऽपि लशुनभाण्डे यथा तद्गन्धस्य भवत्यनुवृत्तिः कियत्कालपर्यन्तम्। प्रारब्धकर्मवशात् अविद्यासंस्कारोऽपि तथैवानुवर्तते। केचित्तु दग्धेऽपि पटादेः किञ्चित्कालपर्यन्तं यथा पूर्ववदनुवर्तते, किन्तु परिधानयोग्यता तु तत्र नास्ति, तथैव विनष्टेऽपि अज्ञाने तिष्ठति तस्याभासः, परन्तु तत्र संसारबन्धनादि-रूपकार्यकारिता नास्ति। इयमेव जीवन्मुक्तिः।

विषयेऽस्मिन् श्रीसुरेश्वराचार्योऽपि नैष्कर्म्यसिद्धेः चतुर्थाध्याये जीवन्मुक्तिस्थितिं निरूपितवान्। तथाहि—

निवृत्तसर्पस्सर्पोत्थं यथा कम्पं न मुञ्चति।
विध्वस्ताखिलमोहोऽपि मोहकार्यं तथात्मवित्।।
तरोरुत्खातमूलस्य शोषेणैव यथा क्षयः।
तथा बुद्धात्मतत्त्वस्य निवृत्यैव तनुक्षयः।।
बुद्धाद्वैतसतत्त्वस्य यथेष्टाचरणं यदि।
शुनां तत्त्वदृशां चैव को भेदोऽशुचिभक्षणे।।[१]

भगवता भाष्यकारेणापि चतुर्थसूत्रस्य भाष्यरचनावसरे "नावगतब्रह्मात्मभावस्य यथापूर्वं संसारित्वं शक्यं दर्शयितुं, वेदप्रमाणजनितब्रह्मात्मभावविरोधात्"[२]— इत्यादिवचनैः जीवन्मुक्त्यवस्थां प्रतिपादितम्। अपि च तेनैव वाक्यवृत्तावपि शब्दतः इयमवस्थां कथितम्। तथाहि—

प्रारब्धकर्मवेगेन जीवन्मुक्तो यदा भवेत्।
किञ्चित्कालमनारब्धकर्मबन्धस्य संक्षये।।[३]

संक्षेपशारीरककारादयस्तु[४] जीवन्मुक्तिं न स्वीकुर्वन्ति। तेषां मते "तस्य तावदेव चिरं यावन्न विमोक्षे"[५] इत्यादीनि श्रुतिवाक्यानि श्रवणविधेरर्थवादपराण्येव। तत्त्वसाक्षात्कारे

१. नैष्कर्म्यसिद्धिः, ४.६०-६२
२. ब्रह्मसूत्र, शाङ्करभाष्यम्, १.१.४.
३. वाक्यवृत्तिः, ५२-५७.
४. आदिशब्देन वेदान्तसिद्धान्तमुक्तावलीकारादयः।
५. छान्दोग्योपनिषत्, ४.१४.२.

सति आविद्यकवस्तुनः समूलनिवृत्तिर्भवति, अतोऽविद्यालेशस्यानुवृत्तिरसम्भवः। उक्तं हि—

सम्यग्ज्ञानविभावसुः सकलमेवाज्ञानतत्सम्भवं
सद्यो वस्तुबलप्रवर्तनमरुद्व्यापारसन्दीपितः।
निर्लेपेन हि दन्दहीति न मनागप्यस्य रूपान्तरं
संसारस्य शिनष्टि तेन विदुषः सद्यो विमुक्तिर्ध्रुवा॥[१]

जीवन्मुक्तिविषये श्रुतिप्रमाणं यथा— "ब्रह्मवेद ब्रह्मैव भवति"[२] "तरति शोकमात्मवित्"[३] "सचक्षुरचक्षुरिव सकर्णोऽकर्ण इव समना अमना इव सप्राणोऽप्राण इव"[४] "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥"[५] "तद्यथाहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेते"[६] "तस्य तावदेव चिरं यावन्न विमोक्ष्ये"[७] स्मृतिप्रमाणं यथा—

"प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान्।
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते"॥[८]

जीवन्मुक्त्यवस्थास्वीकारं विना आचार्यपरम्परायाः लोपप्रसङ्गः। कृततत्त्वसाक्षात्कारः पुरुष एवाचार्यो भवितुमर्हति। उक्तं हि—

आचिनोति च शास्त्रार्थमाचारे स्थापयत्यपि।
स्वयमाचरयेद् यस्तु स आचार्य इति स्मृतः॥

तत्त्वसाक्षात्कारानन्तरमपि जीवनधारणमन्तरेण तत्त्वोपदेशादिकं न सम्भवति। जीवन्मुक्तिस्वीकारं विना ब्रह्मविद्यासम्प्रदायप्रवर्तकाचार्याणामपि अस्वीकारापत्तिः।

## विदेहमुक्तिः

प्रारब्धभोगावसाने ज्ञानिनः उत्क्रमणं गमनम्वा काऽपि क्रिया नास्ति। अत्रैव ब्रह्मनिर्वाणः भवति। "न तस्य प्राणा उत्क्रामन्ति, इहैव समवलीयन्ते"[९] इति च श्रुतेः। इयमेव परामुक्तिः, विदेहमुक्तिः, मोक्षः, ब्रह्मनिर्वाणमिवेत्यादिशब्दैरभिधीयते।

## क्रममुक्तिः

अपराऽपि एका मुक्ति वेदान्तिभिः स्वीकृता। ये पुनः सगुणब्रह्मणः परमेश्वरस्य

---

१. संक्षेपशारीरकम् ४.३८.
२. मुण्डकोपनिषत्, ३.१.९.
३. छान्दोग्योपनिषत्, ७.१.३
४. तदेव, ८.२.१.
५. मुण्डकोपनिषत्, २.२.८.
६. बृहदारण्यकोपनिषत्, ४.४.७.
७. छान्दोग्योपनिषत्, ६.१४.२.
८. श्रीमद्भगवद्गीता, २.५५.
९. बृहदारण्यकोपनिषत्, ४.४.६.

वा एकनिष्ठोपासनाद्वारेण भक्तिविशेषेण वा सिद्धाः भवन्ति, ते तेषां शरीरान्तेऽभीष्टलोकं (ब्रह्मलोकं सत्यलोकं देवलोकम्वा) गच्छन्ति, अभीष्टकालपर्यन्तं तत्तल्लोके स्वेष्टदेव समीपे तिष्ठन्ति। अयम्प्रकारः ब्रह्मलोकप्राप्तिरूपापेक्षिकमुक्तिरित्यभिधीयते। अस्मिन्नेव ब्रह्मलोके तेषां ब्रह्मनिर्वाणाकाङ्क्षोत्पद्यते चेत् तदा ते तत्रैव श्रवणादिसाधनैः तत्त्वज्ञानमधिगत्य ब्रह्मनिर्वाणः प्राप्नुवन्ति। तदुक्तं परिभाषाकारैः—"सगुणोपासकानां चार्चिरादिमार्गेण ब्रह्मलोकगतानां तत्रैव श्रवणादुत्पन्नतत्त्वसाक्षात्काराणां ब्रह्मणा सह मोक्षः।"[१] यतः ब्रह्मलोकगतानां पुरुषाणां स्वाराज्यलाभ अर्थात् सङ्कल्पमात्रादेव भवति तद्विषये सिद्धिः।[२] एवम्प्रकारेणोपासनया भक्त्या वा ब्रह्मलोकं सम्प्राप्य तस्मात् क्रमशः परामुक्तिं प्राप्नुवन्ति।[३] एषा एव "क्रममुक्ति"रित्यभिधीयते।

## अद्वैतवेदान्ते भक्तितत्त्वम्

जगन्मिथ्याप्रतिपादकवेदान्तसम्प्रदायेऽपीश्वरोपासनायाः भक्तेश्चोपयुक्तस्थानं विद्यते। श्वेताश्वतरोपनिषदि भक्तिभावोऽत्यन्तप्रकटरूपेणास्ति। ब्रह्मात्मविज्ञानस्योपायरूपेणाप्यस्ति भक्तेर्विशिष्टस्थानमत्र। उक्तं हि—

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।
तस्यैते कथिताह्यर्थाः प्रकाशन्ते महात्मनाः॥

(श्वे. उ. ६.२३)

नन्वद्वैतवेदान्तराद्धान्ते नित्य-शुद्ध-बुद्ध-मुक्तस्वरूपः निर्विशेषः ब्रह्मात्मैव एकमात्रसत्यत्वात्, ईश्वरजीवादयः सर्वे मायायाः कार्यत्वाच्च मिथ्यात्वेनाभिहिताः, अत एवात्रेश्वरभक्तिः कथं सम्भवेत्? इति चेदुच्यते, ईश्वरस्य यदीश्वरत्वंप्रभूत्वादिकम्वा, तदेव मायिकमपारमार्थिकं च भवति। न तु स्वयमीश्वरोऽपि मायिकमपारमार्थिकम्वा भवति, तस्य साक्षात्ब्रह्मस्वरूपत्वात्। तथाहि—जीव-जगतोः मिथ्यात्वात्तेषामुपरि यत्प्रभूत्वमीश्वरत्वम्वा तदपि मिथ्यैव। अनेन भक्तेः न्यूनतापत्तिरपि

१. वेदान्तपरिभाषा, प्रयोजनपरिच्छेदः।
२. "आप्नोति स्वाराज्यम्" (तैत्तिरीय, १.६२)
"यं कामं कामयते सोऽस्य सङ्कल्पादेव समुतिष्ठति।" (छान्दोग्योपनिषत्, ८.२.१०)
३. विषयेऽस्मिन् "अन्तस्तद्धर्मोपदेशात्" (ब्र.सू., १.१.२०) इति सूत्रस्थकल्पतरुवचनमप्युपलभ्यते। तथाहि—

निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः।
ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः ॥ १ ॥
वशीकृते मनस्येषां सगुणब्रह्मशीलनात्
तदेवाविर्भवेत्साक्षादपेतोपाधिकल्पनम् ॥ २ ॥ इति।

नास्ति। यत्परिमिता जीवस्य सत्यता, तत्परिमितेश्वरस्यापि सत्यताऽस्ति ततोऽधिको वा। यतः मलिनसत्त्वोपाधिविशिष्टः खलु जीवः, ईश्वरस्तु विशुद्धसत्त्वोपाधिविशिष्टः भवति। जीवो अल्पज्ञः, ईश्वरस्तु सर्वज्ञः, जीवः मायाधीनः ईश्वरस्तु मायाधीशोऽस्ति। तस्मात् भक्तेः कापि बाधायाः न्यूनतायाः वा शङ्का न करणीयाः व्यावहारिकसत्तायामद्वैत-वेदान्तेऽपि। जीवेश्वरयोरभिन्नता पारमार्थिकसत्तायामेव भवति। अद्वैततत्त्वबोधार्थमपि ईश्वरस्यानुग्राहकता स्वीकृता खलु सम्प्रदायाचार्यैः। तथाहि—

ईश्वरानुग्रहादेषा पुंसामद्वैतवासना।
महाभयकृतत्राणा द्वित्राणां यदि जायते।।

श्लोकोऽयं श्रीहर्षविरचिते खण्डनखण्डखाद्ये[1] अवधूतगीतायाञ्च[2] वर्तते। भगवता भाष्यकारेणापि ईश्वरोपसनार्थं निर्देशः कृतः —

यावज्जीवस्त्रयो वन्द्यः वेदान्तगुरुरीश्वरः।
आदौ ज्ञानप्रसिद्ध्यर्थं कृतघ्नताऽपनुत्तये।।[3]

अद्वैततत्त्वावधारणाय अन्तःकरणस्य शुद्धत्वं परं प्रयोजनमिति वेदान्त-विदामभिप्रायः। तदर्थमपि व्यावहारिकसत्तायां द्वैतवादानुरोधेन ईश्वरोपासनया चित्तशुद्धिरवश्यंकरणीया। भगवद्भक्तेः चरमफलन्तु चित्तशुद्धिरिति चैतन्यमहाप्रभूणाऽपि भणितम् स्वीय शिक्षाष्टके—''चेतोदर्पणमार्जनम्...श्रीकृष्णसंकीर्तनमिति।''[4]

ईश्वरभक्तिव्यतिरेकेऽपि सामान्यतः श्रद्धा-भक्ति-अनुरागस्य वा विशिष्टस्थानं वर्तते खल्वद्वैतवेदान्तसम्प्रदाये। उक्तञ्च श्रुतौ-''श्रद्धा-भक्ति-ध्यानयोगादवेहि'' इति (कौ.उ. १/२)। ब्रह्म-जिज्ञासा-ब्रह्मतत्त्व-विज्ञानाय तीव्रेच्छा-अनुरागस्य भक्तेर्वा पर्याय एव।

उक्तं हि भगवता भाष्यकारेण—''स्वस्वरूपानुसन्धानं भक्तिरित्यभिधीयते'' (विवेकचूड़ामणिः ३१)। स्वात्मस्वरूपानुसन्धानात्मिका या वृत्ति सैव भक्तिशब्देनाभिधीयते इति भावः। ''तीव्रसंवेगानामासन्नः'' (पा.यो.द. १.२१) ये खलु योगिनः

---

१. खण्डनखण्डखाद्यम्, १.२४.

२. अवधूतगीतायां श्लोकोऽयमित्थं वर्तते—
ईश्वरानुग्रहादेव पुंसामद्वैतवासना।
महद्भयपरित्राणा विप्राणामुपजायते ।। १ ।।

३. सारतत्त्वोपदेशः।

४. चेतोदर्पणमार्जनं भवमहादावाग्निनिर्वापणं
श्रेयः कैरवचन्द्रिकावितरणं विद्यावधूतजीवनम्।
आनन्दाम्बुधिवर्द्धनं प्रतिपदं पूर्णामृतास्वादनं
सर्वात्मस्नपनं परं विजयते श्रीकृष्णसंकीर्तनम्।। शिक्षाष्टकम् १

तीव्रसम्वेगविशिष्टाः तेषामेव समाधिलाभः (आत्मज्ञानम्वा) सन्निकटस्थ इति भावः। अत्रापि तीव्रसंवेगः भक्तेर्नामान्तरमात्रमिति द्योतयति। एवं भक्तेरनुरागस्य वोचितं स्थानं विद्यत एवाद्वैतवेदान्ते।

## ब्रह्मज्ञानेन जगन्मिथ्यात्वनिश्चयः

अद्वैत-वेदान्त-सिद्धान्तानुसारेण सम्प्राप्ते सति ब्रह्मात्मविज्ञाने भवति प्रपञ्चस्य बाधः, अत्र प्रपञ्चस्य बाधो नाम भवति हि तस्य समग्रस्य मिथ्यात्वनिश्चयः। जगतः बाधः, बाधितं वा भवति जगत्, इत्यस्यार्थो न हि जगल्लोपः, जगतः प्रतीत्यभावो वा, अपितु अस्य भवति मिथ्यात्वनिश्चयः। जगतः प्रतीत्यभावे विद्यमानेऽपि सुषुप्तौ मुर्च्छायाम्वा न तत्र तत्त्वज्ञानं, न भवति वा मोक्षस्तेन। उक्तं हि—

"नाप्रतीतिस्तयोर्वाधः किन्तु मिथ्यात्वनिश्चयः।"
नो चेत् सुषुप्तिमूर्च्छादौ मूच्येतायत्नतो जनः॥"

पञ्चदशी, ६/१५

## ब्रह्मज्ञानिनः सर्वात्मभावः

ब्रह्मज्ञानिनः सर्वात्मदर्शनं सर्वात्मभावो वा भवति प्रत्यक्षफलम्। "तस्मात्तत् सर्वमभवत्"[१], "अत्र ह्येते सर्वमेकी भवन्ति"[२], "सर्वमात्मानं पश्यति"[३] इति च श्रुतेः। सर्वात्मभावत्वात् सर्वेषामानन्दः स्वीयानन्दरूपेणोपभुज्यते, परन्तु विशुद्ध-सत्त्वगुणाश्रयत्वात् सर्वेषां मालिन्यं तापश्च तं न स्पृशति। अपि च करुणास्वभाववशाच्च सर्वेषां दुःखम्प्रति सहानुभूतौ उत्पन्नायामपि तत्र न रजपरिणाम—दुःखानुभवः, अपि तु तद्रजोदुःखाद्विजातीया विलक्षणा सात्त्विकी परदुःखकातरतां करुणा वेति[४] भावः। इयं करुणा कृपा वा जीवन्मुक्तस्य ज्ञानिनः स्वभावः। एतत्स्वभाववशादेव सः परदुःखे दुःखी भूत्वा ज्ञानोपदेशं करोति। अन्यथा तस्य स्वीयप्रयोजनाभावात् शिष्यणाम्प्रति उपदेशप्रदाने न प्रवर्त्तेत।[५] अनेन ब्रह्मविद्यासम्प्रदायोच्छेदापत्तिरपि स्यात्।

---

१. बृ.उ., १.४.१०.
२. तदेव, ४.१४.१०
३. तदेव, ४.४.२३
४. "आत्मौपम्येन सर्वत्र समं पश्यति योऽर्ज्जुन।
सुखं वा यदि वा दुखः स योगी परमो मतः॥ गीता, ६.३२.
५. परमकृपया एनमुपदिशति (वे.सा.)

# ज्ञानकर्मसमुच्चयनिरासः

धर्मार्थकाममोक्षाणां चतुर्विधपुरुषार्थानां मध्ये मोक्षस्यैव परमपुरुषार्थत्वमिति जानन्त्येव शास्त्रज्ञाः। मोक्षश्चाविद्यानिवृत्तिरेव "अविद्यास्तमयो मोक्षः"[१] इति वचनात्। सा चाविद्या ज्ञानादेव निवर्त्तते। भगवान् भाष्यकारोऽपि केवलादात्मज्ञानादेव परमनिःश्रेयसरूपो मोक्षो भवतीति श्रौत-स्मार्तसिद्धान्तं प्रतिपादितवान्। तदसहमानाः केचन ज्ञानकर्मसमुच्चयं मुक्तिकारणमिति प्रतिपादयन्ति। तथाहि—

"तमेतं वेदानुवचनेन ब्राह्मणाः विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन..."[२] इत्यादि श्रुतौ यज्ञादीनां ब्रह्मविज्ञानोपायत्वं प्रदर्शितम्। "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समा"[३] इति यावज्जीवं कर्मविधानं श्रूयते। "तं विद्याकर्मणी समन्वारभेते"[४] इति च ज्ञानकर्मणोः उत्क्रान्त्यादिषु सहभावः दृश्यते, कर्मठानां जनकादीनामपि निर्गुणब्रह्मज्ञाननिष्ठत्वं श्रूयते। तस्मात् ज्ञानकर्मणः समुच्चयं मोक्षसाधनमिति भाति।

एवमेव श्रीमद्भगवद्गीतायामपि अग्निहोत्रादिश्रौतस्मार्तकर्मसहिताज्ज्ञानात्कैवल्यं प्राप्यते इति निश्चितोऽर्थः। "अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि"[५] "कर्मण्येवाधिकारस्ते"[६] "कुरु कर्मैव तस्मात्त्वम्"[७] "स्वधर्ममपि चावेक्ष्य"[८] "पूर्वैः पूर्वतरं कृतम्"[९] "कर्मणैव हि संसिद्धिमास्थिता जनकादयः"[१०] इत्यादीनि गीतावाक्यानि ज्ञानकर्मणोः समुच्चयमेव द्योतयन्ति। अन्यथा मोक्षनिरूपकगीताशास्त्रे कर्मणः वैशिष्ट्यं न कथनीयमासीत्। तस्मात् ज्ञानकर्मणोः समुच्चयादेव भवति मुक्तिरिति।

तच्चायुक्तम्, "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" इति आत्मलोकेच्छया संन्यासविधानात्। स्वातन्त्र्येण कर्मानुष्ठातुमनर्हायै मैत्रेय्यै आत्मज्ञानमुपदिश्य याज्ञवल्क्येन संन्यासग्रहणश्रवणाच्च।[११] "एतमेव प्रव्राजिनो लोकमिच्छन्तो ब्राह्मणाः प्रव्रजन्ति" इति शतपथब्राह्मणोक्तिरपि सर्वकर्मसंन्यासं विदधाति, तच्छेषेण च "किं प्रजया करिष्यामो येषां नोऽयमात्मायं लोकः"[१२] इति। निषेकादिश्मशानान्तानि सर्वाणि खलु श्रुतिस्मृतिविहितानि कर्माणि अविद्यापराण्येव भवन्ति। तथाहि "धर्मजिज्ञासोत्तरकालं विवाहात्पूर्वमाकाङ्क्षितं लोकत्रयसाधनभूतं पुत्रं मानुषं दैवञ्चेतिद्विप्रकारं वित्तं, तत्र मानुषं वित्तं कर्मरूपं पितृलोकप्राप्तिसाधनं विद्याञ्च दैवं वित्तं देवलोकप्राप्तिसाधनं

---

१. पञ्चपादिका
२. बृहदारण्यकोपनिषत्, ४.४.२२.
३. ईशावास्योपनिषत्, २.
४. बृहदारण्यकोपनिषत्, ४.४.२.
५. श्रीमद्भगवद्गीता, २.३३.
६. तदेव, २.४७.
७. श्रीमद्भगवद्गीता, ४.१५.
८. तदेव, २.३१.
९. तदेव, ४.१५.
१०. तदेव, ३.२०.
११. बृहदारण्यकोपनिषत्, ४.४.२२.
१२. तदेव, ४.४.२२.

सर्वमेवाज्ञानप्रसूतमिति'' श्रुतौ[१] प्रदर्शितम्। ''तेभ्यो व्युथाय प्रव्रजन्ति''[२] इति कर्मत्यागपूर्वकं केवलज्ञानमार्गावलम्बनमेव मोक्षाङ्गत्वेन प्रतिपादितम्। ''तमेव विदित्वाऽतिमृत्युमेति, नान्यः पन्था विद्यतेऽयनाय''[३] इत्यादीनि श्रुतिवाक्यान्यपि कर्मनिरपेक्षज्ञानमेव मुक्ति-साधकत्वेन प्रदर्शितानि।

श्रीमद्भगवद्गीतायां यज्ज्ञानकर्मसमुच्चयाशङ्का सा सर्वा भगवता भाष्यकारेणैव निराकृता तत्र तत्र।[४] तथाहि—तृतीयाध्यायस्यारम्भे ''ज्यायसी चेत्कर्मणस्ते मता बुद्धि''[५]रिति प्रश्न एवानुपपन्नः स्यात्, यदि भगवता वासुदेवेन एकपुरुषानुष्ठेयत्वासम्भवं बुद्धिकर्मणोः पूर्वमनुक्तम् कथमर्जुनोऽश्रुतं बुद्धेश्च कर्मणोजायस्त्वं भगवत्यध्यारोपयेत्।

अपि च बुद्धिकर्मणोः सर्वेषां समुच्चय उक्तः स्याच्चेदर्जुनस्यापि स उक्त एवेत्युभयोरुपदेशे सति ''यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितमि''[६]ति अन्यतरविषयकः प्रश्न एव कथं पुनरुपपद्यते। पित्तप्रशमनार्थिनो वैद्येन मधुरं शीतञ्च भोक्तव्यमितिकथिते सति तयोरन्यतरत्पित्तप्रशमनकारणं ब्रूहीति प्रश्नः यथा न सम्भवति तथाऽत्रापि।

यदि अर्जुनस्य भगवदुक्तवचनार्थसम्यगनवबोधनिमित्तः प्रश्नः कल्प्येत, तर्हि प्रश्नानुरूपं प्रतिवचनं न स्यात्, परन्त्वत्र स्पष्टतया प्रश्नानुरूपमेव भगवदुक्तं प्रतिवचनं वर्तते अन्यथा तत्रोक्तं स्यात् भगवता—''मया ज्ञानकर्मणोः समुच्चय उक्तः, किमर्थं त्वयेत्थं विभ्रान्तिकरः प्रश्नः पृच्छ्यते। किन्तु तथा नास्ति। अतः ज्ञानकर्मणोः समुच्चयः नोक्तः भगवता।

ननु श्रौतेन यज्ञादिकर्मणा सह ज्ञानस्य समुच्चयो मास्तु स्मार्तेनैव कर्मणा ज्ञानस्य समुच्चयः स्याच्चेत् ज्ञानकर्मणोः विभागवचनादिसर्वमुपपन्नं भवतीति चेन्न, यतः क्षत्रियस्य युद्धं स्मार्तं कर्म स्वधर्म इति जानतः ''तत्किं कर्मणि घोरे मां नियोजयसि''[७] इत्युपालम्भोऽनुपपन्नः स्यात्। स्मृतिसम्मतानि कर्माण्यपि अविद्या-विषयाण्येव। अन्तेऽपि ''सर्वधर्मान् परित्यज्य''[८] इत्युक्त्वा सकलकर्मपरित्यागात्मकं ज्ञानमेव लक्ष्यत्वेनोक्तमिति भाति। अपि च ''नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति''[९] इति ज्ञानं प्रति नैष्कर्म्यभावं प्रदर्श्य केवलेन ज्ञानेनैव भवति मुक्तिरिति कथितं भगवता। गीताशास्त्रस्य मोक्षविषयकत्वात् मोक्षञ्च ज्ञानैकगम्यत्वात् ज्ञानकर्मणः समुच्चयोऽत्र न प्रदर्शितः। अतः गीताशास्त्रे ईषन्मात्रेणापि श्रौतेन स्मार्तेन वा कर्मणात्मज्ञानस्य समुच्चयः केनचिदपि दर्शयितुं न पार्यते।

---

१. बृहदारण्यकोपनिषत्, ४.४.२२.
२. तदेव, ४.४.२२.
३. श्वेताश्वतरोपनिषत्, ३.८.
४. गीता शाङ्करभाष्यम्, २.११.
५. श्रीमद्भगवद्गीता, ३.१.
६. तदेव, ५.१.
७. श्रीमद्भगवद्गीता, ३.१.
८. तदेव, १८-४९
९. तदेव, १८.६६.

ननु शास्त्रविहितानां परलोकसाधनानां कर्मणां शरीरव्यतिरिक्तात्मविज्ञानं विना अनुष्ठाने प्रवृत्त्यसम्भवात् उपनिषद्विहितं ज्ञानं कर्माङ्गमिति चेन्न, कर्तृत्वभोक्तृत्वरहितनित्य-शुद्ध-बुद्ध-मुक्तस्वभावस्यात्मनः वेदान्तप्रतिपाद्यस्य कर्माङ्गत्वासम्भवात्, कर्मानुष्ठान-विघातकत्वाच्च। कर्मानुष्ठाने प्रयोजनं यज्ज्ञानमस्य कर्मणः कर्ताऽहं जन्मान्तरभाविनो तत्फलस्य च भोक्ताहमित्याकारकं तदौपनिषद्विहितमकर्तृत्वादिबोधविरुद्धम्। अपि च मोक्षस्याकार्यत्वान्मुमुक्षोः कर्मानर्थम्।

ननु कर्मठानां जनकादीनां निर्गुणब्रह्मज्ञाननिष्ठत्वं श्रूयते, इति चेदुच्यते, जनकादयोऽप्रबुद्धा एव न स्थितप्रज्ञाः ईश्वरार्पणबुद्ध्या साधनभूतेन कर्मणा ज्ञानोत्पत्तिलक्षणामन्तःकरणशुद्धिरूपामेव संसिद्धिमास्थिता, अथवा जीवन्मुक्ता अपि लोकसंग्रहार्थं कर्मसु प्रवृत्ता इति समाधेयम्।[१]

अतएवात्मज्ञानसम्पादनाय उपनिषदर्थश्रवणं न्यायमीमांसाद्यध्ययनपूर्वकं विधेयम्। ततः स्वयमेवोपपत्तिभिर्वेदान्तार्थमननं ब्रह्मविचारेण विज्ञानोत्पादः, न तु उपासनादि-कमाश्रित्य ध्यानमपेक्षितम्। प्रपञ्चमिथ्यात्वनिश्चयपूर्वकं कृतश्रवणमननस्य पुरुषस्य साक्षात्कारो जायते। "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः"[२] इत्यत्रापि "निदिध्यासितव्यः" शब्देन चित्तैकाग्र्यमपेक्षितं न तु ध्यानम्। अतएव मोक्षाय ज्ञानेन सह कर्मणोऽपेक्षा किञ्चिन्मात्रेणापि नास्ति। यद्यपि कर्मणः चित्तशुद्धिद्वारा मोक्षम्प्रति आरादुपकारकत्वमस्ति, तथापि तस्य साक्षात्प्रयोजनस्य लेशाभासोऽपि नास्तीति दिक्।

## अद्वैतवेदान्ते प्रमेयत्वम्

अद्वैतवेदान्ते जीवब्रह्मणोरैक्यरूपं यदखण्डचैतन्यवस्तु तदेव वेदान्तस्य मुख्यः प्रमेयः। अज्ञातवस्तु एव प्रमाणेन प्रमेयं भवति, जीवब्रह्मणोरैक्यविषये एवास्माकमज्ञानं वर्तते, तस्मात्तदेव प्रमाणेन विज्ञेयत्वात् मुख्यं प्रमेयमिति भावः। स्वतस्सिद्धब्रह्मचैतन्यस्य वेदान्तप्रतिपाद्यविषयत्वे सर्वाणि खलु वेदान्तवाक्यानि सिद्धानुवादकानि भविष्यन्ति, अनेन वेदान्तवाक्यानां प्रामाण्यहानिप्रसङ्गः, वेदप्रामाण्यस्याज्ञातार्थज्ञापकत्वात्। वेदस्यापीदं प्रामाण्यं रूपविषये नेत्र इव स्वतःसिद्धम्। अतएव स्वयंसिद्ध-शुद्ध-ब्रह्मचैतन्ये वेदान्तस्य तात्पर्यं नास्ति, तेन सह जीवस्यैक्यरूपाखण्डार्थः द्वैतमिथ्यात्वोपलक्षिता-खण्डार्थः—यदस्माकमज्ञातः स एव प्रमेयः, तत्रैव वेदान्तस्य तात्पर्यम्।[३]

---

१. श्रीमद्भगवद्गीता, शा०भा०, २.११ अस्य भूमिकायाम्।

२. बृहदारण्यकोपनिषत्, २.४.५.

३. "द्वैतमिथ्यात्वज्ञानोपलक्षितब्रह्मप्रतिपादनपूर्वकचैतन्यमात्रप्रतिपादने तात्पर्यम्" (भारतीयदर्शनकोषः, पृ. १७६)

तदैक्यस्य भेदाभावरूपत्वात् अभावस्य चाधिकरणरूपत्वात्, तादृशैक्यस्याद्वितीयब्रह्मरूपतयाद्वैतब्रह्मणि वेदान्तानां तात्पर्यकथनमपि सङ्गच्छते।

## व्यावहारिकसत्ता वा गौणप्रमेयः

यद्यपि जीव-ब्रह्मणोरखण्डार्थ एव मुख्यप्रमेयः तथापि निवृत्त्यर्थं अवस्तुभूतमपारमार्थिकमज्ञानस्य, तत्कार्याणां च ज्ञानमपि प्रयोजनम्। गुरुशास्त्राद्यनर्थनिवृत्तेरुपायजातानि श्रवण-मनन-निदिध्यासनादिनि च सर्वाण्येव अज्ञाननिवृत्तिसाधनानि अपारमार्थिकस्य अज्ञानस्यैव कार्यान्तर्गतानि। तस्मात् अनात्मवस्तुनः अपारमार्थिकस्यापि विचारावश्यकता वर्तते एव।

अस्यापारमार्थिकप्रमेयान्तर्गतस्य आकाशादिभूतसूक्ष्मस्य सृष्टिक्रमः[१] सूक्ष्मभूतानां पञ्चीकरणम्,[२] अस्मिन् सृष्टे जगति जीवात्मरूपे परमात्मनोऽनुप्रवेशादयः[३] सर्वं खलु व्यावहारिकतत्त्वं परमात्मासकाशाद् भवति आत्माश्रितमायाशक्तेरज्ञानाद्वेति ज्ञातव्यम्। एतेषां तत्त्वानां पारमार्थिकास्तित्वाभावेऽपि व्यावहारिकसत्ताऽवश्यं स्वीकर्त्तव्याः इत्येवाद्वैतसिद्धान्तः।

## प्रमाणानि

प्रमायाः करणमेव प्रमाणम्।[४] विषयाकाराकारितान्तःकरणवृत्तौ अभिव्यक्तं चैतन्यमेव "प्रमा" शब्देनाभिधीयते। तस्य करणत्वेन यदन्तःकरणवृत्तिः तदेव प्रमाणम्। ननु चैतन्यस्यानादित्वेनेन्द्रियाणां तत्करणत्वमनुपपन्नम्, तत्कथं प्रमाणत्वव्यवहारस्तत्र इति चेत्, मैवम् चैतन्यस्यानादित्वेऽपि तदभिव्यञ्जकवृत्तीनां सादितया तत्करणत्वेनेन्द्रियादिषु प्रमाणत्वव्यवहारसम्भवात्, तथाच तादृश्यचैतन्यस्याभिव्यञ्जिकां वृत्तिं प्रमारूपेण गृह्यते, तस्य करणत्वेनेन्द्रियाण्येव प्रमाणम्। प्रमीयतेऽनेन = प्रमा + ल्युट् (करणे) इति व्युत्पत्तिः। महर्षि वात्स्यायनोऽपि "प्रमाता येनार्थं प्रमिणोति तत्प्रमाणम्"।[५] अद्वैतवेदान्तमते षड्विधानि खलु प्रमाणानि, प्रत्यक्षानुमानोपमानागमार्थापत्त्यनुपलब्धिभेदात्। अत्र प्रमाणानां षड्विधत्वेऽपि प्रामाण्यविषयाणां पञ्चविधत्वमेव स्वीकृतमद्वैतवादिभिः। अनुपलब्धिप्रमाणद्वारा या प्रमा भवति, सा प्रत्यक्षात्मिकापि

---

१. "तस्माद्वा एतस्मादात्मनः आकाशः सम्भूत, आकाशद्वायुरित्यादि" तै.उ., १२.१.

२. "तासां त्रिवृतं त्रिवृतमेकैकामकरोत्।" छा.उ., ६.२.४.

३. "तत्सृष्ट्वा तदेवानुप्राविशत्" तै.उ., २.६.१.

४. तत्र प्रमाकरणं प्रमाणम् (वे.प.प्रत्यक्षपरिच्छेदः)

५. न्या.द.वात्स्या.भा., १.१.१.

भवति। अत्र सिद्धान्ते अभावस्याधिकरणस्वरूपत्वात् घटाभावस्य प्रतीति अधिकरणस्वरूपभूतलमात्ररूपेण भवति। भूतलस्य भूतलत्वावच्छेदेन यत्प्रत्यक्षं भवति, तत्किल प्रत्यक्षप्रमाणद्वारया भवति, परन्तु घटाभावरूपेण भूतलस्य ज्ञानन्तु "भूतले घटो नास्ति यदि स्यात्तदोपलभ्येत" एवमनुपलब्धिप्रमाणेन भवति। उभयत्र भूतलमात्रस्य ज्ञानमवच्छेदकभेदेन भिन्नत्वेन भातीति प्रमाणभिन्नत्वेऽपि प्रमायाः भिन्नता नास्ति।

अत्र नैयायिकाः प्रत्यक्षानुमिति-उपमिति-शाब्दबोध इति प्रमायाः भेदवशात् प्रत्यक्षानुमानोपमानशब्दा इति चतुर्विधानि प्रमाणानि स्वीकुर्वन्ति। सांख्याः प्रत्यक्षानुमानशब्दा इति त्रीण्येव तानीति वदन्ति। वैशेषिकास्तु प्रत्यक्षानुमाने इति। चार्वाकास्तु प्रत्यक्षमेकमेव प्रमाणत्वेनाङ्गीकुर्वन्ति। विषयेऽस्मिन् यथा मतभेदो वर्तते—

प्रत्यक्षमेकं चार्वाकाः कणादसुगतौ पुनः।
अनुमानञ्च तच्चापि सांख्याः शब्दं च ते अपि॥
न्यायैकदेशिनोऽप्येवमुपमानं च केचन।
अर्थापत्त्या सहैतानि चत्वार्याह प्रभाकरः।
अभावषष्ठान्येतानि भाट्टा वेदान्तिनस्तथा।
सम्भवैतिह्ययुक्तानि तानि पौराणिकाः जगुः॥[१]

## प्रत्यक्षम्

"इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्।"[२] यद्वा "ज्ञानाकरणकं ज्ञानं प्रत्यक्षम्"[३] अर्थात् यज्ज्ञानं ज्ञानरूपात्करणात् नोत्पन्नं भवति तत् प्रत्यक्षम्। अनुमितिकरणं—व्याप्तिज्ञानम्, उपमितिकरणं—सादृश्यज्ञानम्, शाब्दबोधे करणन्तु—पदज्ञानम्, स्मृतेरपि करणं पूर्वानुभवरेव। अत एतानि सर्वाणि प्रमाणानि ज्ञानरूपात्करणादेव उत्पन्नानि। जीवप्रत्यक्षस्येन्द्रियमेव करणम्, ईश्वर-प्रत्यक्षस्य नित्यत्वात् कस्मादपि करणात् नोत्पद्यते, तस्मात् ज्ञानरूपात् करणात् नोत्पन्नं भवति। तच्च प्रत्यक्षं घ्राणज-रासन-श्रावण-चाक्षुष-त्वाच-मानसेतिभेदेन षड्विधं भवति। घ्राणेन्द्रियजन्यं यत्प्रत्यक्षं भवति तदेव घ्राणजं प्रत्यक्षम्। एवमेव रासनादिकमपि तत्तदिन्द्रियाणाम् नामानुसारेण प्रत्यक्षस्य विभागो भवति। नित्यानित्यभेदेन पुनः प्रत्यक्षं द्विविधं भवति। जीवस्य यत्प्रत्यक्षं तज्जन्यं, अतएव अनित्यम्, तत्पुनः पूर्वोक्तेन घ्राणजादि-प्रभेदेन षड्विधम्। ईश्वरप्रत्यक्षन्तु नित्यं सर्वविषयकञ्चेति।

प्रकारान्तरेण सविकल्पकनिर्विकल्पकभेदेन प्रत्यक्षं पुनः द्विविधम्। सविकल्पकं

---

१. मानसोल्लासः, २.१७-१९ (वसुमती साहित्य मन्दिर, कलिकाता)
२. न्यायसूत्रम्, १.१.४.
३. तत्त्वचिन्तामणिः, पृ. १,

नाम सप्रकारकमर्थात् विशेष्यविशेषणभावविषयकं प्रत्यक्षम्। निष्प्रकारमर्थात् यत्प्रत्यक्षं विशेष्यविशेषणभावं विषयरूपेण न गृह्णाति तदेव निर्विकल्पकम्। संसर्गानवगाहिज्ञानं निर्विकल्पकमिति भाव:। प्रत्यक्षातिरिक्तानामखिलज्ञानानां सविकल्पकमेव भवति, न तु निर्विकल्पकम्। लौकिकालौकिकभेदेनापि प्रत्यक्षस्य द्वैविध्यं स्वीकृतं प्रकारान्तरेण। लौकिक-सन्निकर्षादुत्पन्नं प्रत्यक्षं लौकिकं भवति। अत्र पुनरलौकिकसन्निकर्ष: सामान्य-लक्षणो ज्ञानलक्षणो योगज इत्यवान्तरभेदेन त्रिधा भवति। अपि चात्र योगजोऽपि युक्तयुञ्जानभेदेन द्विधा भवतीति नैयायिका:। तथाहि—वर्तमानकाले समुपस्थितानां विषयाणां ग्राहकरूपेण स्वीकृता: षड्विधा: सन्निकर्षा एव लौकिक सन्निकर्षा:, तद्भिन्ना: अतीतानागतानां विषयाणां ग्राहकत्वेन स्वीकृता ये सन्निकर्षास्ते खल्वलौकिक-सन्निकर्षा:, एतैरलौकिकं प्रत्यक्षं भवति। सामान्यलक्षणसन्निकर्षशब्देन साधारणतया "स्वसम्बद्धविशेष्यकज्ञानप्रकारीभूतधर्मवत्तारूप: सम्बन्ध" इति ज्ञेयम्। यत्र लौकिक-सन्निकर्षेण सम्मुखस्थानां घटादिवस्तूनां प्रत्यक्षं भवति तत्र सामान्यलक्षणारूपेण-लौकिकप्रत्यासत्त्या देशान्तरीयाणां कालान्तरीयाणां निखिलघटादिवस्तूनामलौकिकं प्रत्यक्षं भवति। एवमखिलघटै: सह नेत्रेन्द्रियस्य "स्वसम्बद्धविशेषकज्ञानप्रकारीभूत-धर्मवतारूप: सम्बन्धो वर्तते। अयमेव सम्बन्ध: सामान्यलक्षणाप्रत्त्यासत्ति:। अस्मिन् स्थले "सामान्य" शब्द: न केवलं जातिवाचकोऽपितु तादृश: प्रकारीभूतस्य धर्ममात्रस्य बोधको भवति। न्यायमते प्रत्यक्षज्ञानोत्पत्तौ लौकिकसन्निकर्षाणामुपयोग:, वेदान्तमते तु वृत्तिजनने तेषामुपयोगो वर्णित:।

ज्ञानं लक्षणं स्वरूपं यस्य सन्निकर्षस्य स एव ज्ञानलक्षणसन्निकर्ष:। अत्र चाक्षुषादिप्रत्यक्षस्थले "स्वसंयुक्तमन:संयुक्त आत्मसमवेतज्ञानम्" तादृशज्ञानविषय-कत्वञ्चेति ज्ञेयम्। मानसस्थले तु "स्वसंयुक्त आत्मसमवेतज्ञानविषयत्वमि" ति बोध्यम्। "सुरभिचन्दनम्" इत्यत्र चाक्षुषप्रत्यक्षस्थले प्राक् चन्दनखण्डेन सह नेत्रस्य सन्निकर्षो भवति, अथ कालान्तरेऽनुभूतस्य सौरभस्य स्मरणं भवति। इयमेव स्मृति: ज्ञानलक्षणो सन्निकर्ष:। एतयो: लौकिकालौकिक सन्निकर्षयो: फलरूपेण "सुरभिचन्दनमि" ति चाक्षुषप्रत्यक्षं भवति। अत्र चन्दनांशे लौकिको सन्निकर्ष: सौरभांशे त्वलौकिको सन्निकर्षो भवति। योगाभ्यासजनितो धर्मविशेषो नाम योगजसन्निकर्ष:। युक्तयोगी युञ्जानयोगी इति योगिद्वैविध्यात् योगजसन्निकर्षस्यापि द्वैविध्यम्।[१]

## प्रत्यक्षप्रमाणस्योत्कर्ष:

यद्यपि दार्शनिका: बहुनि प्रमाणानि स्वीकुर्वन्ति तथापि प्रत्यक्षप्रमाणस्य

---

१. न्यायसिद्धान्तमुक्तावली, प्रत्यक्षपरिच्छेद:।

सहायतां विना कस्यापि प्रमाणस्य पूर्णता न संभवति। तथाहि—हेतुप्रत्यक्षेण (पक्षप्रत्यक्षानन्तरञ्च) अनुमानम्, सादृश्यवस्तुप्रत्यक्षेणोपमानम्, शब्दप्रत्यक्षमाध्यमेन शाब्दबोधः उपपाद्यवस्तुप्रत्यक्षेणार्थापत्तिः, केवलाधिकरणप्रत्यक्षेणानुपलब्धिर्भवति। एवमेव ये खल्वितोऽप्यधिकानि प्रमाणानीतिहासपुराणादीनि स्वीकुर्वन्ति तेषां कृतेऽपि प्रत्यक्षस्यानिवार्यता वर्तते। अतएव सर्वेषां खलु प्रमाणानां कृते प्रत्यक्षस्यावश्यप्रयोजनीयता विद्यते, तस्मात् प्रत्यक्षप्रमाणस्योत्कर्षः वर्तते।

अद्वैतवेदान्तसिद्धान्ते तु बहुक्षेत्रे प्रत्यक्षस्य द्वाररूपेण सत्त्वेऽपि इन्द्रियजन्यत्वमिन्द्रियजन्यत्वमेव न प्रत्यक्षत्वस्य प्रयोजकम्। सुखदुःखादेः प्रत्यक्षम्प्रति इन्द्रियजन्यत्वाभावात्। वेदान्तपरम्परायां मनस इन्द्रित्वमेव नास्ति।[1] परमतत्त्वं यच्चैतन्यस्वरूपं ब्रह्मात्मतत्त्वं तदेवापरोक्षम्,'' ''यत्साक्षादपरोक्षाद् ब्रह्म''[2] इति च श्रुतेः।'' अपरोक्षचैतन्यस्वरूपब्रह्मैव प्रत्यक्षप्रमायाः सारभूतं, तस्मादेव प्रत्यक्षस्येयं महिमा, अयञ्चोत्कर्षः। अपि चाद्वैतवेदान्तसिद्धान्ते विषयस्यापरोक्षतैव ज्ञप्तेरपरोक्षतायाः हेतुः। विषयस्यापरोक्षत्वं विषयेन सह प्रमातुः अव्यवधानादभेदवशाद्वा भवति। ब्रह्मात्मनः प्रमातुः स्वरूपत्वात् तेन सह सम्पूर्णतया अभिन्नत्वात् ब्रह्मात्मा साक्षादपरोक्षः। घटादिविषयप्रत्यक्षस्थले प्रमाणप्रक्रियामाध्यमेन प्रमात्रभेदोपस्थापितो भवति। तथाहि—यथा जलाशयस्थमुदकं छिद्रान्निर्गत्य कुल्यात्मना केदारान्प्रविश्य केदाराणामाकार इव त्रिकोण चतुष्कोणाद्याकारेण परिणमते एवमेव तैजसमप्यन्तःकरणं चक्षुरादीन्द्रियद्वारेण निर्गत्य घटादिविषयदेशं गत्वा घटादिविषयदेशं घटादिविषयाकारेण परिणमते।''[3] एवम्प्रकारेण घटादिविषयाणां प्रत्यक्षं भवति। तस्मात् ब्रह्मात्मनोऽपरोक्षत्वमिव घटादिविषयस्य न साक्षादपरोक्षत्वं भवति, येन ब्रह्मात्मैक्यबोधात्मकं तत्त्वज्ञानं स्यात्। अत्र प्रमात्रा सहाव्यवधानतैवापरोक्षता। प्रमात्रा सह व्यवधानवृद्धावेव परोक्षज्ञानस्यापि भवति वृद्धिः। तस्मादपरोक्षस्वभाव आत्मनि परोक्षज्ञानं रज्जुसर्प इव परोक्षत्वभ्रमरूपेण ख्यातो भवति।

यद्यपि वेदान्तपरिभाषाकारैः ज्ञप्तेः विषयस्य चापरोक्षतायाः पृथक्लक्षणं प्रयोजकम्वा निरूपितम्, तथापि विषयस्यापरोक्षतैव ज्ञप्तेः प्रत्यक्षत्वस्य मूलमिति ज्ञेयम्। विषयेन (घटादिना) सह प्रमातुः (प्रमातृचैतन्यस्य) अभेद एव विषयस्यापरोक्षता

---

१. मनसोऽनिन्द्रियत्वं वेदान्तपरिभाषाकाररीत्याऽत्रोक्तम्।[अ] मतमिदं विवरण-प्रस्थानानुसारेणेति भाति। भामतीकारस्तु मनसोऽनिन्द्रियत्वं नाङ्गीकृतवान्। तेषां मते मनस इन्द्रियत्वं वर्तते ''मनः षष्ठानीन्द्रियाणि'' इत्यादि स्मृतिप्रामाण्यबलात्। यत्र मनसोऽनिन्द्रित्वबोधिका श्रुतिः स्मृतिर्वा वर्तते तत्र ''गोबलीवर्दन्यायेन'' इन्द्रियैः सह मनसो भेदत्वमुपपादनीयमिति।[ब]

अ) वेदान्तपरिभाषा प्रत्यक्षपरिच्छेदः।

ब) ब्रह्मसूत्र, भामती, २.४.१७.

२. बृ.उ. ३.४.१.

३. वेदान्तपरिभाषा प्रत्यक्षपरिच्छेदः।

प्रत्यक्षत्वम्वा। घटादिविषयस्याधिष्ठानं यद् घटावच्छिन्नं चैतन्यं तेन सहाभेदे सति प्रमातुः विषयेण सहाभेद[१]त्वेनोपस्थापितो भूत्वा प्रमातुर्घटप्रत्यक्षं भवति। प्रमातृचैतन्यस्य विषयचैतन्यस्य च स्वरूपतः अभेदेऽपि प्रमातुरन्तःकरणोपाधिद्वारा परिच्छिन्नत्वात्, अज्ञानावरणवशाच्च विषयचैतन्यस्य, एवमेव विषयचैतन्यस्यापि आवृतत्वात् स्वरूपतः यदभेदः तस्य विघटनं भवति। तत्रेन्द्रियद्वारेणान्तःकरणं निर्गत्य वाह्यघटादि विषयान् व्याप्नोति तेनाज्ञानादेरौपाधिकभेदस्य च विनाशो भवति। तेन घटावच्छिन्नचैतन्येन सह प्रमातुरभेदो भवति। एवम्प्रकारेण घटेन सह घटावच्छिन्नचैतन्यमेव प्रमातुः स्वरूपम्। प्रमातुरभेदत्वमेव घटस्यापरोक्षता।[२]

अपि च घटादिविषयस्य तदधिष्ठानभूतचैतन्यात् पृथक् सत्तायाः अभावात् विषयावच्छिन्नचैतन्येन सह प्रमातृचैतन्यस्याभेदत्वं सिद्धौ घटादिविषयस्यापि अभेदत्वं सिद्ध्यति। अपि चात्रान्तःकरणवृत्तिः विषयेन सह मिलिते सति, उभयोरभेदत्वात् अन्तःकरणवृत्त्यवच्छिन्नचैतन्येन सह विषयावच्छिन्नचैतन्यस्य यदभेदः तदेव ज्ञप्तेः ज्ञानगतस्य वा प्रत्यक्षत्वम्।[३]

ननु वेदान्तराद्धान्ते अज्ञाननिवृत्यर्थं ब्रह्मज्ञानमेव परमावश्यकं, ब्रह्मणश्चा-प्रमेयत्वात् तत्र प्रमाणानामप्यनावश्यकत्वमेव। यतः प्रमाणेन प्रमेयस्यैव भवति सिद्धिरिति चेदुच्यते, वेदान्तसिद्धान्ते ब्रह्मणः नित्यसिद्धत्वेऽपि अज्ञानावरणद्वारा आच्छादितत्वात् ब्रह्म स्पष्टतया न भाति। अपि चास्ति भाति इत्याद्यंशेन जगतः भानं भवति। अतएव आवरणभङ्गार्थमेव प्रमाणानामावश्यकत्वम्। तत्र प्रत्यक्षातिरिक्त-प्रमाणैः भवति खलु असत्त्वापादकावरणरूपप्रमातृगताज्ञानस्य निवृत्तिः।[४] प्रत्यक्षप्रमाणेन तु अभानापादकावरणरूपप्रमातृगताज्ञानस्य भवति निवृत्तिरिति ज्ञेयम्।

आत्मनः सुखदुःख इव साक्षादपरोक्षत्वात् प्रत्यक्षतयाऽनुभवेनैव भवति तस्य साक्षात्कारः। ब्रह्मणश्चात्माऽभिन्नत्वात् स्वात्मस्वरूपेण ब्रह्मणोऽपरोक्षानुभूतिरेव परमं प्रयोजनम्। अतः अभानापादकावरणस्य भङ्गः प्रत्यक्षप्रमाद्वारैव[५] भवति। तस्मादपि प्रत्यक्षप्रमायाः श्रेष्ठत्वं वेदान्तप्रक्रियायां स्वीकृतम्।

## परोक्षज्ञानस्य न्यूनता

प्रत्यक्षातिरिक्तज्ञाने, अर्थात् अनुमिति, शाब्दबोधादिपरोक्षस्थले अन्तःकरणस्य प्रमातुश्च विषयदेशम्प्रति निर्गमनाभावात् विषयावच्छिन्नचैतन्यस्यावरणभङ्गो न भवति।

---

१. अत्राभेदपदार्थः विषयस्य प्रमातृसत्तातिरिक्तसत्ताशून्यस्वरूपः।

२. वेदान्तपरिभाषा, पृ. ३३ (चौ०सं०सी०सं०)    ३. तदेव, पृ. २४.

४. अद्वैतसिद्धिः, पृ. ५६८(नि०सा०प्रेस)

५. प्रमाशब्देनात्रान्तःकरणोपहितसाक्षी ग्राह्यः।

तस्माद्धेतोः "विषयो प्रत्यक्षतया प्रकाशते भाति" वेति बोधो न भवति। एतदेव परोक्षज्ञानस्यापकर्षः दुर्बलता वा विद्यते। परन्तु परोक्षज्ञानेन प्रमातृनिष्ठ असत्तापादकावरणस्य भङ्गाद् विषयस्यास्तित्वबोधो भवति।

## अनुमानम्

अनुमिति प्रमायाः करणमनुमानम् (अनु-मा+ल्युट्) "प्रत्यक्षोपजीव्यत्वात् प्रत्यक्षानन्तरम्... अनुमानं निरूप्यते"[१]। "अथ (प्रत्यक्षानन्तरम्) अनुमानं निरूप्यते"[२] इति च परिभाषाकारः। नव्यनैयायिकास्तु व्याप्तिज्ञानमेवानुमानम्, उद्योतकारादयः प्राचीननैयायिकाः परामर्श एवानुमितेः करणमर्थात् अनुमानमिति स्वीकुर्वन्ति। उदयनाचार्यास्तु व्याप्यरूपेण ज्ञायमानहेतुरेवानुमानमिति कथयन्ति।

प्रत्यक्षप्रमाणमिवानुमानप्रमाणमपि स्वविषयप्रकाशने समर्थम्। तदनुमानं खलु "यत्र यत्र धूमस्तत्र वह्निः" एवं नियतसाहचर्यज्ञानरूपमेव भवति, संस्कारस्तु तस्यावान्तरव्यापारः। एवं प्रकारेण यस्य पुरुषस्य नियतसाहचर्यज्ञानं प्राक् वर्तते, कालान्तरे तस्य पर्वते धूमस्य दर्शनमात्रेण व्याप्तिज्ञानजन्यसंस्कार उद्बुद्धे सति उद्बुद्धसंस्कारेण सहकृतव्याप्तिज्ञानरूपानुमानात् "वह्निमान्" इति अनुमिति प्रमा जायते। इन्द्रियार्थसन्निकर्षाभावादिदं परोक्षज्ञानमेव भवति। पर्वतांशे तु प्रत्यक्षमिति वेदान्तिनो वदन्ति।

यद्यपि नैयायिकादयः केवलान्वयि-केवलव्यतिरेकि-अन्वयव्यतिरेकीति भेदात् अनुमितेः प्रकारत्रयमङ्गीकुर्वन्ति तथापि अद्वैतवेदान्तमते अन्वयिरूपमेकमेव। वेदान्तसिद्धान्ते सर्वस्यापि धर्मस्य ब्रह्मनिष्ठात्यन्ताभावप्रतियोगित्वेन अत्यन्ताभावाप्रतियोगिसाध्यकत्वरूपकेवलान्वयित्वस्यासिद्धेः केवलान्वयित्वासम्भवः। एवमेव केवलव्यतिरेकस्यापि, साध्याभावे साधनाभावनिरूपितव्याप्तिज्ञानस्य साधनेन साध्यानुमितावनुपयोगात्।[३]

भवत्यस्यानुमानप्रमाणस्योपयोगः ब्रह्मज्ञाने प्रपञ्चस्य मिथ्यात्वप्रतिपादनाय। तथाहि ब्रह्मभिन्नं सर्वं मिथ्या ब्रह्मभिन्नत्वात् शुक्तिरजतवत्। अपि च प्रपञ्चो मिथ्या दृश्यत्वात्, जड़त्वात्, परिच्छिन्नत्वाद्वा, रज्जुसर्पवत्। अत्र शुक्तिरजत-रज्जुसर्प-मरुमरीचिकादि-भ्रमस्थले काचकामलादिदोषजन्यत्व-अन्धकाररूपदोषजन्यत्वादि अनेककारणस्वीकारापेक्षया एकमेव ब्रह्मभिन्नत्वं मिथ्यात्वस्य प्रयोजकत्वस्वीकारे लाघवः भवति, ब्रह्मभिन्नत्वस्योक्तस्थले सर्वत्रानुगमात्।

---

१. तत्त्वचिन्तामणि; अनुमान प्र.।
२. वेदान्तपरिभाषा, अनुमानपरिच्छेदः २.
३. वेदान्तपरिभाषा, अनुमानपरिच्छेदः।

## उपमानम्

उपमितिप्रमायाः करणमुपमानम् (उप-मा+करणे ल्युट्)। सादृश्य प्रमारूपोपमितेः करणमिति भावः। यथा गो सदृशो गवयः। तथाहि— नगरेषु दृष्टगोपिण्डस्य पुरुषस्य वनं गतस्य गवयेन्द्रियसन्निकर्षे सति भवति प्रतीतिः, पिण्डोऽयं गोसदृश इति। अथ भवति निश्चयः, अनेन सदृशी मदीया गौरिति। तत्रान्वयव्यतिरेकाभ्यां गवयनिष्ठगोसादृश्यज्ञानं करणं गोनिष्ठगवयसादृश्यज्ञानं फलम्।[१] एवमुपमितिज्ञानं परोक्षमेव न त्वपरोक्षम्। नैयायिकानान्तु गोसदृशो गवय इति सादृश्यज्ञानमुपमिति-करणत्वात् उपमानम् भवति। वने गतस्य तादृशसादृश्यज्ञानवतः पुरुषस्य गवयपिण्ड-दर्शनानन्तरमयम् गवयपदवाच्य इत्युपमितिर्जायते, तथा च तेषां मते उपमानस्य शक्तिग्राहकत्वं भवति।

अतएव वेदान्ताभिमत—उपमानम्, उपमितेश्च स्वरूपं समीचीनमेव। अस्योपमानस्योपरि दार्शनिकैः नाधिकं विचारितम्, किन्तु लोके वेदे चास्योपयोगो दृश्यते। भारतीयसाहित्यशास्त्रेऽप्यस्य प्राचुर्यं विद्यते। अनुमानमिव उपमानस्यापि व्यतिरेकमुखेन प्रपञ्चमिथ्यात्वे प्रयोजनमस्ति।

## आगमः

"यस्य वाक्यस्य तात्पर्यविषयीभूतसंसर्गो प्रमाणान्तरेण न बाध्यते तद्वाक्यं प्रमाणम्।"[२] यत्र प्रत्यक्षादिप्रमाणानां गतिर्नास्ति, तत्रापि आगमप्रमाणं स्वकार्यं साधयति। तदागमः पौरुषेय-अपौरुषेयभेदेन द्विविधः। तत्र अकारादयः वर्णाः, उदात्तादयः स्वराः पूर्वसृष्टस्यानुरूपत्वात् प्रतिसृष्टौ परमेश्वरनिर्मितत्वेऽपि वेदस्यापौरुषेयत्वमव्याहतम्। महाभारत-पुराणादयस्तु पूर्वोच्चारणमनपेक्ष उचार्यविषयत्वात् पौरुषेयत्वमेव भवति।

शब्दप्रमाणे विद्यते इदं वैशिष्ट्यमतः कदाचित् वाच्यार्थात् वास्तविकोऽर्थः सर्वथैव भिन्नः। अतः शाब्दबोधस्थले एतदवश्यमेव स्मर्त्तव्यं यत् मानान्तरेण आपातप्रतीतार्थस्य बाधे सत्त्वेऽपि तात्पर्यार्थस्य बाधो भवति न वेति। तथाहि— लोके "गङ्गायां घोषः" अत्र लक्षणया गङ्गापदेन गङ्गातीरबोधः। वेदेऽपि—"स प्रजापतिरात्मनो वपामुदखिदत्" इति वाक्यमप्रामाणिकमिव भाति, परन्त्वस्य तात्पर्यन्तु पशुयागप्रशंसायां भवति।

वाक्यार्थज्ञाने आकाङ्क्षा-योग्यता-आसत्तिस्तात्पर्यज्ञानञ्चेति चत्वारि कारणानि। पदार्थानां परस्परजिज्ञासाविषयत्वयोग्यत्वमाकाङ्क्षा। क्रियाश्रवणे कारकस्य, कारकश्रवणे

---

१. वेदान्तपरिभाषा- उपमिति परिच्छेदः। २. वेदान्तपरिभाषा, आगमपरिच्छेदः ४.

क्रियायाः, करणश्रवणे इतिकर्तव्यतायाश्च जिज्ञासाविषयत्वात्।[१] तथाहि—"घटमानय" इत्यत्र "आनय" पदश्रवणे क्रियायाः बोधः भवति, कारकस्य च भवति जिज्ञासा, तेन कारके आगच्छति जिज्ञासाविषयत्वम्। एवमेव "घटम्" इति श्रवणात् पदार्थबोधे सति क्रियायां जिज्ञासाविषयत्वमागच्छति।

तात्पर्यविषयीभूतार्थस्याबाधः एव योग्यता। तथाहि—"अग्निना सिञ्चति" इत्यत्र अग्निना सिञ्चनरूपार्थस्य बाधात्र योग्यता। "स प्रजापतिरात्मनो वपामुदखिदत्" इत्यत्र तात्पर्यविषयीभूतपशुयागप्रशंसायां योग्यता तत्त्वमसस्यादिमहावाक्यानां तात्पर्यविषयीभूतस्य जीव-ईश्वरयोरभेदस्य प्रतिपादने योग्यता वर्तते एव।

शक्तिलक्षणाद्यन्यतरसम्बन्धेनैव शाब्दबोधजनकः भवति, अतः यत्र शब्दात् साक्षात् तात्पर्यसिद्धिर्न भवति तत्र लक्षणया तस्य सिद्धिर्भवति। तस्मात् शाब्दबोधे तात्पर्यबोधः यत्र न सिद्ध्यति तत्र यथासम्भवः जहत्-अजहत्-जहदजहद् वा लक्षणाद्वारा तात्पर्यार्थस्याविष्करणं भवति। तात्पर्यं वक्तुरिच्छाधीनमिति केचित्, तदयुक्तम्, शुकवाक्यादौ तात्पर्यदर्शनात्। अतः पदस्वभाव एव तात्पर्यस्य हेतुः। पदानां शक्तिग्रहकाले आप्तव्यक्तिद्वारैव शक्तिग्रहः कार्यः अपि च दुराग्रहं विना निष्पक्षरूपेण सम्यक्विचार्य्य वाक्यार्थो बोध्यः।

अद्वैतवेदान्तप्रक्रियायां आगमप्रमाणस्य स्थानं प्रधानं वर्तते। यतः अद्वैतवेदान्तस्य चरमलक्ष्यं यद्ब्रह्मावगतिः ब्रह्मात्मैक्यस्यापरोक्षानुभूतिः, तदर्थं यस्य प्रमाणस्यापेक्षा वर्तते तदेव शब्दप्रमाणम्, "तत्त्वमसि" "अहं ब्रह्मास्मि" इत्यादिमहावाक्यमिति भावः। पद्मपादाचार्यः, सुरेश्वराचार्यः, प्रकाशात्मयतिः, सर्वज्ञातमुनिः, विद्यारण्यस्वामी, मधुसूदनसरस्वत्यादयः प्रायः सकलाचार्या एव शब्दप्रमाणेन ब्रह्मसाक्षात्कारात्मको बोधो जायते इति स्वीकुर्वन्ति। वाचस्पतिमिश्रस्तु तत्र मनस एव करणत्वं वदति।

तथाहि—"दशमस्त्वमसि"—इत्यादिवाक्यात् यथा—"अहमेव दशमः"—इति अपरोक्षानुभूतिर्भवति, अत्र यथा इन्द्रियाणां प्रामाण्यं नास्ति, वाक्यस्य शब्दस्यैव प्रामाण्यं विद्यते, तथैव ब्रह्मात्मतत्त्वस्यापरोक्षानुभूतौ तत्त्वमस्यादीनि महावाक्यान्येव प्रमाणतयाङ्गीकृतानि। एतदेव अधिकांशाद्वैताचार्यैः समर्थितम्, अयमेव शब्दापरोक्षवादः।[२]

भामतीकारादयस्तु इन्द्रियजन्यत्वमेव प्रत्यक्षस्य प्रयोजकमिति स्वीकुर्वन्ति। तस्मात् संस्कृतान्तःकरणमेव ब्रह्मात्मसाक्षात्कारे कारणम्। अत्र विवरणानुयायिनः एतन्मतं निराकुर्वन्ति कथयन्ति च सर्वेषामिन्द्रियाणां विषयत्वेन रूप-रसादीनां पृथक्

---

१. वेदान्तपरिभाषा, आगमपरिच्छेदः ४.

२. सदेवेत्यादिवाक्येभ्यः प्रमा स्फुटतरा भवेत्।
दशमस्त्वमसीत्यस्माद् यथैव प्रत्यगात्मनि।। बृह.भा.वा.-२०८.

पृथक् निर्देशस्य सत्त्वेऽपि मनसः कृते कश्चिदपि विषयनिर्देशो नास्ति। अतः मनस इन्द्रियत्वमपि नास्ति। अपि च तर्को यथा अनुमितेः, आलोको वा यथा प्रत्यक्षस्यानुग्राहकः मनोऽपि आगमप्रमाणस्यानुग्राहकम्, न तु प्रमाणान्तरम्। सुखदुःखादेः प्रत्यक्षार्थं मनसः प्रमाणत्वं कथयन्ति नैयायिकाः। किन्त्वद्वैतवेदान्तसिद्धान्ते सुखदुःखादेः साक्षिवेद्यत्वात् मनसः प्रमाकरणत्वं प्रमाणत्वं वा न सिद्ध्यति। ''यन्मनसा न मनुते''[१] इत्यादि श्रुतयः स्पष्टरूपेण मनसः करणत्वं निषिध्यन्ति। अपि च ''मनसैवानुद्रष्टव्यम्''[२] ''दृश्यते त्वग्र्यया बुद्ध्या''[३] इत्यादयः श्रुतयः मनसः बुद्धेर्वा दर्शनकर्तृत्वमेवाङ्गीकृतम्[४] न तु दर्शनस्य करणत्वमिति भावः। करणत्वस्य स्पष्टरूपेण प्रतिषेधात्। मनः बुद्धिर्वाऽखण्डाकाराकारितावृत्तिलाभं कृत्वा ब्रह्मसाक्षात्कारं करोति। साक्षात्कारो बुद्धेरेव वृत्तिरूपः परिणामो। अतएव ब्रह्मात्मतत्त्वसाक्षात्कारे शब्द एव प्रमाणं भवति, बुद्धेः मनसो वा प्रमाणत्वं नास्ति। अत्रोपनिषद्वाक्यरूपशब्दप्रमाणगम्यत्वात् ब्रह्मणः औपनिषत्पुरुषत्वरूपोक्तिरपि सुसङ्गतैव। ''तं त्वौपनिषदं पुरुषं पृच्छामीति''[५] च श्रुतेः।

## अर्थापत्तिः

अर्थस्य आपत्तिः कल्पना–इति अर्थापत्तिः प्रमा। अर्थस्य आपत्तिर्यस्मादिति अर्थापत्तिः प्रमाणम्। ''उपपाद्यज्ञानेनोपपादककल्पनमर्थापत्तिरिति[६]'' परिभाषाकारः। येन विना यदनुपपन्नं तत्तत्रोपपाद्यम्, यस्याभावे यस्यानुपपत्तिस्तत्तत्रोपपादकम्। तथाहि— 'पीनः देवदत्तः दिवा न भुङ्क्ते' इत्यत्र रात्रि-भोजनेन विना दिवाऽभुञ्जानस्य देवदत्तस्य पीनत्वमनुपपन्नमिति तादृशपीनत्वमुपपाद्यम्, तदेव करणम्। यथा वा रात्रिभोजनं विना तादृशपीनत्वस्यानुपपत्तिरिति रात्रिभोजनमुपपादकम्, एतदेव अर्थापत्तेः फलमिति भावः।

सा चार्थापत्तिः दृष्टार्थापत्ति-श्रुतार्थपत्तिरितिभेदेन द्विधा। यत्र इदं रजतमिति पुरोवर्त्तिनि प्रतिपन्नस्य रजतस्य नेदं रजतमिति तत्रैव निषिध्यमानत्वं सत्यत्वेऽनुपपन्नमिति रजतस्य सद्भिन्नत्वं सत्यत्वात्यन्ताभाववत्त्वं वा मिथ्यात्वं कल्पयतीति।[७]

श्रुतार्थापत्तिस्तु यत्र श्रूयमाणवाक्यस्य स्वार्थानुपपत्तिमुखेनार्थान्तरकल्पनम् अर्थात् श्रुतार्थापत्तिप्रमाणेन श्रुतिगतवाक्येभ्यः श्रुतेः सिद्धान्तस्य निरूपणं भवति। तथाहि

---

१. केन.उ., १.६.
२. बृ.उ., ४.४.१९.
३. कठ.उ., १.३.१२.
४. वेदान्तकल्पलतिका, पृ. १६५-६७ (पूना सं०)
५. बृ.उ., ३.९.२६.
६. वेदान्तपरिभाषा- अर्थापत्तिपरिच्छेदः।
७. तदेव

"तरति शोकमात्मवित्" इतिवाक्यात् "शोकः" अर्थात् दुःख-बन्धनादयः आत्मनः अज्ञानप्रसूता इति सिद्धान्तस्य कल्पना भवति। अन्यथा आत्मविज्ञानेन तस्य नाशः असम्भव एव। तस्मात् अद्वैतवेदान्तेऽर्थापत्तेः विशिष्टस्थानमस्तीति भाति।

## अनुपलब्धिः

"ज्ञानकरणाजन्याभावानुभवासाधारणकारणमनुपलब्धिरूपं प्रमाणम्"।[१] अनुपलब्धि शब्दस्य प्रतियोग्यनुपलब्धिरित्यर्थः। भूतले घटस्यानुपलब्धिः घटाभावानुभवम्प्रति करणं प्रमाणम्वा। इयम् प्रतियोग्यनुपलब्धिः योग्यानुपलब्धिरेव ग्राह्या, अन्यथा अन्धकारे प्रतियोगिघटस्यानुपलब्धिरेव घटाभावानुभवम्प्रति कारणत्वापत्तिः, धर्माधर्माद्यनुपलब्धिसत्त्वेऽपि तदभावानिश्चयाच्च। "अनुपलब्धेर्योग्यता च तर्कित-प्रतियोगिसत्त्वप्रसञ्जितप्रतियोगिकत्वम्। यस्याभावो गृह्यते तस्य यः प्रतियोगी तस्य सत्त्वेनाधिकरणे तर्कितेन प्रसञ्जनयोग्यमापादनयोग्यं यत्प्रतियोग्युपलब्धिस्वरूपं यस्यानुपलम्भस्य तदनुपलब्धेर्योग्यत्वमित्यर्थः।"

तथाहि—स्फीतालोकवति भूतले यदि घटः स्यात्तदा "घटोपलम्भः स्यादित्या-पादनसम्भवात्तादृशभूतले घटाभावोऽनुपलब्धिगम्यः। अन्धकारे तु तादृशापादनासम्भवा-न्नानुपलब्धिगम्यता। अत एव स्तम्भे पिशाचसत्त्वे स्तम्भवत्प्रत्यक्षतापत्त्या स्तम्भ-पिशाचभेदोऽनुपलब्धिगम्यः। आत्मनि धर्मादिसत्त्वेऽप्यस्यातीन्द्रियतया निरुक्तोपलम्भा-पादनाऽसम्भवाद् न धर्माद्यभावस्यानुपलब्धिगम्यत्वम्।"[२]

नैयायिकाः घटादिविषयाणामभावः प्रत्यक्षसिद्धत्वात् अनुपलब्धिरूपं पृथक् प्रमाणं नाङ्गीकुर्वन्ति। यद्यपि प्रत्यक्षयोग्याधिकरणस्थले अभावप्रतीतिः प्रत्यक्षात्मिकेव भवति, तथापि तत्करणस्यानुपलब्धेर्मानान्तरत्वमवश्यं ग्राह्यम्। अत्र तु परिभाषाकारः "न हि फलीभूतज्ञानस्य प्रत्यक्षत्वे तत्करणस्य प्रत्यक्षप्रमाणतानियतत्वमस्ति, दशमस्त्वमसीत्यादिवाक्यजन्यज्ञानस्य प्रत्यक्षत्वेऽपि तत्करणस्य वाक्यस्य प्रत्यक्ष-प्रमाणातिरिक्तप्रमाणत्वाभ्युपगमात्।"[३]

वस्तुतस्तु अनुपलब्धेः पृथक्प्रमाणत्वे स्वीकृतेऽपि तज्जन्या या प्रमित्युत्पद्यते सा किल अभावस्यैवापरोक्षानुभवरूपा। प्रमाणानां वैजात्यं प्रमागतवैजात्यानुसारेण भवतीति नियमो नास्ति। यतः पूर्वोत्तरमीमांसयोः प्रमाणानां षण्णां विद्यमानेऽपि प्रमायाः पञ्चविधत्वमेव स्वीकृतं तत्तदाचार्यैः। सुतरामनुभववैजात्यानुसारेण प्रमाणवैजात्यं भवतीति नियमः। तथाहि—ज्ञानरूपाणि यानि करणानि—अनुमितिम्प्रति व्याप्तिज्ञानं,

---

१. वेदान्तपरिभाषा- अनुपलब्धिपरिच्छेदः।
२. तदेव।
३. वेदान्तपरिभाषा- अनुपलब्धिपरिच्छेदः।

उपमितिम्प्रति सादृश्यज्ञानं, शाब्दबोधम्प्रति तात्पर्यवच्छब्दज्ञानमर्थापत्तिं प्रत्युपपाद्यज्ञानं तेभ्योऽजन्यो योऽभावविषयकानुभवः तस्यासाधारणं कारणमनुपलब्ध्यात्मकं प्रमाणमिति भावः।

ननु ज्ञानरूपकरणेभ्योऽजन्योऽपि चक्षुरादिजन्यो योऽभावानुभवः तस्यासाधारणं कारणं चक्षुरादिकमेव भवतु, अनुपलब्धिस्वीकारस्य कोऽवसरः? येनेन्द्रियेण यद्द्रव्यं गृह्यते तेनैवेन्द्रियेण तद्द्रव्यं तद्गता जातिस्तदभावश्च गृह्यन्ते इति नैयायिकराद्धान्त इति प्राप्ते वयं ब्रुमः, घटस्यानुभवः घटाभावस्य च यदनुभवः उभयोर्मध्ये विजातीयता अनुभूयते न वा? न द्वितीयः, प्रत्यक्षानुमितिप्रमयोरपि अनुभवत्वसाम्येन तुल्यत्वात् उभयोर्वैजात्यं मास्तु। अतएव यथाऽनुभवत्वसाम्येऽप्युभयोर्भेदः सिद्ध्यति, एवमेव घटानुभवस्य घटाभावानुभवस्य चानुभवत्वसाम्येऽपि उभयोरभेदत्वं नास्ति। प्रथमपक्षे अनुभववैजात्ये प्रमाणवैजात्यस्यावश्यकत्वादभावात्मकमनुपलब्धिज्ञानं प्रमाणान्तरमेव येनेन्द्रियेणेति सिद्धान्तस्त्वपसिद्धान्त एव; निरूपस्य, निस्पर्शस्य, निर्गन्धस्य, नीरसस्य, निःशब्दस्य चाभावस्य ऐन्द्रियत्वायोगात्। सुतरां प्रमाणवैजात्यमनुभववैजात्यानुसारेण भवतीति नियमः, तस्मात् अनुपलब्धिप्रमाणादेवाभावस्यापरोक्षानुभवो भवति। अपि च तत्त्वमसीत्यादिशब्दप्रमाणात् जीवब्रह्मणोः ऐक्यरूपाखण्डार्थस्यापरोक्षानुभवो भवति। नैयायिकादयः दार्शनिकाः अभावप्रतियोगिनः अनुपलब्धिमभावप्रत्यक्षे सहकारीकारण-तयाऽवश्यमेव स्वीकुर्वन्ति, परन्तु प्रमायाः करणत्वेन प्रमाणरूपेण वाऽस्याऽनुपलब्धेः सत्तां नाङ्गीकुर्वन्ति। अद्वैतवेदान्तसिद्धान्ते प्रमायाः असाधारणकारणत्वेन प्रमाणत्वेन वा अस्याः प्रसिद्धिर्वर्त्तते। अन्यसिद्धान्तोक्तं प्रमाणरूपमिन्द्रियमभावस्याधिकरणज्ञाने प्रयोजकमिति।

अत्रैक्यं भेदाभावरूपम्। तेनानुपलब्धिप्रमाणस्य प्रकृते प्रयोजनमपि सिद्धं भवति।

# श्रीसुरेश्वराचार्यः

सुरेश्वराचार्याः श्रीशङ्करभगवत्पादानां शिष्याः आसन्। यतस्तैः स्वीये नैष्कर्म्यसिद्धौ "श्रीमच्छङ्करपादयुगलं संसेव्य" (४.७४) "शङ्करोऽवापयोगात् विद्यां गङ्गामिवाहं प्रवरगुणनिधेः प्राप्य वेदान्तदीप्ताम्" (४.७६) "ज्ञानं व्याकृतमप्यन्यैर्वक्ष्ये गुर्वनुशिक्षया" (१.३) इत्यादिभिर्वचनैः स्वयमेव स्वस्य श्रीशङ्करभगवत्पादशिष्यत्वं कीर्तितम्। स्वबोधपरिशुद्ध्यर्थस्यैव स्वकीयग्रन्थप्रणयनहेतुत्वमपि प्रदर्शितं तैः—

न ख्यातिलाभपूजार्थं ग्रन्थोऽस्माभिरुदीर्यते।
स्वबोधपरिशुद्ध्यर्थं ब्रह्मविन्निकषाश्मसु ॥

(नैष्कर्म्यसिद्धिः १.६)

प्रस्तुत श्रीभावतत्त्वप्रकाशिकाख्यटीकायां श्रीचित्सुखाचार्यः मङ्गलाचरणावसरे "नैष्कर्म्यसिद्धिं यश्चक्रे तन्नमामि सुरेश्वरम्" इति लिखितवान्। चन्द्रिकाकारः श्रीज्ञानोत्तममिश्रोऽपि अस्य ग्रन्थस्य स्वकीयटीकायां मङ्गलाचरणे—

नैष्कर्म्यसिद्ध्यभिधया सुधया सुधियां व्यधात्।
योऽमृतत्वं नमामस्तं सुरेश्वरसुधानिधिम् ॥३॥

इति लिखितवान्। श्रीसच्चिदानन्देन्द्रसरस्वत्यपि "सुरेश्वरोऽनुगृह्णातु ज्ञानं नैष्कर्म्यसिद्धिगम्" (३) इति स्वकीयक्लेशापहारिण्याख्यटीकायां लिखितवान्। अतएव टीकाकाराणां वचनेभ्यः स्पष्टमेव प्रतीयते श्रीसुरेश्वराचार्य एव अस्याः नैष्कर्म्यसिद्धेः रचयितेति। "शिष्यश्चकार तद्भक्त्या सुरेशाख्यो महार्थवित्" (३.९१) इति तैत्तिरीयभाष्यवार्तिकवचनादपि श्रीशङ्करभगवत्पादानां सुरेश्वराचार्य इति नामधेयः कश्चिच्छिष्य आसीदित्यवगम्यते। अतः श्रीशङ्करभगवत्पादशिष्यः सुरेश्वराचार्य एवास्य ग्रन्थस्य कर्त्ता इति निश्चयेन वक्तुं पार्यते।

शङ्करदिग्विजयानुसारेण भट्टकुमारिलपादशिष्यः मण्डनमिश्रः मीमांसाशास्त्रेऽत्यन्तनिपुणोऽपि समयबन्धेनैकदा प्रचलिते शास्त्रार्थे भगवत्पादैर्भाष्यकारैः पराजितः सन् काषायवस्त्रं दधार अपि च सुरेश्वराचार्याभिधानेन तदीयानुचरः सम्वृत इति प्रतीमः।

सुरेश्वराचार्यस्य पूर्वनिवासस्तु माहिष्मतीनगरे आसीत्। तेषां पूर्वाश्रमे शुकाः अपि वेदस्य प्रामाण्यविषये वादं कुर्वन्ति स्म इति प्रवादो वर्तते। अनेनापि तेषां विद्याचर्चायाः पराकाष्ठा द्योत्यते। यद्यपि भगवतो भाष्यकारस्य कालनिर्णयेऽस्ति विप्रतिपत्तिः; तथापि ईशापूर्व पञ्चमशताब्दी एव तेषां काल इति प्रतीयते। तदेव एषामपि काल इति वक्तुं पार्यते। शृङ्गेरीमठस्थेन प्राचीनाभिलेखानुसारेण दीर्घकालपर्यन्तं तत्र मठाधीशरूपेणासन्निति प्रतीयते। परन्त्वत्र बहूनां संशयोऽस्ति। ते योगिन आसन्,

अतस्तेषां सुदीर्घजीवने संशयाभावेऽपि अष्टशतवर्षपर्यन्तं पीठाधीशत्वे संशयोऽस्तीति केचित्।

एते खलु ब्रह्मसिद्धिकारत: मण्डनमिश्रत: भिन्ना इति विदुषां निष्कर्ष:। यत: ब्रह्मसिद्धिभाषाशैली तु नैष्कर्म्यसिद्धितो ललिततरा प्रतीयते। वेदान्तप्रक्रियाऽप्युभयोर्ग्रन्थयोर्भिन्नरूपेणैवादृतेति दृश्यते। तथाहि—

ब्रह्मसिद्धिकार: श्रीमण्डनमिश्र: न कर्ममीमांसकोऽपितु ब्रह्मवादी वेदान्ती। पुनश्च शाङ्करसिद्धान्तेन सह महत्पार्थक्यं वर्तते ब्रह्मसिद्धिकारस्य मण्डनस्य। विषयेऽस्मिन् श्रीमहाप्रभुलालगोस्वामिपादै: विधिविवेकग्रन्थस्य सम्पादकीये विस्तृतरूपेणालोचितम्।[१]

ब्रह्मसिद्धिकारस्य मण्डनस्य ब्रह्मसिद्धे: मङ्गलाचरणान्तर्गतमक्षरमितिशब्दस्य व्याख्यानावसरे तै: शब्दब्रह्मवाद एव प्रतिपादितम्। अपि च मण्डनस्य ब्रह्मवादे स्फोटवादस्य बाहुल्यमवलोक्यते। भगवान् भाष्यकारस्तु स्फोटस्य ब्रह्मरूपता (चैतन्यत्वम्) स्पष्टरूपेण निराकृतवान्।[२] अतएव भाष्यविरोध्ययं सिद्धान्त इति।

श्रीमदनन्तकृष्णशास्त्रिपादा: ब्रह्मसिद्धिकारस्य मण्डनस्य मतं भाष्यवार्तिककारानुसारीति प्रतिपादयन्ति इति महाप्रभुलालगोस्वामिवचनादवगम्यते। शास्त्रिपादा: स्फोटवाद: भगवत्पादानामद्वैतमताविरोधीति व्यवस्था मण्डनमिश्रस्य हरिकारिकासिद्धान्तमनुसृत्य कथयन्ति। अपि च स्फोटस्यैव चैतन्यरूपत्वमप्यङ्गीकुर्वन्ति। एवमेव जयन्तभट्टोऽपि अनुकरोतीति मण्डनमिश्रो नाद्वैतविरुद्धं कुत्रापि किमपि निबन्धमन्य इव निबध्नाति। स्फोटसिद्धेरप्यद्वैतब्रह्मण्येव तात्पर्यमिति ब्रह्मसिद्धेराशय:। परन्तु मूलनिबन्धस्य[३] (श्रीमदनन्तकृष्णशास्त्रिकृतस्य) दर्शनसौभाग्याभावात्, विषयेऽस्मिन् पूर्णतया विश्वासो न भवति।

ब्रह्मसिद्धिकार: मण्डन: ज्ञानकर्मसम्मुच्चयवादी आसीदिति तस्य ब्रह्मसिद्धि-अध्ययने, स्पष्टतया प्रतीयते। स "द्वैतविषयं कर्म, अद्वैतविषयं ज्ञानमि"ति मतं न स्वीकरोति। विरोधादसम्बन्ध एव कर्मज्ञानयोरितिवादिनां मतेऽनुत्पाद एवाद्वैतज्ञानस्य प्रसज्येत, प्रमाणादिविभागाद्वैतप्रतिपत्त्योर्विरोधात् इति प्रतिपादितवान्।[४]

ब्रह्मसिद्धिकार: केवलेन ज्ञानेन मुक्तिर्विलम्बेन भवतीति कथयति, कर्मणा सह समुच्चयं कृत्वैव मुक्ति: क्षिप्रतरं लब्धुं शक्यते। कर्मसहायं विनापि उर्ध्वरेत-सामाश्रमिणाञ्च भवति विशुद्धविद्योदय:, परन्तु तत्र कालकृतो विशेष:, सा साधन-

१. विधिविवेक: (तारा प्रिण्टिंग वर्क्स, वाराणसी)।
२. ब्रह्मसूत्र-शाङ्करभाष्यम्, १.३.५८
३. यस्मिन्निबन्धे ब्रह्मसिद्धिकारमण्डनस्य मतं भाष्य-वार्तिककारानुसारित्वमिति प्रतिपादितं शास्त्रिपादा:।
४. ब्रह्मसिद्धि:, पृ. ३२, पंक्ति ८.

विशेषाद्धि क्षिप्रं क्षिप्रतरं च व्यज्यते, अन्यथा चिरेण चिरतरेण वा भवति।[१] एतद्भावं द्रढयन् सः "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इति सूत्रमुदहरति। अत्र "यज्ञेन दानेन..." इति श्रवणात् अभ्यासलभ्यायामपि विद्यायां कर्मण्यपेक्ष्यन्ते" इति विद्यालाभाय कर्मण अनिर्वार्यता प्रत्यपादयत्।[२] मतमिदं भाष्यविरुद्धं युक्त्याभासैरुपपादितञ्च। तथाहि भाष्यकार कुत्रापि ज्ञानकर्मणो समसमुच्चयं न स्वीकृतवान्। कर्मणः आरादुपकारकत्वन्तु भाष्यकारैरङ्गीकृतम्। सूत्रभाष्येऽप्यत्र ते कथयन्ति "उत्पन्ना हि विद्याफलसिद्धिं प्रति न किञ्चिदन्यदपेक्षते",[३] इति। अश्ववदिति योग्यतानुसारेणैव कार्यं भवतीति दृष्टान्तः अर्थात् यथा अश्वः लाङ्गलकर्षणोपयोगी न भवति परन्तु रथचर्यायामुत्तमो भवति, एवमेव कर्म मोक्षसाधने अनुपयोगित्वेऽपि विद्योत्पादने अन्तःकरणशुद्धिद्वारेणोपयोगी भवति। यया मोक्षस्य प्राप्तिर्भवति। ईशावास्याद्युपनिषत्सु श्रीमद्भगवद्गीतायाञ्च भगवत्पादैर्ज्ञानकर्मसमुच्चयस्य निराकरणं सुदृढरूपेण कृतं स्वीयभाष्यरचनावसरे।

कुप्पुस्वामिपादैरपि स्वीयायां ब्रह्मसिद्धिभूमिकायां "ज्ञानकर्मसमुच्चयो मण्डनेन विवक्ष्यते, भगवत्पादैस्तु ज्ञानकर्मसमुच्चयो निरस्यते" इति भाष्यकारविरुद्धं मण्डनः ब्रह्मसिद्धौ निबध्नातीत्युक्तम्।[४]

श्रीमण्डनमिश्रः अख्यातिवादं निरस्यान्यथाख्यातिवादं प्रत्यपादयत् अर्थात् ज्ञानमात्रस्य याथार्थ्यं निरसनपुरःसरं भ्रमज्ञानमङ्गीकृतम्। वस्तुतस्तु भ्रमज्ञानस्य समर्थने एव मण्डनस्य तात्पर्यं न तु नैयायिकानामन्यथाख्यातिसमर्थने। उक्तञ्च ब्रह्मसिद्धौ तर्ककाण्डे—

प्रतिष्ठितं च विज्ञानमर्थमात्रावलम्बनम्।
भेदेषु त्वप्रतिष्ठत्वमस्तीन्द्रियधियामपि।।३१।।

श्लोकेनानेन भेदमात्रस्य मिथ्यात्वं संसाध्य जीवब्रह्मणोरैक्यं समर्थयति। अतएव नैयायिकाभिमतान्यथाख्यातिसमर्थने नास्ति तस्याभिप्रायः। एवम्प्रकारेणात्र एतदेव सिद्ध्यति यदयं मण्डनमिश्रः न द्वैती। नापि शाङ्करसिद्धान्ताभिमताद्वैतवादी, अपि तु मण्डनस्याद्वैतवादः भर्तृहरिसमर्थितः ज्ञानकर्मसमुच्चयात्मकः, न तु केवलज्ञानात्मकः शाङ्कराद्वैतवादः।

सर्वज्ञात्ममुनिः स्वीयसंक्षेपशारीरके जीवन्मुक्तिनिरूपणावसरे मण्डनमतस्य प्रस्थानान्तरत्वं प्रतिपादयति "परिहृत्य मण्डनवचस्तद्ध्यन्यथा प्रस्थितम्"[६] इति।

---

१. ब्रह्मसिद्धि, पृ. ३६-३७.
२. तदेव, पृ. ३६, पं० २३.
३. ब्रह्मसूत्र-शाङ्करभाष्याम्, ३.४.२६.
४. ब्र.सि.भूमिका, पृ. ३४। (मद्रासससंस्करणम्)
५. ब्रह्मसिद्धि, पृ. १४९, पंक्ति १२
६. संक्षेपशारीरकम् २.१७४.

अस्य विश्ववेदव्याख्यायामपि "मण्डनमिश्रस्य तु प्रस्थानान्तरत्वात् तदीयं वचो यथाश्रुतमेवास्तु।[१] वेदानन्दव्याख्यायामपि "अयमेव न्यायो वार्तिकादिषु नेतव्यः परिहृत्य मण्डनवचः, तस्यान्यथा प्रस्थितत्वात्।" सुरेश्वराचार्योऽपि स्वीयबृहदारण्यकवार्तिके "तमेव धीरो विज्ञाय"[२] इति श्रुतिव्याख्यानावसरे भर्तृप्रपञ्चमतमुपन्यस्य तन्निरासानन्तरम् "अन्ये तु पण्डितमन्याः"[३] इति कथनेन सिद्धान्तभेदमूलकमनैक्यमेव। अत्रानन्दगिरिणोक्तं यत् "मण्डनमतमुत्थाप्य वार्तिके तन्मतं निरस्यतीति मण्डनसुरेश्वरयोः सिद्धान्तभेदो विद्यते। नैष्कर्म्यसिद्धावपि श्रीसुरेश्वराचार्यैः मण्डनमिश्रमतं निराकृतवान्।[४]

न्यायरत्नदीपावल्यां मण्डनविश्वरूपयोर्भेदः सुरेश्वरविश्वरूपयोश्चैक्यं प्रत्यपादयत्। आनन्दगिरिप्रणीतशङ्करदिग्विजये मण्डनस्य संन्यासग्रहणचर्च्चा नास्ति। तत्र पुनः विश्वरूपोऽपरः सूरेश्वर इति वर्तते। श्रीमाधवाचार्यप्रणीतशङ्करदिग्विजये विश्वरूप एव मण्डन इति वर्तते।[५] शृङ्गेर्याःस्थानपण्डितविरचितं गुरुवंशकाव्यमपि— गृहस्थाश्रमस्थः विश्वरूप एव संन्यासावस्थायां सुरेश्वर इति सिद्धान्तं पोषयति। केचित्तु मण्डन एव विश्वरूप इति वदन्ति। अनन्तानन्दशङ्करविजयेऽपि विश्वरूप एव सुरेश्वराचार्य इति वर्तते।

म.म. अनन्तकृष्णशास्त्रिपादानां पर्यालोचनया मण्डनः विश्वरूपश्च एक एवासीत्, स एव पुनः संन्यासानन्तरं सुरेश्वराख्यां जगामेत्यवगम्यते।

म.म.डा. श्री योगेन्द्रनाथबागचीमहाभागाः स्वीये "भारतीयशास्त्र ओ साहित्ये अद्वैतवाद"[६] इत्याख्ये ग्रन्थे कथयन्ति—शारदामठस्य मठाधीशः विश्वरूपाचार्यः भगवतः शङ्करस्य शिष्य आसीत्। विश्वरूपाचार्योऽयं याज्ञवल्क्यस्मृतेः बालक्रीडानाम्नीं टीकां व्यरचयत्। मिताक्षरायां विज्ञानेश्वरेण लिखितम्—"याज्ञवल्क्यमुनिभाषितं मुहुर्विश्वरूपविकटोक्तिविस्तृतम्"। अयमेव विश्वरूपाचार्यः बृहदारण्यकभाष्य-वार्तिकमरचयत्। सुरेश्वराचार्यस्यैवेयं कृतिरितिवार्तिकविषये प्रसिद्धिर्वर्तते। सुरेश्वराचार्य एव विश्वरूपाचार्य इत्यपि प्रसिद्धिर्वर्त्तते। तथाहि—विद्यारण्यस्वामिपादैः स्वीये

---

१. पृ. ५५०-१०३३।

२. बृ.उ., ४.४.२१।

३. अन्ये तु पण्डितमन्याः सम्प्रदायानुसारतः।
विज्ञायेति वचः श्रौतमिदं व्याचक्षतेऽन्यथा।।
तत्त्वमस्यादिवाक्योत्थविज्ञानेन यथोदितम्।
विज्ञायेति वस्त्वसंसर्गिप्रज्ञां कुर्वीत यत्नतः।।
(आनन्दाश्रम संस्करणम्, पृ. १८५२-७९६-९७)

४. नैष्कर्म्यसिद्धिः १-६७.

५. शङ्करदिग्विजय, श्लोकसंख्या ११३-११८,

६. वङ्गभाषायां लिखितोऽयं ग्रन्थः।

"विवरणप्रमेय-संग्रहे" सुरेश्वराचार्यप्रणीतवार्तिकश्लोकं विश्वरूपाचार्यप्रणीतत्वेनोद्धृतम् "तदुक्तमाक्षेपपूर्वकं विश्वरूपाचार्यै" रिति।[१] अपि च ब्रह्मानन्दभारतीकृते "पुरुषार्थप्रबोधे" नैष्कर्म्यसिद्धिप्रणेता सुरेश्वराचार्य एव विश्वरूपाचार्य इति प्रतिपादितम्।

"इत्येवं नैष्कर्म्यसिद्धौ ब्रह्मांशैर्ब्रह्मवित्तमैः।
श्रीमद्भिर्विश्वरूपाद्यैराचार्यैः　करुणार्णवैः।।"

पी.वी. काणेमहोदयैः स्वीये "हिस्ट्री ऑफ धर्मशास्त्र" (धर्मशास्त्रस्येतिहासः) इत्याख्ये ग्रन्थे विश्वरूपाचार्यविरचितायाः बालक्रीडायाः वाक्यान्युद्धृत्य भगवतः श्रीशङ्कराचार्यस्यानुयायित्वं प्रतिपादितम्। मोक्षार्थं हि पारिव्राज्यं ज्ञानैकसाधनं न तत्र कर्मणां प्रयोजनमिति कथितमेव।

तथा च तत्त्वप्रदीपिकायां श्रीचित्सुखाचार्यः मण्डनमिश्रविरचिता ब्रह्मसिद्धिरिति कथितवान्–"तथा च ब्रह्मसिद्धौ मण्डनमिश्रैः विपर्ययाभावस्तु युक्तोऽनुमातुं हेत्वभावे फलाभाव इति"।[२] न्यायकन्दलीकारः श्रीधरभट्टोऽपि मण्डनमिश्रविरचिता ब्रह्मसिद्धिरिति अकथयत्।[३]

कुत्रापि श्रीसुरेश्वराचार्यविरचिता ब्रह्मसिद्धिरिति न कोऽपि प्रतिपादयति। नैष्कर्म्य-सिद्धिः, बृहदारण्यकोपनिषद् तैत्तिरीयोपनिषदोः भाष्यवार्तिकम्वा मण्डनस्येति न कोऽपि आचार्यः स्वीकरोति। तस्मादुभयोर्भेदः स्वाभाविक एव। अपि च श्रीसुरेश्वराचार्यः "नैष्कर्म्यसिद्धौ" शाङ्करसिद्धान्तं सर्वथाऽनुसरति। नापि मण्डनमिश्रः नैष्कर्म्यसिद्धौ प्रतिपादितमनुवदति, अधिकन्तु ब्रह्मसिद्धिवचनमेव स्थानविशेषे नैष्कर्म्यसिद्धौ निराकृतमिति दृश्यते।[४] सुरेश्वराचार्यशिष्यः सर्वज्ञात्ममुनिरपि संक्षेपशारीरके २.१७४ कारिकायां "परिहृत्य मण्डनवचः"[५] इति कथयति। एवमेव विद्यारण्यस्वामिपादाः विवरणप्रमेयसंग्रहे विश्वरूपाचार्यस्य चर्चा कुर्वन्ति, अतः विश्वरूप एव सुरेश्वराचार्यः, मण्डनस्तु भिन्न इति भाति।

प्राध्यापकहिरयण्णामहाशयः स्वकीयनिबन्धे[६] उभयोः पार्थक्यमेव प्रमाणयति। तत्र दार्शनिकसिद्धान्तभेदमवलम्ब्य शृङ्गेरीमठाध्यक्षाणां विवरणमनुसृत्य चोभयोः

---

१. विवरणप्रमेयसंग्रहः, पृ. १७३, पंक्ति-३ (अच्युतग्रन्थमालाकार्यालय, काशी)

२. तत्त्वप्रदीपिका, पृ. १४०, पंक्ति-२ (निर्णयसागर प्रेस, बम्बई)।

३. न्यायकन्दली, पृ. २१८.

४. नैष्कर्म्यसिद्धिः, १.६७

५. जीवन्मुक्तिगतो यदाह भगवान्सत्सम्प्रदायप्रभुः
　　जीवाज्ञानवचस्तदीदृगुचितं पूर्वापरालोचनात्।
　अन्यत्रापि तथा बहुश्रुतवचः पूर्वापरालोचनात्
　　नेतव्यं परिहृत्य मण्डनवचस्तद्ध्यन्यथा प्रस्थितम्।। सं.शा., ५.१७४.

६. Journal of Asiatic Socity, April 1923, January 1924.

भेदं साधु संसाधयति। अथ म.म.कुप्पुस्वामिशास्त्रिपादा अपि ब्रह्मसिद्धिभूमिकायां[१] भेदमेव प्रतिपादयन्ति।

यद्यपि ब्रह्मसिद्धिकार: मण्डनमिश्र आसीदद्वैतवेदान्ती तथापि तदीयाद्वैतवाद: न शङ्कराचार्यसम्मत: ब्रह्माद्वैतवादोऽपि तु भर्तृहरिसम्मत: शब्दब्रह्माद्वयवाद:। मण्डनमिश्र: स्फोटवादस्य समर्थनार्थं "स्फोटसिद्धि:" इत्याख्यं ग्रन्थमपि विरचितवान्। विमुक्तात्मयति: इष्टसिद्धिग्रन्थे सुरेश्वराचार्यमनुसृत्य ब्रह्माद्वैतवाद: एव प्रकृताद्वैतवाद:, न शब्दाद्वैतवाद:[२] इति शाङ्करसिद्धान्तं समर्थयति। अनेन विचारेणापि मण्डनमिश्र: सुरेश्वराचार्यत: भिन्न इत्येव सिद्ध्यति।

मण्डनमिश्रस्वीकृतस्य भावाद्वैतवादस्य खण्डनं सुरेश्वराचार्य: बृहदारण्यकवार्तिके[३] युक्तिभि: करोति। एवमेव मधुसूदनस्वामिपादा अपि अद्वैतसिद्धौ भावाद्वैतवादस्य यौक्तिकत्वं प्रतिपाद्य खण्डनं कुर्वन्ति—"वस्तुतस्तु—अविद्यानिवृत्ते: पञ्चमप्रकारत्वं भावाद्वैतञ्चाभ्युपगमपराहतम्"।[४] एतेनापि उभयो: भेद एव सिद्ध्यति।

मण्डनमिश्रस्य विचार: स्वतन्त्ररूपेण वर्तते इति भाति। तेन शाङ्करभाष्यस्यैकाऽपि पंक्ति: नैवोद्धृता स्वीयायां ब्रह्मसिद्धौ। वस्तुतस्तु स: शाङ्करप्रतिद्वन्द्वी सन्नपि आसीदद्वैतवेदान्तीति ज्ञायते। प्रकरणपञ्जिका[५]-भामती[६]- न्यायमञ्जरी-[७]पञ्चपादिका-विवरणादिषु[८] ग्रन्थेषु मण्डनमिश्रसिद्धान्तस्यावतारणा: वर्तन्ते। परन्तूभयोरभिन्नत्वे सम्यक् प्रमाणं नोपलभ्यते। अपि च मण्डनसुरेश्वरप्रस्थानयोर्मध्ये बहव: सिद्धान्तभेदा अप्युपलभ्यन्ते। तथाहि—

---

१. A careful study of Mandana Misra's Brahmasiddhi in comparison with his other in print and with known works, all of which are now available in print and with the known works of Suresvara and Samkara ... and a careful consideration of the references to Mandana contained in certain important works of Mimansa, Nyaya, Dvaitavedanta and other systems have made it possible to assemble here several date of over whelming cumulative weight which would be quite sufficient to kill the common belief in the Mandana-Suresvara equation, and to exhibit Mandana and Suresvara as two different individuals, maintaining strikingly divergent views within the purviews of Advaitism. (Introduction, p. xxvi.)

२. "तस्मादात्माद्वैतमेव सिद्ध्यति, शब्दाद्वैतं घटाद्वैते वा"। इष्टसिद्धि; पृ. १७६.

३. पृ. १८५२, पंक्ति ७९६ ---, (आनन्दाश्रम संस्कृत सीरीज- १६)

४. अद्वैतसिद्धि; पृ. ४६७, पंक्ति- १७ (परिमल पब्लिकेशन्स)

५. पृ. २८, पं. २१, (चौखम्वा संस्कृत सीरीज सं १७).

६. पृ. ८, पं. ९ (भामती (चतु:सूत्री) निर्णयसागर प्रेस, बम्बई)

७. पृ. ५२६, पं. १७ (विजयनगरम् संस्कृत सीरीज-१०)

८. पृ. ३२, पं १७ (विजयनगरम् संस्कृत सीरीज-५).

## मण्डनसुरेश्वरप्रस्थानयोः सिद्धान्तभेदः

| मण्डनमिश्रः | सुरेश्वराचार्यः |
| --- | --- |
| १. मण्डनमिश्रः स्फोटवादमङ्गीकृत्य शब्दब्रह्मवादस्य समर्थनमकरोत्। | १. श्रीशङ्कराचार्यः सुरेश्वराचार्यश्च स्फोटवादं नैव स्वीकुरुतः। ब्रह्माद्वैतवादमङ्गीकृत्य शब्दब्रह्मवादस्य स्फोटवादस्य च खण्डनं कुरुतः। |
| २. मण्डनमिश्रः भावाद्वैतवादं प्रतिपादयति। तन्मते ब्रह्मव्यतिरिक्तोऽपरो भावपदार्थः नास्ति। सत्यपि ब्रह्मज्ञाने प्रपञ्चस्याविद्यायाश्चाभावस्यास्तित्वं तत्कालेऽपि विद्यते एव। विज्ञानात्मनो ब्रह्मणोऽस्थूलत्वादिरिव दुःखाभावोऽप्युपाधिविशेषः इति ब्रह्मणो भावरूपत्वम्, इति तद्व्यतिरेकेण भावरूपद्वैताभाव एवाद्वैतवाद इति भावाद्वैतमतम्। | २. श्रीशङ्कराचार्यस्य सुरेश्वराचार्यस्य च मते अविद्यानिवृत्तिः ब्रह्मस्वरूपा ब्रह्मव्यतिरिक्तः न भावपदार्थः नाभावपदार्थः तिष्ठति। ब्रह्माद्वैतवाद एव वर्तते। |
| ३. मण्डनमते अविद्यायाः आश्रयः जीवः विषयः ब्रह्म।[1] भामतीकारोऽपि मण्डनमतमेवाङ्गीकरोति। | ३. सुरेश्वराचार्यस्य मते आश्रयविषयौ ब्रह्म एव।[2] पद्मपादाचार्यः प्रकाशात्मयतिरप्येतन्मतमेवाङ्गीकरोति।[3] |
| ४. मण्डनमिश्रः अग्रहणान्यथाग्रहणेति भेदेनाविद्यायाः द्वैविध्यम् स्वीकरोति। | ४. सुरेश्वराचार्यः वार्तिके एतन्मतं खण्डयति। |
| ५. भ्रमज्ञाननिरूपणावसरे मण्डनःभट्टसम्मतां विपरीतख्यातिं समर्थयति। | ५. सुरेश्वरः विपरीतख्यातिं नैव स्वीकरोति। |
| ६. वेदान्तश्रवणजन्यं ज्ञानं परोक्षात्मकम्, शब्दजन्यं ज्ञानं प्रत्यक्षात्मकं न भवति, मनननिदिध्यासनानन्तरं मनसा प्रत्यक्षात्मकं ब्रह्मज्ञानं जायते। | ६. श्रीसुरेश्वराचार्यस्य मते शब्दजन्यमपरोक्षात्मकं ज्ञानं जायते। विवरणाचार्योऽपि एतदेव मतमङ्गीकरोति। |

---

१. ब्रह्मसिद्धि-ब्रह्मकाण्ड, पृ. १०, पं. ३.

२. नैष्कर्म्यसिद्धिः, २.९७.

३. पञ्चपादिका, पञ्चपादिकाविवरणञ्च, (ब्र.सू. अध्यासभाष्येऽज्ञाननिरूपणावसरे)

| | |
|---|---|
| ७. मण्डन: प्रतिबिम्बवादी। | ७. श्रीसुरेश्वराचार्य: आभासवादी। |
| ८. मण्डन: दृष्टिसृष्टिवादं स्वीकरोति। | ८. श्रीसुरेश्वराचार्य: जगत: व्यावहारिकसत्यत्वं स्वीकरोति। |
| ९. मण्डनमिश्र: जीवन्मुक्ति: न स्वीकरोति। | ९. जीवन्मुक्ति: स्वीकृतम्। |

एवम्प्रकारेणापि बहव: दार्शनिका: मण्डनमिश्र: सुरेश्वराचार्यत: भिन्न इत्येव प्रतिपादयन्ति। श्रीश्रीमोहनभट्टाचार्य: श्रीदिनेशचन्द्रभट्टाचार्यश्च स्वीये "भारतीय-दर्शनकोषे"[१] ऽप्येतन्मतमेव स्वीकुरुत:। तै: कथितम्—"मण्डनमिश्र: वाचस्पतिमिश्र इव गृहस्थ आसीत्, तै: संन्यासाश्रम: नैव स्वीकृत:। ब्रह्मसिद्धिरद्वैतवेदान्तस्य प्रख्यातग्रन्थो मण्डनमिश्रविरचित इत्येव चिरप्रसिद्धि:। किन्तु आचार्यशङ्करस्य शिष्यत्वं स्वीकृतं चेन्मण्डनेन तदा तदवस्थायामेव ब्रह्मसिद्धि: विरचितेत्येवेतिकल्प्यम्, तदा शङ्करप्रदत्तसन्यासाश्रमोचितनाम्नैवास्य ग्रन्थकर्तु: प्रसिद्धिरपि स्यात्। परन्त्वनन्तरवर्त्तिन: सर्वेऽद्वैतनिबन्धकारा: ब्रह्मसिद्धे: रचयितृरूपेण "मण्डन" इत्येव नाम परिगृहीतवन्त:। शाङ्करसिद्धान्तस्य महान् प्रवक्ताऽपि वाचस्पतिमिश्र: बहुषु स्थलेषु ब्रह्मसिद्धिमनुसरति।[२] तस्मात्प्रकटार्थकारै: "मण्डनपृष्ठसेवी वाचस्पति" इति कथयित्वा कटाक्ष: कृत:। अत: मण्डनमिश्र: श्रीशङ्कराचार्यापेक्षया अत्यन्तवय:ज्येष्ठ एवमनुमातुं शक्यते। "ब्रह्मसिद्धौ" शङ्करनाम्न: आभासोऽपि नास्ति, शङ्करशिष्यश्चेत् स्वगुरुशङ्करस्मरण-मवश्यमेव तेन कृतं स्यात्। मण्डनमिश्र: पुन: भर्तृहरिस्वीकृतशब्दाद्वैतवादस्य पृष्ठपोषक: आसीत्। पं. बलदेव उपाध्यायोऽपि स्वीये "शङ्कराचार्य" इत्याख्ये ग्रन्थे उभयोर्भिन्नत्वमेव प्रतिपादितवान्।

वेदान्तमीमांसाचार्यै: पं.ए.सुब्रह्मण्यशास्त्रिपादै: मण्डनमिश्र एव सुरेश्वराचार्य इति प्रतिपादयन्ति[३]—यस्य कस्यापि देशस्य व्यक्तेर्वैतिहासलेखनियश्चेत्, तद्देशस्य तत्कालीनसमाजस्य च परिस्थितिं सम्यक् रूपेण ज्ञात्वैव सिद्धान्त: नेतव्य:, न त्वन्यथा। अतएव ऋषिमहर्षीणां जन्मभूमौ समस्तभूमण्डलस्यादर्शस्थले भारतवर्षेऽ-प्यस्माकं यावत् मण्डनमिश्रस्याविर्भाव बभूव, तावत् कालादिदानीं पर्यन्त: विद्वत्समाज:, अत्रस्थजना:, भगवान् शङ्कराचार्यप्रवर्तितमठाम्नाय:, अपि च तत्तत् काले विद्वद्भि: विरचिता: शङ्करदिग्विजयादय: ग्रन्था:, सर्वे प्राय: निर्विवादत्वेन प्रतिपादयन्ति यत्

१. भारतीदर्शनकोष: (वङ्गभाषायाम्), पृ. २०३.
२. ब्रह्मसूत्रशाङ्करभाष्यम्- भामती, पृ. ८, पंक्ति ९.
पृ. ५८, पं. ११ इत्यादि (चौ.खं.सी., वाराणसी)
३. अच्युतग्रन्थमालात: प्रकाशित: नैष्कर्म्यसिद्धिभूमिकायां द्रष्टव्य:।

मण्डनमिश्र एव भगवत्पादैः शङ्कराचार्यैः सह शास्त्रार्थे पराजितः सन् तस्य शिष्यत्वं स्वीकृत्य सुरेश्वराचार्यनाम्ना प्रसिद्धोऽभवत्।''

मतभेदविषयेऽपि शास्त्रिपादाः कथयन्ति यत् बाल्ये वयसि लिखितं वस्तु वार्द्धक्ये ज्ञानपरिपक्वदशायामसमिचीनमिति ज्ञात्वा तस्य पुनः प्रवृत्तश्चेत् तत्राश्चर्यस्य कारणमेव नास्ति। उक्तं हि ''तत्त्वपक्षपातो हि धियां स्वभावः''।

अपि च दृश्यते यत् प्रायशः विद्वांसः कस्यापि आचार्यस्य मतमनुसृत्य रचनावसरे स्वाभिप्रायमपि तद्ग्रन्थे निवेशयन्ति। अतएव मिथिलानिवासी मण्डनमिश्र एव संन्यासाश्रमे प्रवेशानन्तरं सुरेश्वराचार्यनाम्ना प्रख्यातोऽभूत्। शृङ्गेरीमठस्य प्रथमाचार्यरूपेणापि तेषामेव प्रसिद्धिः वर्तते। सुतरां मण्डनमिश्र एव सुरेश्वराचार्य इत्यत्र शङ्काया अवसरोऽपि नास्तीति प.ए.सुब्रह्मण्यम् शास्त्रिपादानामभिमतम्।

यद्यपि अत्र विचारे मण्डनमिश्र एव सुरेश्वराचार्य इति भाति, तथापि ब्रह्मसिद्धिकारः मण्डनः भिन्नः पुरुषः इति सुरेश्वराचार्यवचनादेव भाति। ''अन्ये तु पण्डितं मन्या...[१]'' इत्यादि वार्तिकवचनेन ब्रह्मसिद्धिकारं मण्डनम्प्रति ''अन्ये'' इति शब्दं प्रदाय तैः स्वस्मात् भिन्नः एव मण्डनः इति प्रतिपादितम्।

सुरेश्वरमण्डनयोः भिन्नत्वप्रतिपादकाः डॉ. महाप्रभूलालगोस्वामिपादाः विधिविवेकभूमिकायां[२] विद्यारण्यस्वामिन उद्धरणं प्रदाय सुरेश्वर एव विश्वरूप इति प्रतिपादयन्ति, पुनस्तत्रैव[३] ''विश्वरूप एव मण्डन'' इति कथयन्ति। यद्ययं मुद्रणभ्रमो न स्यात्, तर्हि अनेनापि मण्डन एव सुरेश्वराचार्य इति सिद्धम्।

श्रीविद्यारण्यस्वामिपादविरचिते श्रीशङ्करदिग्विजयग्रन्थे तु स्पष्टमेव मण्डनमिश्रस्यैव संन्यासस्वीकारानन्तरं सुरेश्वराचार्यत्वेन विख्याततत्वं वर्तते। तथाहि—

मण्डनमिश्रोऽप्यथ विधिपूर्वं दत्वा वित्तं यागे सर्वम्।
आत्मारोपितशोचिष्केशो भेजे शङ्करमस्तमिताशः।। १०.७४.

संन्यासगृह्यविधिना सकलानि कर्मा-
ण्यह्लाय शङ्करगुरुर्विदुषोऽस्य कुर्वन्।
कर्णे जगौ किमपि तत्त्वमसीति वाक्यं
कर्णेजपं निखिलसंसृतिदुःखहानेः।। १०.७५

संन्यासपूर्वं विधिवद् विभिक्षे पश्चादुपादिक्षदथाऽऽत्मतत्त्वम्।
आचार्यवर्यः श्रुतिमस्तकस्थं तदादिवाक्यं पुनरवभाषे।। १०.७६

---

१. बृहदारण्यकभाष्यवार्तिकम् (आनन्दाश्रम संस्कृत सीरीज-१६), पृ. १८५२ पं. ७९६.
२. विधिविवेकः (तारा पब्लिकेशन, वाराणसी), पृ. ५
३. तदेव, पृ. ६.

मण्डनमिश्र एव संन्यासानन्तरं सुरेश्वराचार्यत्वेन ख्यात इत्यत्र संशयाभावेऽपि ब्रह्मसिद्धिकारः मण्डन एव संन्यासं स्वीकृत्य सुरेश्वराचार्योऽभूदित्यत्र संशयो वर्तते। यतः —

सुरेश्वराचार्यः गृहस्थाश्रमे मण्डनमिश्रनाम्ना ख्यातः आसीत्। स तु पूर्वमीमांसानुयायी कर्मकाण्डी आसीत्। तर्हि विधिविवेकादयः कर्मकाण्डानुसारिग्रन्थलेखनन्तु तेषां पक्षे स्वाभाविको व्यापारः। न तु ज्ञानकाण्डात्मिकायाः ब्रह्मसिद्धेः।

अध्वरमीमांसापक्षमवलम्ब्यैव मण्डनमिश्रः भगवता भाष्यकारेण सह शास्त्रार्थः कृतवान्। तस्मादपि मण्डनमिश्रः न उत्तरमीमांसानुयायी।

मण्डनमिश्र एव संन्यासस्वीकारानन्तरमाचार्यसकाशात् वेदान्तविज्ञानं प्राप्य (१) नैष्कर्म्यसिद्धिः, (२) बृहदारण्यकभाष्यवार्तिकम्, (३) तैत्तिरीय-भाष्यवार्तिकम्, (४) पञ्चीकरणवार्तिकम्, (५) मानसोल्लासः (दक्षिणामूर्तिस्तोत्रव्याख्या), (६) प्रणवार्थकारिका इत्यादीन् ग्रन्थान् विरचितवान्। अत्र सर्वे ग्रन्थाः सुरेश्वराचार्यविरचितत्वेनैव प्रसिद्धाः वर्तते। अन्येऽपि आचार्या एतत्स्वीकुर्वन्ति। परन्तु वेदान्ततत्त्वप्रतिपादिका ब्रह्मसिद्धिरपि सुरेश्वराचार्यकृता इति न कोऽपि कथयति।

सुरेश्वराचार्यस्य पूर्वाश्रमे कर्मकाण्डपक्षपातित्वात् तद्विरोधिज्ञानकाण्डप्रतिपादिका ब्रह्मसिद्धिरपि तैरेव विरचितेत्यत्र युक्तिर्नास्ति।

तस्मात् विधिविवेककारः मण्डनमिश्रः सुरेश्वराचार्यश्चोभयोर्मध्ये भेदाभावेऽपि ब्रह्मसिद्धिकारः मण्डनमिश्रः कश्चिदन्य एवेति वक्तुं पार्यते। **वस्तुतस्तु सुरेश्वराचार्याः ब्रह्मनिष्ठाः संन्यासिन आसन् ब्रह्मसिद्धिकारः मण्डनमिश्रस्तु सुरेश्वराचार्यतः भिन्नः कश्चित्पण्डित आसीदिति भाति।**

## मतवादः

श्रीसुरेश्वराचार्याः अद्वैतवादिन आसन्। शाङ्करसिद्धान्तप्रपञ्चार्थमेव ते ग्रन्थान् निर्मितवन्तः। तैः नैष्कर्म्यसिद्धौ शाङ्करसिद्धान्तः सुचारुरूपेण प्रतिपादितः। पुनर्जन्मवादोऽपि तैः स्वीकृतस्तत्र। श्रीशङ्करभगवत्पादानां ग्रन्थे भाट्टमतस्य खण्डनं न दृश्यते। आचार्यपद्मपादस्यापि ग्रन्थे भाट्टच्छाया नास्तीति मन्ये। अपि तु सुरेश्वराचार्यकृतविधिविवेके भाट्टमतस्य शाब्दीभावनायाः समुल्लेखो वर्तते। सुरेश्वराचार्यः (मण्डनमिश्रः) गृहस्थाश्रमे कुमारिलभट्टस्य शिष्य आसीदिति प्रसिद्धिर्वर्तते। नैष्कर्म्यसिद्धौ प्रभाकरमतस्य खण्डनं वर्तते। परन्तु भाट्टमतस्य छायाऽपि न दृश्यते। भाट्टमतनिरसने पद्मपादादीनामाचार्याणां कुत्रापि चेष्टा न दृश्यते। तदभावपूरणायैव सुरेश्वराचार्यस्य प्रचेष्टेति भाति। सुरेश्वराचार्यस्य मतवादस्तु अद्वैतवादीनामाचार्याणां समीपे समादृतो

वर्तते। प्रमाणरूपेण परवर्तिभिराचार्यैः एतेषां वाक्यानामुद्धरणं प्रस्तुतम्, मतमप्यनुसृतम्। अमलानन्दः, विद्यारण्यः अप्पय्यदीक्षितादयः आचार्याः स्वीयग्रन्थेषु सुरेश्वराचार्यस्य मतं वाक्यानि चोद्धृतवन्तः। चित्सुखाचार्यः स्वप्रणीततत्त्वप्रदीपिकायां चतुर्षु स्थलेषु सुरेश्वराचार्यमतं प्रामाणिकत्वेन गृहीतम्। विद्यारण्यस्वाम्यपि विवरणप्रमेयसंग्रहे अष्टसु स्थलेषु सुरेश्वराचार्याभिमतं प्रकटयन् स्वमतस्य दार्ढ्यं कृतवान्। अप्पय्यदीक्षितेनापि सिद्धान्तलेशसंग्रहस्य स्थलद्वये सुरेश्वराचार्यमतमुद्धृतम्। सुरेश्वराचार्यस्य प्रामाण्यविषये एतदेव निदर्शनम्।

सुरेश्वराचार्यः पद्मपादाचार्यश्चोभावेवाचार्यशङ्करस्य साक्षाच्छिष्यौ, तस्मात् तयोः पक्षे शाङ्करसिद्धान्तस्य प्रपञ्चः प्रामाणिकरीत्या सम्भवः। तथा च ताभ्याम् कृतमेव। आभ्याम् शाखाद्वयमपि प्रकटीतमभूत्। उभयोः शाखयोः प्रतिपाद्यविषयस्याभेदेऽपि स्थलविशेषे भिन्नता वर्तते, सुरेश्वराचार्यस्य प्राधान्यमपि स्फुटमेव।

## श्रीचित्सुखाचार्यः

द्वादशशताब्देः चरमचरणादारभ्य त्रयोदशशताब्देराद्यचरणपर्यन्तं नव्यन्याय-शिरोमणेर्गङ्गेशोपाध्यायस्याविर्भावकालः। नव्यन्यायक्षेत्रे नवजीवनं सञ्चारयति स्मासौ। द्वादशशताब्देः प्रथमभागे 'न्यायलीलावती' कारस्य वल्लभाचार्यस्याविर्भावोऽभूत्। "न्यायकन्दलीकारः श्रीधराचार्यः स्वीयन्यायकन्दल्यन्ते न्यायकन्दल्याः निर्माणकालं त्रयोदशाधिकनवशतम्[१] शकाब्द (९९१ ई.) इत्यवादीत्। मिथिलालङ्कार उद्भटनैयायिकः श्रीमदुदयनाचार्यो लक्षणावलेर्निर्माणकालं षष्ठोत्तरनवशतम्[२] शकाब्द (९८४ ई.) इत्यकथयत्। दशम-शताब्दितः न्यायमतस्य प्रभावः वर्द्धिते सति द्वादशशताब्दौ खण्डनकारैः श्रीहर्षमिश्रैः निर्मिते "खण्डनखण्डखाद्ये" नैयायिकमतं निराकृतम्। त्रयोदशशताब्देः प्रारम्भे गङ्गेशोपाध्यायैः खण्डनकारस्य श्रीहर्षमिश्रस्य मतखण्डनद्वारा अद्वैतमत आक्रान्ते सति प्रत्याक्रमणार्थं श्रीचित्सुखाचार्यः दार्शनिकसमरक्षेत्रे उपस्थितोऽभूत्। ते खलु न्यायशास्त्रगतयुक्तिजालमतिक्रम्य अद्वैतवेदान्तस्य विजयवैजयन्तीं सुस्थापितामकुर्वन्।

श्रीचित्सुखाचार्यः स्वीयायां "तत्त्वप्रदीपिकायाम्" न्यायलीलावतीकारस्य वल्लभा-

---

१. अधिकदशोत्तरनवशतकशकाब्दे न्यायकन्दली रचिता।
श्रीपाण्डुदासयाचितभट्टश्रीश्रीधरेणेयम् ॥

२. तर्काम्बराङ्कप्रमितेष्वतीतेषु शकान्ततः।
वर्षेषूदयनश्चक्रे सुबोधां लक्षणावलीम्॥

चार्यस्य मतमुद्धृत्य खण्डितम्।[१] श्रीचित्सुखाचार्यः खण्डनकारस्यापि मतम् समुद्धृतवान्।[२] खण्डनकाराः श्रीहर्षमिश्रपादाः द्वादशशताब्देरन्तभागे आसन्। तस्मात् चित्सुखाचार्यः द्वादशशताब्देरुत्तरवर्ती आसीदिति भाति। विद्यारण्यस्वामिपादाः स्वीयसर्वदर्शनसंग्रहः चतुर्दशशताब्दौ लिखितवन्तः, तत्र (पूणासंस्करणे) पुनः चित्सुखाचार्यस्योल्लेखो दृश्यते, तस्मात् चित्सुखाचार्यः विद्यारण्यस्वामिनः पूर्ववर्ती असीत्। अतएव चित्सुखाचार्यस्य स्थितिकालः त्रयोदशशताब्दी आसीदिति निश्चितरूपेण वक्तुं पार्यते।

**देशः**—स्वामी प्रज्ञानानन्द सरस्वती "वेदान्तदर्शनेर इतिहास" (बंगला) इत्याख्ये ग्रन्थे कथयति यत् चित्सुखाचार्यस्य जन्मस्थानविषये निश्चयरूपेण किमपि वक्तुं न पार्यते इति। तथापि तदीयं जन्म उत्तरभारते एव आसीदिति भाति, यतः आचार्य श्रीहर्षमिश्रः, श्रीमधुसुदनसरस्वत्यादयः ये खलु आचार्याः न्यायमतस्य खण्डनं कृतवन्तः, ते सर्वेप्रायाः औदिच्या एव आसन्। दक्षिणभारते वैष्णवाचार्याणां पूर्वमीमांसाचार्याणाञ्च प्राधान्यात् तत्रस्थाः वैदान्तिकाः तत्तन्मतनिराकरणे एव बद्धपरिकराः। न तु न्यायमतखण्डने परन्तु श्रीयोगेन्द्रनाथतर्कतीर्थमाहाभागैः स्वीयायामद्वैतसिद्धिवङ्गा-नुवादभूमिकायां कथितं यत्—"श्रीचित्सुखाचार्यः अन्तिम जीवनम्" 'काञ्चीकामकोटि' मठाध्यक्षरूपेण अतिवाहितवान् इति। अपि च श्रीचित्सुखाचार्यः तत्त्वप्रदीपिकायाः मङ्गलाचरणस्य प्रारम्भे एव 'सिंहाद्रिचूड़ामणि'[३]रिति कथयित्वा सिंहाचलस्थं नृसिंहदेवं स्तौति। अपि च तत्रैव 'नमस्कुर्मो नृसिंहाय'[४] इति नामोच्चारणपूर्वकं स्तौति। आन्ध्रप्रदेशान्तर्गतविशाखापत्तनसमीपे सिंहाचलः (सिमाचलमिति स्थानीयप्रसिद्धिः) नाम्ना पर्वतो वर्तते। तत्र भगवतः नृसिंहस्य देवालयोऽप्यस्ति। एतदनुसारं केचन विद्वांसः चित्सुखाचार्यं दक्षिणदेशीयं कथयन्ति। अतः एतदवश्यमेव स्वीकर्तव्यं यत् तेषां आन्ध्रप्रदेशस्थसिंहाचलेन सह घनिष्ठसम्पर्क आसीत्।

---

१. तत्त्वप्रदीपिका (नि.सा.सं.), पृ. १३४, १३५, १४४, १७६, १७९, १८१, १८४, १९६, १९७, २०३, २७५, ३२६, ३५१, संख्यकेषु पूटेषु लीलावतीकाराणामुल्लेखोऽस्ति।

२. तथा चाहुः खण्डनकाराः
प्राग्लोपाविनिगम्यत्वप्रमाणापगमैर्भवेत्।
अनवस्थितिमास्थातुरचिकित्सा त्रिदोषता।। तत्त्व प्र., नि.सा.सं., पृ. १७५.

३. स्तम्भाभ्यन्तरगर्भभावनिगदव्याख्याततद्वैभवो,
य: पाञ्चाननपाञ्चजन्यवपुषा व्यादिष्टविश्वात्मतः।
प्रह्लादाभिहितार्थतत्क्षणमिलद्दृष्टप्रमाणं हरिः,
सोऽव्याद्वः शरदिन्दुसुन्दरतनुः सिंहाद्रिचूड़ामणिः।। तत्त्व प्र.- १

४. प्रमाणनखनिर्भिन्नमहामोहामरारये।
नमस्कुर्मो नृसिंहाय स्वप्रकाशचिदात्मने।। तत्त्व प्र.-४.

आचार्याः ज्ञानोत्तमाः चित्सुखाचार्यस्य गुरुवराः आसन्। "तत्त्व-प्रदीपिकायाः" "भावतत्त्वप्रकाशिकायाश्च" मङ्गलाचरणावसरे तैः स्वीयगुरोः परिचयः प्रदत्तः, तथाहि—

"ज्योतिर्यद्दक्षिणामूर्तिव्यासशङ्करशब्दितम् ।
ज्ञानोत्तमाख्यं तद्वन्दे सत्यानन्दपदोदितम्।।"
(तत्त्व प्र.-२)

ज्योतिर्यद्दक्षिणापूर्वं व्यासशङ्करशब्दितम्।
ज्ञानोत्तमाख्यं तद्वन्दे सत्यानन्दपदोदितम्।।
(श्रीभावतत्त्वप्रकाशिका-२)

अपि च तत्त्वप्रदीपिकायाः अन्ते—"इति श्रीगौडेश्वराचार्यपरमहंसपरिव्राजकाचार्यज्ञानोत्तमपूज्यपादशिष्य..." इत्यादिना स्वीयगुरुवरं "गौडेश्वराचार्य"[१] कथितवान्। चित्सुखाचार्यैः तत्त्वप्रदीपिकायाश्चतुर्थपरिच्छेदे "एवं हि न्यायसुधायामाराध्यपादैरुपपादितम्" इति लिखितम्। अस्यैव टीकायां प्रत्यक्स्वरूपाचार्यः "आराध्यपादाः" स्वगुरवः ज्ञानसिद्धिकाराः" इति लिखितवान्। ज्ञायतेऽनेन यत् ज्ञानोत्तमाचार्यः न्यायसुधाज्ञानसिद्ध्यादीन् ग्रन्थान् विरचितवान्। एते ग्रन्थाः इदानीं पर्यन्तं नोपलब्धाः। शास्त्रसिद्धान्तलेशसंग्रहेऽपि ज्ञानसिद्धेरुल्लेखो वर्तते। इष्टसिद्धिनैष्कर्म्यसिद्ध्योर्व्याख्याता ज्ञानोत्तमस्तु भिन्न एव, तदग्रे विचारयिष्यते।

चित्सुखाचार्यैः, शाङ्करसिद्धान्तोपरि आक्रमणं दृष्ट्वा तद्रक्षणाय "तत्त्वप्रदीपिका" विनिर्मिता। अस्या रचनायाः प्रयोजनं ज्ञापयत्यनेन श्लोकेन—

"विप्रतिपत्तिव्रातध्वान्तध्वंसप्रगल्भवाचाला ।
क्रियते चित्सुखमुनिना प्रत्यक्तत्त्वप्रदीपिका विदुषा।।"

खण्डनकारेण श्रीहर्षमिश्रेण खण्डनेऽनिर्वचनीयतावादस्य सुदृढ़रूपेण प्रतिपादितेऽपि तत्र वेदान्तप्रकरणोपयोगिनामखिलविषयाणां विचारो नास्ति। अतस्तादृशविषयाणां निरूपणाय श्रीहर्षमिश्रादुत्तरवर्तिनं नव्यनैयायिकयुक्तिजालमुच्छेत्तुञ्च श्रीचित्सुखाचार्यः तत्त्वप्रदीपिकां प्रणीतवान्।

## विरचितग्रन्थाः

चित्सुखाचार्यविरचिताः मौलिकाः टीकात्मकाश्च ग्रन्थाः पञ्चदशात्मकाः वर्तन्ते। तथाहि—

---

१. वङ्गदेशं समारभ्य भुवनेशान्तगं शिवे।
गौडदेशः समाख्यातः सर्वविद्याविशारदः।। शक्तिसङ्गमतन्त्रम्

१. **नैष्कर्म्यसिद्धिव्याख्या**—श्रीसुरेश्वराचार्यकृतनैष्कर्म्यसिद्ध्युपरि एका 'भावतत्त्वप्रकाशिकाख्या' टीका चित्सुखाचार्यैर्विरचिता। यस्याः प्रकाशनमितः पूर्वं नाभूत्। अतो मया सम्प्रत्यस्मिन् शोधप्रबन्धे अस्याः सम्पादनप्रयासः क्रियते।

२. **न्यायमकरन्दव्याख्या**—चित्सुखाचार्यः तत्त्वप्रदीपिकारचनायाः प्राग्आनन्दबोध भट्टारकप्रणीतन्यायमकरन्दोपरि एकां शोभनां टीकां विरचितवान्। तत्त्वप्रदीपिकायाम् यत्र तत्र न्यायमकरन्दगतवाक्यं तद्व्याख्यागतञ्च वाक्यमुद्धृतम्।

३. **खण्डनखण्डखाद्यव्याख्या**—खण्डनखण्डखाद्योपर्यपि श्रीचित्सुखाचार्यकृता एकोत्कृष्टा व्याख्या वर्तते। वाराणसीतः अस्या किञ्चिदंशः मुद्रितोऽस्ति।

४. **शारीरिकभाष्य-व्याख्या**—ब्रह्मसूत्र-शाङ्करभाष्योपरि 'भावप्रकाशिका' नाम्नी एका संक्षिप्ता व्याख्या एतैः प्रणीता। यस्या किञ्चिदंशः कलिकतातः प्रकाशितः।

५. **शङ्करविजयः**—श्रीचित्सुखाचार्यकृतः एक शङ्करचरित्रग्रन्थोऽप्यासीत्। अस्यांशविशेषो यत्रतत्र लभ्यते।

६. **ब्रह्मसिद्धिव्याख्या**—श्रीचित्सुखाचार्यः आचार्यमण्डनमिश्रविरचितब्रह्मसिद्ध्युपरि एकां "अभिप्रायप्रकाशिकाख्यां" व्याख्यां विरचितवान्।

७. **प्रमाणरत्नमालाव्याख्या**—आनन्दबोध भट्टारकविरचिताया प्रकरणमालायाः व्याख्याऽप्येतेषां लभ्यते।

८. **विवरणव्याख्या**—श्रीप्रकाशात्मयतिविरचितस्य पञ्चपादिकाविवरणस्य "भावद्योतिन्याख्या" व्याख्याऽपि एभिः कृता।

९. **विष्णुपुराणव्याख्या**—श्रीचित्सुखाचार्यः विष्णुपुराणस्यापि व्याख्यां विरचितवान्। यस्योल्लेखं श्रीश्रीधरस्वामी स्वीयायां व्याख्यायां कृतवान्।[1]

१०. **अधिकरणसङ्गतिः**—ब्रह्मसूत्रस्थानामधिकरणानां सङ्गतिविधानात्मकोऽयं संक्षिप्तो निबन्धः। मद्रासतः "जर्नल ऑफ ओरियण्टल रिसर्च" इत्याख्यस्य शोधपत्रस्य पञ्चमखण्डे प्रकाशितोऽभूत्।

११. **अधिकरणमञ्जरी**—मद्रासतः "जर्नल ऑफ ओरियण्टल रिसर्च" इत्याख्यस्य शोधपत्रस्य पञ्चमखण्डे एषाऽपि प्रकाशिता।

१२. **भागवतव्याख्या**—श्रीचित्सुखाचार्यकृता श्रीमद्भागवतव्याख्याऽपि वर्तते इति श्रूयते।

---

१. श्रीमच्चित्सुखयोगिमुख्यरचितव्याख्यां निरीक्ष्य स्फुटम्।
तन्मार्गेण सुबोधसंग्रहवतीमात्मप्रकाशाभिधाम्।
श्रीमद्विष्णुपुराणसारविवृत्तिं कर्त्ता यतिः श्रीधर-
स्वामी सद्गुरुपादपद्ममधुपः साधुः स्वधी शुद्धये।।

१३. **ब्रह्मस्तुति**—एतेषां ब्रह्मस्तुतेरुद्धरणं काशीखण्डे रामानन्दैः कृतम्।
१४. **तत्त्वप्रदीपिका**—एकैवायं ग्रन्थः श्रीचित्सुखाचार्यस्य कीर्तिं विश्वे ख्यापयितुं पर्याप्तो भवति। तत्त्वोपप्लव-खण्डनखण्डखाद्य-न्यायमकरन्दस्य च शैल्या निर्मितोऽयं ग्रन्थः। ग्रन्थोऽयं वादात्मकशास्त्रार्थशैलीमाश्रित्य वस्तुनिरूपणपरः अपूर्वतया अद्वितीयोऽपि वर्तते। ग्रन्थोऽयं चित्सुखीनाम्नैव प्रसिद्धः।

## श्रीचित्सुखाचार्यस्य मतवादः

श्रीचित्सुखाचार्या अद्वैतवादिन आसन्। शाङ्करसिद्धान्तस्य संरक्षणेऽद्वैत-सिद्धान्तस्य प्रकाशे व्युत्पादने च ते नियोजित आसन्। पूर्वपूर्वाचार्याणामिव प्रक्रियादशायां स्थलविशेषे सत्यपि मतविरोधेऽद्वैतसिद्धान्ते मतभेदो नास्त्यन्याचार्यैः सह। जीवब्रह्मणोर-भिन्नता, जगन्मिथ्यात्वमित्यादिविषये सर्वेषामेवाद्वैतवाद्याचार्याणामेकत्वं दृश्यते। साक्षित्वादिविषये पूर्वाचार्यैः सह किञ्चिन्मतविरोधो वर्तते, इति भाति। तथाहि—

### साक्षिस्वरूपविषये मतभेदः

सुखादिधर्म्मी अहङ्कार एव जीवः। अहमर्थजीवात् साक्षी भिन्नः। ननु कोऽयं साक्षी जीवातिरेकेण व्यवह्रियते? आचार्यचित्सुखस्य मते सर्वप्रत्यग्भूतं विशुद्धं ब्रह्मैव जीवाभेदेन साक्षी। व्यावहारिकदृष्ट्या साक्षिरूपेण ब्रह्म जीवात् भिन्नः, परन्तु पारमार्थिकभिन्नता नास्ति। मायासम्वलित-सगुण-परमेश्वरे "केवल-निर्गुणादीनां" विशेषणानामनुपपन्नत्वात् विशुद्ध-ब्रह्मैवात्र जीवेन सह तादात्म्यापन्नभूत्वा साक्षित्वेन प्रतीयते।[१]

विद्यारण्यस्वामिपादाः पञ्चदश्यां "कूटस्थदीपे" साक्षित्वं निरूपितवन्तः। तेषां मते देहद्वयाधिष्ठानभूतं कूटस्थचैतन्यं स्वावच्छेदकदेहद्वयस्य साक्षाद्द्रष्टा, स तु निर्विकार, औदासीन्यञ्च, तस्मात् कूटस्थचैतन्यमेव साक्षी। औदासीन्यं बोधात्मकञ्चेति साक्षित्वस्य लक्षणमिति प्रसिद्धं लोके। कूटस्थचैतन्यमेव सर्वावभासकं भवति। विद्यारण्यस्वामी कूटस्थदीपे जीवभ्रमस्याधिष्ठानभूतं कूटस्थचैतन्यं जीवादेरवभासकत्वेन निरूपितवान्। नाटकदीपे नृत्यशालादृष्टान्तद्वारेण[२] चिदाभासविशिष्टमहङ्कारं जीवरूपेण गृहीत्वा तदवभासकं चैतन्यञ्च साक्षिरूपेण निरूपितवान्।

कौमुदीकारास्तु[३] परंमेश्वरस्यानेकरूपेष्वेव किमपि एकं रूपं यः खलु जीवः

---

१. तत्त्वप्रदीपिका, पृ. ५८९ षड्दर्शनप्रकाशन प्रतिष्ठान, वाराणसी संस्करणे।
२. नृत्यशालास्थितो दीपः प्रभुं सभ्यांश्च नर्तकीम्।
दीपयेदविशेषेण तदभावेऽपि दीप्यते।। पञ्चदशी १०-११.
३. शास्त्रसिद्धान्तलेशसंग्रहः (प्रथम परिच्छेद, पृ. १५३, सिकन्दराबाद संस्करणम्).

प्रवृत्तिनिवृत्त्योर्नैरन्तर्येण बोद्धा स्वयञ्चोदासीनः तम् साक्षिरूपेण स्वीकुर्वन्ति। "एको देव सर्वभूतेषु गूढः" इति च श्रुतेः। साक्षी ईश्वरान्न विलक्षणः। परमेश्वर एव जीवस्य प्रवृत्तिनिवृत्त्योरनुमन्ता। स खलु स्वयमुदासीनः, अतः परमेश्वर एव साक्षी। तत्त्वशुद्धिकारस्य मतेऽपि परमेश्वर एव साक्षी।[१]

एते आचार्याः जीवसाक्षिणोर्भेदपक्षमङ्गीकुर्वन्ति। केचित्तु[२] साक्षिजीवयोरभेदपक्षः स्वीकुर्वन्ति। अविद्योपाधिक जीव एव साक्षी, न तु सर्वगतेनाविद्योपहितेन रूपेण साक्षाद्रष्टेत्यन्ये।[३] यतः साक्षात् द्रष्टा अतः साक्षी। लोकेऽपि दृश्यते अकर्तुरपि द्रष्टुः साक्षित्वम्। उदासीनोऽपि जीवः अन्तःकरणैः सह तादात्म्यात् कर्तृत्वादिकं तत्रारोपितं भवति। 'एको देव' इत्यादिमन्त्रेऽपि जीवभावाभिप्रायेणैव ब्रह्मणः साक्षित्वं प्रतिपादितम्। केचित्तु जीवस्यैव साक्षित्वं स्वीकुर्वन्ति, परन्तु न हि सर्वगताविद्यारूपोपाधिबलेन, अपि तु अन्तःकरणरूप उपाधिबलेनैव।

## दृष्टिसृष्टि-सृष्टिदृष्टिवादयोर्मध्ये मतभेदः

पूर्वपूर्वकल्पितः अविद्योपहितः आत्मैव उत्तरोत्तराविद्यायाः कल्पक इति केचन आचार्याः मन्यन्ते।[४] वस्तुतः अविद्याऽनादिः, तथापि एवं न तत्र दृष्टिसृष्ट्योः तात्पर्यम्।[५] श्रुतिकथितसृष्टेरालम्बनन्तु निष्प्रपञ्चब्रह्मात्मैक्यम्। अध्यारोप-अपवादाभ्यां ब्रह्मप्रतिपत्त्युपायरूपेण श्रुतौ सृष्टिप्रलयानुपन्यस्तौ।

वेदान्तसिद्धान्तमुक्तावलीकाराः श्रीप्रकाशानन्दपादाः दृश्यस्य दृष्टिभेदे प्रमाणभेदमादाय दृष्टिरेव विश्वसृष्टिरिति स्वीकुर्वन्ति।[६]

श्रीचित्सुखाचार्यस्तूक्तोभयविधयोः दृष्टिसृष्टिवादयोर्विरोधी। एते खलु सृष्टिदृष्टिवादिनः। दृष्टिसृष्टिवादे स्वीकृते सति जाग्रत्प्रपञ्चस्यापि प्रातिभासिकसत्तापत्तिः स्यादाकाशादिसृष्टेरपलापश्च। कर्मोपासनयोः फलस्वरूपः सर्वलोकः ब्रह्मलोकादेश्चापलापो भवति। जाग्रद्दशायामिन्द्रियार्थसन्निकर्षजन्यप्रत्यक्षस्य फलत्वेन यत्प्रतीयते, तस्यापि भ्रमत्वापत्तिः स्यादिति असङ्गतः खल्वयं दृष्टिसृष्टिवादः। सृष्टिदृष्टिवादे तु न सन्तीमे दोषाः। प्रपञ्चस्य शुक्तिरजतवत् पारमार्थिकसत्ता नास्ति। प्रपञ्चे कल्पनासमसमयत्वस्याभावोऽस्ति यथा शुक्तिरजतादि-सम्प्रयोग-संस्कार-दोषात्, अधिष्ठानज्ञानसंस्कार-

१. शास्त्रसिद्धान्तलेशसंग्रहः (प्रथम परिच्छेद, पृ. १५५, सिकन्दराबादसंस्करणम्).
२. तदेव, पृ. १५६
३. तदेव, पृ. १५७.
४. तदेव, (द्वितीय परिच्छेद), पृ. २८९.
५. तदेव, पृ. २७०.
६. तदेव, पृ. २७३.

दोषाद्वोत्पद्यते तथा प्रपञ्चे नास्ति। तथाहि—कारणत्रयजातं विन्ना समसमयत्वं न सम्भवति, परन्तु अस्य स्वीकारे सति शुक्तिरजतन्यायेन निश्चयो भवति प्रपञ्चमिथ्यात्वस्य, ज्ञाने च प्रपञ्चस्य भवति निषेधः। प्रपञ्चः सदसद्विलक्षणः ब्रह्मणि चोपाधेरत्यन्ताभावो वर्तते, तस्मात् प्रपञ्चोऽपि मिथ्या। सृष्टिदृष्टिवादस्वीकारे तु प्रपञ्चस्य मिथ्यात्वमपि सुसङ्गच्छते, नापि भवति व्यावहारिकसत्तायारपलापः। ननु यदि ज्ञाननिवर्त्यत्वमेव मिथ्यात्वं स्यात्, तदा अहङ्कारस्य तद्धर्माणामपि मिथ्यात्वं स्यात्, आकाशवत्। अनेन भाष्यटीकादावहङ्कारस्य तदध्यासस्य च कारणत्रयसम्पादनाय प्रयत्नो व्यर्थः स्यादिति चेदाह चित्सुखाचार्यः— ''व्यर्थः, अहङ्कारादेरपि साक्षिवेद्यत्वात् शुक्तिरजत इव प्रतिभासिकः।''[१]

## मिथ्यात्वनिरूपणे मतभेदः

पञ्चपादिकाकारास्तु—''सदसद्विलक्षणत्वं मिथ्यात्वमिति'' मिथ्यात्वलक्षणं कथयन्ति। विवरणकारास्तु ''प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वम् ज्ञाननिवर्त्यत्वमिति'' लक्षणद्वयं निर्दिशन्ति। आनन्दबोधाचार्यास्तु ''सद्भिन्नरूपत्वं मिथ्यात्वमिति'' लक्षणं निरूपयन्ति। चित्सुखाचार्यः नवीनतयैकं लक्षणं निर्दिष्टवान् तद्यथा ''स्वात्यन्ताभावसमानाधिकरणतया प्रतीयमानत्वम्'' (चित्सुखी नि.सा.सं., पृ. ३३) मिथ्यात्वमिति। प्रकाशात्मयतिना प्रपञ्चस्य त्रैकालिकत्वं निषिध्य सर्वस्मिन् काले तस्याभावः निरूपितः। न हि अपरिच्छिन्नेऽखण्डज्ञाने कुत्रापि कदाचित् मिथ्या स्थातुं शक्यते। न च प्रतिभासमात्रस्थायित्वादस्यासत्त्वम्। वस्तुतस्तु तदेव मिथ्या यत्किल ज्ञानस्य कस्मिन्नपि देशे काले वा न तिष्ठति। देशकालापरिच्छिन्नं खलु ज्ञानम्। अतः मिथ्या कस्मिन्नपि देशे काले वा नास्ति। मिथ्यायाः स्वरूपनिर्वचनाय ईदृशो लक्षणस्यावश्यकता वर्तते। मिथ्या सदसद्विलक्षणत्वादनिर्वचनीयः, किन्तु मिथ्यायाः लक्षणान्तराणां कथने सुदृढ़ो भवति मायावादः।

## अविद्यानिवृत्तेः स्वरूपनिर्णयविषये मतभेदाः

ब्रह्मसिद्धिकाराणां मते आत्मैवाविद्यानिवृत्तिः[२] भवति। आनन्दबोधाचार्यस्त्वात्मातिरिक्ता खल्वियमविद्यानिवृत्तिः।[३] सा चाविद्या न सद्रूपा द्वैतव्याघातात्, नापि असद्रूपा, ज्ञानसाध्यत्वस्यायोगात्, न च सदसद्रूपा परस्परविरुद्धस्वभावत्वादेकत्रसमावेशासम्भवात्। नापि सदसद्भिन्नाअनिर्वाच्या यतः अनिर्वाच्यस्य सादितयाऽ-

---

१. शास्त्रसिद्धान्तलेशसंग्रहः (द्वितीय परिच्छेदः), पृ. २७४.

२. तदेव, पृ. ३६६.

३. तदेव, पृ. ३६८.

ज्ञानोपादानकत्वेन। मोक्षदशायां तदुपादानाज्ञानस्यावस्थानापत्तेः, ज्ञानेन निवृत्तिरित्यापत्तेश्च। तस्मात् पञ्चमप्रकार खल्वियमविद्यानिवृत्तिरात्मातिरिक्तेति आनन्दबोधाचार्यस्याभिमतम्। ब्रह्मसिद्धिकाराणां मते आत्मैवाविद्यानिवृत्तिः, न त्वतिरिक्तेति। आनन्दबोधाचार्यस्त्वस्यातिरिक्तत्वमङ्गीकरोतीति भेदः। अविद्यानिवृत्तिरपि अविद्येवानिर्वाच्या। अविद्यानिवृत्त्यनुवृत्तौ तदुपादानस्याप्यनुवृत्तिर्भवतीत्यत्र प्रामाणिकता नास्ति। तस्मादनिर्मोक्षप्रसङ्गोऽपि नास्ति। न हि अविद्यानिवृत्तिरेव स्वतः पुरुषार्थः, तस्मात् ज्ञानसाध्या खल्वियमविद्यानिवृत्तिः। सा पुनः सुखदुःखाभावादपि पृथक्। अविद्यैवाखण्डानन्दस्यावरिका संसारदुःखस्य च हेतुः। अविद्योच्छेदादेव भवत्यखण्डानन्दस्य स्फुरणम् संसारदुःखस्य च नाशः। तदुपयोगित्वादविद्यानिवृत्तिः तत्त्वज्ञानसाध्या इत्यपि वाच्यम्, वस्तुतस्तु तत्त्वज्ञाननाश्या खल्वियमविद्या।

श्रीचित्सुखाचार्यस्य[१] मते दुःखाभावरूपायां मुक्तौ स्वतः पुरुषार्थत्वं नास्ति, दुःखाभावे स्वरूपसुखाभिव्यक्तेः प्रतिबन्धकस्याभावो भवति, सुखमेव परिशिष्यते अतः सुखमेव परमपुरुषार्थः। मुक्तावविद्यानिवृत्तिरिव संसारदुःखनिवृत्तिरपि सुखशेष एव। सुतरामनवच्छिन्नानन्दप्राप्तिरेव स्वतः पुरुषार्थः। आनन्दबोधाचार्योऽविद्यानिवृत्तेः सदसत्-सदसदनिर्वचनीयादिषु मध्ये कमपि प्रकारं नाङ्गीकृत्य तस्याः पञ्चमप्रकारत्वं कथितम्। चित्सुखाचार्यस्तु तन्मतं निराकृत्याकथयत्—

"नापि पञ्चमप्रकारा सदसद्‌विलक्षणतया, तस्या अप्यनिर्वचनीयत्वप्रसङ्गात्, सदसद्विलक्षणमनिर्वचनीयमिति लक्षणाङ्गीकारात्।"[२]

श्रीचित्सुखाचार्यः तत्त्वप्रदीपिकायामविद्यानिवृत्ति"रनिर्वाच्या" इति निरूपितवान्। यथा हि लोके विनष्टायामपि उपलक्षणपाकक्रियायां पाचकादिप्रयोगः यथावत् प्रचलति तथैव ज्ञातत्वोपलक्षित आत्मैवाविद्यानिवृत्तिस्वरूपो भवति।[३] लोकेऽपि सहेतुकस्य रजतविभ्रमस्य निवृत्तिः ज्ञाता शुक्तिरेव। ननु तत्र शुक्तिज्ञानं रजतभ्रमस्य निवर्तकमित्युक्तम्, यतः तत्रापि नेदं रजतमित्यन्योन्याभावज्ञानं रजतनिवर्तकमिति चेन्न, शुक्तिशकलज्ञानं विना धर्मिप्रतियोगिसव्यपेक्षस्यान्योन्याभावस्यैवासम्भवात्। परिज्ञाते तु शुक्तिशकले तेनैव तदुपपत्तावन्यस्य कृतकरस्य वैयर्थ्यात्। शुक्तिज्ञानाद्‌भिन्नं केवलमिदमाकारज्ञानमुक्तमन्योन्याभावस्य जनकं भवितुं नार्हति, यतः तस्य भ्रान्तौ विद्यमानस्य तदविरोधात्। एवमेवात्रापि अनृतजडदुःखानात्मद्वैतविरोधिसत्यज्ञानानन्दानन्ताद्वयलक्षणं

१. शास्त्रसिद्धान्तलेशसंग्रहेः, पृ. ३७३.

२. तत्त्वप्रदीपिका, नि.सा.सं., ३८१ पृष्ठे.

३. निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः।
उपलक्षणनाशेऽपि स्यान्मुक्तिः पाचकादिवत्।।
(तत्त्वप्रदीपिका, नि.सा.सं., ३८२ पृष्ठे)

ब्रह्मैव वेदान्तवाक्यजनितब्रह्मैकाकारान्तःकरणपरिणामदर्पणप्रतिबिम्बितं सविलासाज्ञान-निवृत्तिरित्यभ्युपगन्तुं युक्तम्।''[१]

श्रीचित्सुखाचार्यस्य मते आत्मज्ञानस्फूर्त्तौ सविलासाज्ञानस्य भवति निवृत्तिः। वेदान्तविज्ञानजन्यज्ञानेनान्तःकरणपरिणामरूपेण सविलासाज्ञानस्य निवृत्तिर्भवतीति भावः। उक्तं हि तैः —''तस्मादुत्पन्नात्मविज्ञानस्य ज्ञात आत्मैव सविलासाज्ञाननिवृत्तिरिति स्थितम्।''[२]

## मन्तव्यम्

श्रीचित्सुखाचार्यः वैशेषिकदर्शनस्य सप्तपदार्थान् न्यायदर्शनस्य च षोडशपदार्थान् खण्डयित्वाऽद्वैतसिद्धान्तं संस्थापितवान्। तत्त्वप्रदीपिकायाः द्वितीयपरिच्छेदे न्याय-वैशेषिकयोः पदार्थानां खण्डनं वर्तते। श्रीचित्सुखाचार्यः न्यायलीलावतीकारस्य लक्षणा-न्युद्धृत्य निराकृतवान्। कन्दलीकारः श्रीधराचार्योऽपि न त्यक्तः। तदानीन्तनानां नैयायिकधुरन्धराणां मतानि श्रीचित्सुखाचार्यैर्विध्वस्तानि।

श्रीचित्सुखाचार्यः तत्त्वप्रदीपिकायां मिथ्यात्वनिरूपणप्रसङ्गे दशसंख्यकान् लक्षणान् निरूपितवान्। तत्र तैः सर्वेषां लक्षणानां खण्डनप्रक्रियां दर्शयित्वा पूर्वपक्षः प्रदर्शितः। अथ दृढतरयुक्तिसमन्वितं मिथ्यात्वलक्षणमुक्तं तैः

''सर्वेषामपि भावानामाश्रयत्वेन सम्मते।
प्रतियोगित्वमत्यन्ताभावं प्रति मृषात्मता।।''

अर्थात् वेदान्तमते चिदतिरिक्ताः सर्वे एव पदार्थाः मिथ्याभूताः, स्वाश्रयेऽधिष्ठाने इदं शब्दवाच्यानां सर्वेषां वस्तुनामारोपितत्वात्। अतएवाधिष्ठानेन सर्वमपि दृश्यवस्तु निवर्तते। तथाहि—वस्त्रादीनां भावानां स्वाश्रयत्वेनाभिमतास्तन्त्वादयो ये तन्निष्ठात्यन्ता-भावप्रतियोगितैव तेषां वस्त्रादीनां मिथ्यात्वम्। तेषामन्यत्र सत्तायाः सम्भावनाऽपि नास्ति। यदि तत्रापि तन्न स्यात्तदा गत्यन्तराभावात् मिथ्यात्वमेव पर्यवस्येत्। एवं लक्षणमुक्त्वा प्रमाणमपि तत्रैव[३] कथितं तैः, यतो लक्षणप्रमाणाभ्यां हि भवति वस्तुसिद्धिरिति नियमः।

श्रीचित्सुखाचार्यस्येदं मिथ्यात्वलक्षणमद्वैतसिद्धिकारोऽपि स्वीयेऽद्वैतसिद्धावनुद्य

---

१. तत्त्वप्रदीपिका, नि.सा.सं., ३८२ पृष्ठे

२. तदेव, पृ. ३८३.

३. ''अंशिनः स्वांशगात्यन्ताभावस्य प्रतियोगिनः।
अंशित्वादितरांशीव दिगेषैव गुणादिषु।।
विमतः पट एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी अवयवित्वात् पटान्तरवत्। एवमेतद्गुणकर्म-जात्यादयोऽपि तत्तत्तन्तुनिष्ठात्यन्ताभावप्रतियोगिनः तत्तद्रूपत्वादितरतत्तद्रूपवदित्येवमादि प्रयोगः सर्वत्रैवोहनीयः।'' तत्तवप्रदीपिका, पृ. ३९(नि.सा.सं.)

विचारबलेन सुस्थिरं कृतम्।[१] (अद्वैतसिद्ध्युक्तचतुर्थमिथ्यात्वलक्षणन्तु चित्सुखाचार्यरीत्या वर्तते)।

श्रीचित्सुखाचार्यस्य प्रभाव उत्तराचार्याणामुपरि विस्तृतो भवति। श्रीचित्सुखाचार्यस्याद्वैतसाधनप्रभाववृद्धिमवलोक्य द्वैतवादी मध्वानुयायी व्यासराजस्वामी 'न्यायामृत'-नामध्येयं ग्रन्थं विरच्य अद्वैतमतखण्डने निमग्नोऽभूत्। तत्खण्डनञ्च श्रीमधुसूदन-स्वामिपादैः कृतम्। प्राक्तनोऽप्यद्वैतसिद्धान्तश्चित्सुखाचार्यैर्यादृशः वादग्रन्थं निर्माय प्रसारितो दृढ़ीकृतश्च नान्यैराचार्यैस्तत्काले इति निश्चप्रचम्।

## आचार्यज्ञानोत्तमः

श्रीचित्सुखाचार्यः तत्त्वप्रदीपिकायाः भावतत्त्वप्रकाशिकायाश्च मङ्गलाचरणावसरे "ज्ञानोत्तमाख्यं तद्वन्दे" इति कथयित्वा गुरुवन्दनं कृतवान्। तत्त्वप्रदीपिकायाश्च चतुर्थपरिच्छेदे अविद्याविचारावसरे "एवं हि न्यायसुधायामाराध्यपादैरुपपादितमि"ति कथितं चित्सुखाचार्यैः। तस्यैव व्याख्यायां "प्रत्यक्स्वरूपाचार्यः कथयन्ति यत्— "आराध्यपादाः स्वगुरवः ज्ञानसिद्धिकाराः"। ज्ञायतेऽनेन श्रीज्ञानोत्तमाचार्यः न्यायसुधा-ज्ञानसिद्धिश्चेति ग्रन्थद्वयं विरचितवान्। सिद्धान्तलेशसंग्रहेऽपि ज्ञानसिद्धेरुल्लेखः दृश्यते। केचित्तु एते एव ज्ञानोत्तमाचार्याः नैष्कर्म्यसिद्धेरिष्टसिद्धेश्च टीकाकर्त्तारः इति कथयन्ति। तत्र हेतुं ब्रुवन्ति यत्—

१. "ज्ञानोत्तम"नाम्ना अन्यस्याद्वैताचार्यस्य प्रसिद्धिर्नास्ति।
२. चित्सुखाचार्यकृतनैष्कर्म्यसिद्धिटीकायां ज्ञानोत्तमकृतचन्द्रिकायाः (नैष्कर्म्य-सिद्धिटीकायाः) सामञ्जस्यं दृश्यते। इति।

परन्तु एतावन्मात्रेण चित्सुखाचार्यस्य गुरुः नैष्कर्म्यसिद्धेश्चन्द्रिकाकारश्च एक एवेति कथयितुं न पार्यते। यतः—

१. चित्सुखाचार्यस्य गुरवः ज्ञानोत्तमाचार्याः गौडदेशीयाः आसन्। उक्तं हि चित्सुखाचार्यैः तत्त्वप्रदीपिकायाः समाप्तौ—"इति श्रीगौडेश्वराचार्यपरमहंस-परिव्राजकाचार्यज्ञानोत्तमपूज्यपादशिष्य" इति।

नैष्कर्म्यसिद्धेश्चन्द्रिकाकारस्तु "ज्ञानोत्तमः" चोलदेशीय इति स्वयमेव तैः मङ्गलाचरणावसरे कथितम्।

चोलेषु मङ्गलमिति प्रथितार्थनाम्नि
ग्रामे वसन्पितृगुरोरभिधां दधानः।

---

१. स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वं वा मिथ्यात्वम्। अ. सि., चतुर्थमिथ्यात्वविचारः

ज्ञानोत्तमः सकलदर्शनपारदृश्वा
नैष्कर्म्यसिद्धिविवृतं कुरुते यथावत्।। (नै.सि.च.-५)

२. आचार्यः ज्ञानोत्तमः संन्यासी आसीत्। यतः चित्सुखाचार्यैः तत्त्वप्रदीपिकायाः अन्ते "परमहंसपरिव्राजकाचार्य" इति संन्यास-वाचकशब्दैरभिनन्दितम्।

अपरस्तु गृहस्थ आसीत्, नैष्कर्म्यसिद्धिचन्द्रिकायाः अन्ते "श्रीमहोपाध्याय-ज्ञानोत्तममिश्रविरचितायां"—इति कथितत्वात्।

३. चित्सुखाचार्यकृतनैष्कर्म्यसिद्धिटीकायां यद्वर्त्तते तत्प्रायः ज्ञानोत्तमकृतचन्द्रिकायां दृश्यते। चन्द्रिकायाः वैशिष्ट्यन्तु तत्र नास्ति। यदि चन्द्रिकाकारश्चित्सुखाचार्याद् पूर्वमभविष्यत् तदा चित्सुखाचार्यः तदवाक्यमुदहरिष्यत्। परन्तु विपरीतमेवात्र स्पष्टतया वर्तते।

४. जि.ए. जैकबमहाभागा अपि चन्द्रिकाकारः ज्ञानोत्तममिश्रः चित्सुखाचार्यापेक्षयाऽधिकार्वाचीन इति नैष्कर्म्यसिद्धिभूमिकायां प्रतिपादितवन्तः।[१]

अतएव नैष्कर्म्यसिद्धि-इष्टसिद्ध्यादेष्टीकाकारः ज्ञानोत्तममिश्रः चित्सुखाचार्यस्य गुरोः ज्ञानोत्तमात् भिन्न इति निश्चयेन वक्तुं पार्यते।

## नैष्कर्म्यसिद्धेः सारांशः

### (मोक्षनिरूपणात्मकः प्रथमोऽध्यायः)

ग्रन्थेऽस्मिन् चत्वारोऽध्यायाः सन्ति। तत्र प्रथमाध्यायारम्भे जीवस्य ब्रह्मत्वप्रतिपादनम्, सर्वानर्थमूलस्याज्ञानस्य निवृत्तिरूपं ज्ञानस्य प्रयोजनमपि प्रतिपादितं ग्रन्थकारैः। अथ श्लोकद्वयेन मङ्गलाचरणं कृत्वा श्रुतिसिद्धान्तमवलम्ब्यात्मविचार एव ग्रन्थस्य विषय इति प्रतिपादितम् तैः। ग्रन्थलेखनकारणत्वेन स्वबुद्धि परिशुद्धिमेव प्रदर्शितवानाचार्यः।

अनर्थरूपस्य संसारस्याविद्यैव कारणम्। तन्निवृत्तिरूपायाः मुक्तेः कारणन्तु ब्रह्मविद्यैव, न तु कर्म।

ननु कर्मद्वारैव भवति मुक्तिः न तु ज्ञानेन। काम्यनिषिद्धकर्मणोस्त्यागः, नित्य-नैमित्तिककर्मणोरनुष्ठानमारब्धकर्मणाञ्चोपभोगेन क्षयः, नित्यकर्मानुष्ठानेन प्रत्यवाय-स्पर्शस्याभावोऽपि भवति। श्रुतिस्मृती अपि कर्मणः प्रतिपादनमेव कुरुतः न तु ज्ञानस्य, यतः "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामि"ति कथितवान् आचार्यः जैमिनिः। श्रुतावपि "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समा" यावज्जीवकर्मानुष्ठानं

---

१. भण्डारकर ओरियण्टल रिसर्च इन्स्टीट्यूट, पूना संस्करणे, पृ० xxxv।

प्रदर्शितम्। अथवा ज्ञानकर्मणोः समुच्चय एव मुक्तेः कारणमिति पूर्वपक्षं संस्थाप्य केवलकर्मणा मुक्तिर्भवतीति पक्षं निरस्यति ग्रन्थकारः।

ततः सर्वकर्मप्रवृत्तेर्हेतुनिरूपणमात्मज्ञानेन च सकलसंसारस्य निवृत्तिरूपपक्षस्य दृढ़ीकरणमस्ति। अज्ञानजातकर्म अज्ञानस्य निवृत्तौ हेतुर्न भवति। श्रुतिप्रमाणजन्य-सम्यग्ज्ञानस्य बाधो न भवति, पुरुषार्थसिद्धावपि कर्मणोऽपेक्षा नास्ति। बाधिताऽविद्या विद्यायाः बाधने समर्था न भवति। वर्णाश्रमाभिमानी पुरुष एव वेदकिङ्करो भवति, परन्तु ब्रह्मज्ञः पुरुषः न तथा भवति। अनन्तरं संसारं वर्णयित्वा तन्निवृत्तेरुपायमपि अज्ञानहानमेवेति कथयन्ति आचार्याः।

आरादुपकारकत्वेन कर्मणोऽपि मुक्तिहेतुत्वं वर्तते। पुण्यशीलस्य नित्यकर्मानुष्ठाने भवति प्रवृत्तिः, ततः काम्यकर्मजन्यफलेऽपि भवत्यनिच्छा, ततः भवति वैराग्यस्योत्पत्तिः, ततः प्रत्यगात्मनि भवति जिज्ञासा, ततः कृतार्थतावशात् भवति सर्वकर्मनिवृत्तिः, एवम्परम्परया कर्मापि भवति मुक्तेः कारणम्। उत्पाद्यादिकर्मफलचतुष्टयस्य मध्ये कस्यापि मुक्तेः साक्षात्कारणत्वं नास्ति।

अथ ज्ञानकर्मणोः समुच्चयमपि मुक्तेः कारणमिति पूर्वपक्षस्य खण्डनमस्ति। यत्र ज्ञानकर्मणोः प्रयोज्यप्रयोजकभावस्तत्र तयोः समुच्चयमपि भवति। अत्र तु अद्वैतात्मविज्ञानेन सह कर्मणः समुच्चयः सर्वथैवासम्भवः।

ज्ञानस्य वस्तुतन्त्रत्वाद् ब्रह्मज्ञाने नियोगस्यावसरो नास्ति। न हि वस्तुयाथात्म्यबोधो व्यापारतंत्रो भवति, येन नित्य-नैमित्तिकादिक्रियाभिः तत्त्वज्ञानं स्यात्। कर्मकाण्ड-प्रवर्तकश्रुतीनां बाहुल्येऽपि वेदस्य क्रियापरत्वमेव, न ज्ञानपरत्वमिति वक्तुं न शक्यते, यतः प्रमाणमात्रादपि यथार्थबोधः भवितुमर्हति।

ज्ञानस्य वस्तुतंत्रत्वात् ब्रह्मज्ञाने नियोगस्यावसरो नास्ति। न हि वस्तुयाथात्म्यबोधो व्यापारतंत्रो भवति, येन नित्यनैमित्तिकादिक्रियाभिः तत्त्वज्ञानं स्यात्। कर्मकाण्ड-प्रवर्तकश्रुतीनां बाहुल्येऽपि वेदस्य क्रियापरत्वमेव, न ज्ञानपरत्वमिति वक्तुं न शक्यते, यतः प्रमाणमात्रादपि यथार्थबोधः भवितुमर्हति। तथा च 'परीक्ष्य लोकान्' इत्याद्या आत्मज्ञानविधायिन्याः नैष्कर्म्यप्रवणास्साध्याः श्रुतयो वर्तन्ते एव। "आत्मेत्येवोपासीत" "आत्मा वा अरे द्रष्टव्यः" इत्यत्र विध्यभ्युपगमेऽपि अत्रापूर्वविधिः नास्ति यतोऽत्र नियमविधिः परिसंख्याविधिर्वा भवितुमर्हति। धर्माधर्मादिलक्षणं वाक्यैकगम्यं यत् तत् विधिवाक्यं विना न सिध्यति परन्तु अप्रमेये स्वतःसिद्धे आत्मनि विधिवाक्यं नापेक्षते। विध्यभावेऽपि ज्ञानं प्रत्यक्षरूपं संसारनिवृत्त्यात्मकं फलं जनयति इति तन्त्रोपकारायेति वक्तुं न शक्यते। "आम्नायस्य क्रियार्थत्वा"दिति सूत्रस्य निवेशः जैमिनिना विध्यधिकारे एवं कृतो न तु प्रत्यगात्माधिकारे। अर्थात् वेदस्य यस्मिन्नंशे विधिवाक्यानि वर्तन्ते, तस्मिन्नेकांशे क्रियार्थता वर्तते। अतस्तत्त्वमस्यादिवाक्यानां

क्रियापरत्वं नास्ति। अशेषशरीरप्रत्याख्यातस्य पुरुषस्य कर्मण्यधिकारो नास्ति, तस्य देहादेः व्युत्थितपुरुषस्य प्रवृत्तिम्प्रतिहेत्वाभावात्। आत्मनः कर्तृत्वाभावात् सुखदुःखादि-भिर्योगाभावाच्च प्रवृत्तिर्न सम्भवति। अज्ञानां कृते एव श्रुत्युक्तं यावज्जीवकर्मविधानं, न तु ज्ञानिनःप्रति। वाक्ये पदान्वयार्थं सिद्धवस्तुप्रतिपादकानां वाक्यानामपि सिद्धान्तपक्षे प्रामाण्यं स्वीकरोति। स्वतस्सिद्धार्थस्यावबोधं विना तत्त्वमस्यादिवाक्यानामर्थान्तरता नास्ति। अतएव ज्ञानादेव मुक्तिः न कर्मणेति सिद्धम्।

**इति मोक्षनिरूपणात्मको प्रथमोऽध्यायः।**

# द्वितीयोऽध्यायः

## (आत्मज्ञानप्रतिबन्धापनयनात्मकः द्वितीयोऽध्यायः)

अध्यायेऽस्मिन् तत्त्वमस्यादिवाक्यगतस्य 'त्वं' पदार्थस्य निर्णयो वर्तते। ऐकात्म्यज्ञानस्य प्रतिबन्धकापनयनाय द्वितीयोऽध्याय आरब्धः। प्राक् शरीरेन्द्रिय-मनोबुद्ध्यादेरनात्मत्वं दर्शयति। वैराग्यं विना संसारान्निविवृत्सा न भवति। संसारतृष्णा-राहित्यं विना गुरुपादोपसर्पणमपि न भवति। गुरुसान्निध्यरहितस्य तत्त्वमस्यादिवाक्य-जन्यज्ञानं न भवति। शरीरादावात्मबुद्धिसत्त्वे तत्त्वमस्यादिवाक्यानां यथार्थबोधः सम्यग्रूपेण न भवति। अज्ञानविरहं विना परपुरुषार्थलाभोऽपि न भवति। शरीरादेरात्मत्वं नास्ति, इन्द्रियादेरपि आत्मत्वं नास्ति, एवं प्रकारेण स्थूलसूक्ष्मशरीरादावात्मबुद्धेर्विनाशे सति प्रत्यगात्मन्यवस्थितिर्भवति। इत्थं स्थूलदेहादात्मनः विवेकनिरूपणं वर्तते। रिपौ बन्धौ स्वशरीरस्थावयवेषु च ऐकात्म्यदर्शिनः रागद्वेषौ न स्तः। देहादेः घटादिवद् दृश्यत्वादात्मनश्च द्रष्टृत्वादात्मा न देहः। अहंता-ममता, इच्छा-प्रयत्नादयो नात्मधर्मः देहस्य कृशतेव दृश्यत्वात् वस्त्रादिवत् विनाशित्वाच्च। नापि एकस्यैव वस्तुनः एकदैव द्रष्टृत्वं दृश्यत्वं, ग्राह्यत्वं-ग्राहकत्वम् वा सिद्ध्यति। देहादेः मिथ्यात्वं प्रतिपाद्यात्मातिरिक्तस्य सर्वस्य प्रपञ्चस्य विनाशित्वं संसाधितम् तैः। तस्मादहं बुद्धिः देहादौ विनिवर्तते। एवम्प्रकारेण युक्त्या मिथ्यात्वं सिद्धम्। तथा च अनात्मवस्तु मोहमूलं सुदुर्बोधं द्वैतमात्मनः पृथगिति बोध्यम्। सद्रूपस्य ज्ञानस्वभावस्यात्मनः सत्ताया अतिरिक्तसत्ताभावात् अहंकारादेः द्वैतवस्तुनः पृथक्सत्ता नास्ति, तस्मादहंकारादय आत्मनि कल्पिताः सन्ति।

दृश्याः शब्दादयः कल्पिताः भवन्ति। निर्गुणब्रह्मैव सर्वेषां द्रष्टा (साक्षी) भवति। अहमित्यत्र तूभयमप्यस्ति दृश्यांशोऽपि चैतन्योऽपि। तथा चाहमित्यस्य भ्रान्तित्वमज्ञानमेव सर्वभूतस्य एकस्मिन्नात्मनि बहुत्वबुद्धिं प्रति हेतुः। आभासः कदापि परमार्थत्वं न स्पृशति, तस्य मोहमात्रोपादानत्वात्। परमार्थतः आत्मा अविद्या-

तत्कार्येण वा क्वचित्, कदाचित्, किञ्चिदपि न सम्बध्यते। अतोऽहङ्कार एव संसारात्मनोः सम्बन्धरूपभ्रमस्य कारणम्।

नन्वन्वयव्यतिरेकाभ्यामहङ्कारस्यानात्मत्वप्रतिपत्तौ सत्यां अहं ब्रह्मास्मीति ब्रह्माहंपदार्थयोः सामानाधिकरण्यवशात् ब्रह्मणा सह अनात्मनोऽहंकारस्य विरोधो भवति, इति पूर्वपक्षस्य परिहारायाहं शब्दस्य मुख्यलक्षणागुणवृत्तीनां निर्णयस्तैः कृतः।

ततः सांख्यप्रक्रियामवलम्ब्य बुद्धेः परिणामित्वं प्रतिपादयन्त्याचार्याः। साक्षीस्वरूपस्यात्मनः कर्तृत्वादेः सदृष्टान्तः निषेधो वर्तते। यथा घटस्योत्पत्तिस्थितिभङ्गेषु घटाकाशस्योत्पत्तिस्थितिनाशाः न भवन्ति तथैव बुद्धेरुत्पत्तिस्थितिनाशेष्वात्मनोऽपि उत्पत्तिस्थितिनाशाः न भवन्ति। स्मृतिस्वप्नप्रबोधेषु काऽपि वृत्तिः चैतन्येन नाव्याप्ता भवति, तस्मात्स्वयमात्मा सर्वदैवाविकारी भवति। आत्मनः परिणामाभावात् जायते, अस्तीत्यादिषड्भावविकारा अप्यात्मनि न सन्तीति सिद्धम्।

अथ श्रौतसिद्धान्तमवलम्ब्य बुद्धेः परिणामित्वमात्मनश्च कूटस्थता युक्तिभिः प्रतिपाद्येते। परिणामित्वाद्बुद्धिः सावशेषपरिच्छेदिनीरूपेण स्थिततत्वात् सा सर्ववित् भवितुं नार्हति, यः खलु चण्डालस्य बुद्धेर्द्रष्टा, स एव चतुर्मुखस्य ब्रह्मणोऽपि बुद्धेर्द्रष्टा भवति। उभयत्र एकमेव ज्योतिः भास्यभेदादनेकवत् प्रतीयते।

द्रष्टा दृश्यं दर्शनात्मकञ्च जगत् अनात्मत्वात् त्यागयोग्येऽपीदमात्मव्यतिरिक्ते प्रकृतिरूपपदार्थे आश्रितं भवितुं नार्हति, किन्तु आत्माश्रिते आत्मविषयकेऽज्ञाने दृश्यादयः आश्रिताः भवन्ति। यत एवं प्रमाण–प्रमेयादिव्यवहाराः आत्मविषयकेऽज्ञाने एवाश्रिताः भवन्ति, अत आत्मनोऽप्रमेयत्वमपि सिद्ध्यति। आत्मा अप्रमेयत्वात्स्वतःसिद्धः अनात्मा प्रमेयत्वात् परतःसिद्धः उभयोर्मध्ये लौकिकरज्जुसर्पाध्यारोप ईवेतरेतराध्यासो भवति। भ्रमादभ्रगमनेन यथा चन्द्रस्य गतिः प्रतीयते, एवमेव बुद्धिगतसुखादि आत्मधर्मत्वेन प्रतीयते। यथा च मूढोऽग्निगतं दाहकत्वमयस्यारोपयति तथैवात्मगतचैतन्यमपि बुद्धावारोपयति। विचित्रदुःखराशिरूपस्य संसारस्य मूलं यदनाद्यज्ञानं तस्य बाधस्तु तत्त्वदर्शनादेव भवति। यथा रज्जुदर्शनेन सर्पभ्रान्तिः दूरीभूता भवति, एवमेव तत्त्वदर्शनेन अज्ञानस्य बाधो भवति।

द्रष्टृदर्शनदृश्यादिकं स्वीयसत्तां स्वतः न विदन्ति। अत एते स्वातिरिक्तेनात्मना वेद्या भवन्ति। आत्मा कारकक्रियाफलविभागसाक्षित्वात् सस्सर्वकारकक्रियाफलविभागात्मकसंसारशून्यो भवति। जगत उत्पत्तिस्थितिविनाशेषु यः निर्विकारोऽवगतिरूपेण तिष्ठति, स एवात्मस्वरूपत्वेन ज्ञेयः। न हि प्रमातादिनश्वरवस्तुनः आत्मत्वमस्ति। नित्यबोधस्वरूपत्वादात्मा कर्तृत्वादिमान् भवितुं नार्हति ''अस्थूलं'' ''नेति नेति'' इति च श्रुतेः। स्वतःसिद्धामविक्रियाम् नित्यां संविदामाश्रित्यैव बुद्धिवृत्तेः सिद्धिर्भवति, बुद्धिवृत्तिमाश्रित्य पुनः घटादेः सिद्धिर्भवति।

**इति आत्मज्ञानप्रतिबन्धापनयनात्मकः द्वितीयाध्यायस्याशयः।**

# तृतीयोऽध्यायः
## (महावाक्यव्याख्यानात्मको तृतीयोऽध्यायः)

अध्यायेऽस्मिन् महावाक्यस्य व्याख्यानं सम्यग्रूपेण वर्तते। तदर्थमात्मा-अनात्मनोः विवेकोऽपि सुष्ठुतया प्रतिपादितोऽस्ति। अनात्माऽज्ञानस्याश्रयः विषयोऽपि भवितुं नार्हति, अज्ञानस्वरूपत्वादनात्मनः। अतएव अनात्मनोऽज्ञानेन सहाभिसम्बन्धोऽपि नास्ति। न हि अज्ञानस्याप्यज्ञानं स्वतः सम्भवति। चैतन्यमात्रस्वभावात् आत्मनोऽज्ञानस्वरूपत्वं नास्ति, तस्मादात्माऽज्ञानस्याश्रयो भवति। अपि चात्मा कूटस्थत्वात् नाज्ञानस्य कार्यम्, अपि तु आश्रय इवात्मैवाज्ञानस्यापि विषयो भवति। तत्त्वमस्यादिवाक्यजन्याहं ब्रह्मास्मीति बोधादेव भवत्यज्ञानस्य निवृत्तिः। अनेनैव भवति मुक्तिः। प्रकरणोक्तेनाद्वितीयेन ब्रह्मणा सह प्रत्यगात्मप्रतिपादकस्य 'त्वं' पदस्य नियम्यनियामकभावविद्यमानत्वात् दुःखीत्वानात्मनत्वं क्रमशः निषेधति। तत्त्वमसीतिवाक्ये पदद्वयस्य सामानाधिकरण्यं पदार्थद्वयस्य विशेषणविशेष्यता अपि च वाच्यपदार्थद्वयेन सह वाक्यतात्पर्यविषयस्य प्रत्यगात्मनः लक्ष्यलक्षणसम्बन्धो वर्तते। वाक्यार्थसाधनात्मिका या प्रवृत्तिः सा विधिप्रयुक्ता भवति। सांख्यशास्त्रोक्तं आत्मानात्मनोर्विभागात्मकं भेदज्ञानं तत्त्वमस्यादिवाक्यतात्पर्यविषये साक्षिणी अश्रुतत्वात् भ्रमात्मकमविद्याकार्यं भवति।

अनाद्यनिर्वचनीयं भावरूपमज्ञानं स्वतःसिद्धं भवति, प्रमाणनिवर्तनीयवस्तुनः प्रमाणेनोपपन्नासम्भवात्। घटाकाशमहाकाशयोरिव तत्त्वमस्यादिवाक्यानामखण्डार्थो भवति। आत्मनः स्वाभाविकं कूटस्थबोधप्रत्यक्त्वमेव बुद्धेः बोद्धृताया अहङ्कारस्य च कारणम्। तस्मात् बुद्धिगतबोद्धृताऽहंताभ्यामेव आत्मा लक्षितो भवति। परन्तु आत्मनः बोद्धृता कूटस्थरूपा, तस्य प्रत्यक्ता तु सर्वविशेषव्यावृता कस्यामपि अवस्थायामात्मनः बोद्धृत्वप्रत्यक्त्वयोर्भेदो न भवति। बुद्धेरनित्यत्वात् कूटस्थबोधप्रसादादेव बुद्धेर्बोद्धृत्वं भवति। ततः परिणामिनोऽहङ्कारस्य कूटस्थस्य चात्मनः लक्षणं निरूप्यात्मनो बुद्धेश्च बोधप्रत्यगात्मत्वरूपसाधारणलक्षणमकरोत्। कूटस्थस्यात्मनः परिणामिनो बुद्धेश्च यः सम्बन्धः तत्किलाज्ञानादेव भवति, न यथार्थतया, अतः बुद्धितद्वृत्तीनामभावः सद्भावश्च प्रत्यगात्मनैव सम्भवति। एवमन्वयव्यतिरेकसहकृततत्त्वमस्यादिवाक्यजन्यज्ञानमेवाज्ञाननिवर्तकं भवति, न त्वन्वयव्यतिरेकमात्रेण भवत्यज्ञानस्य निवृत्तिः। "तत्-त्वम्" पदयोरपि वाच्यार्थोऽत्र न ग्राह्यः। 'तत्-त्वम्'पदयोर्विशेष्यविशेषणभावस्वीकारेऽपि विरोधात् प्रत्यगात्मनो लक्ष्यलक्षणसम्बन्धः भवति। सर्पस्य बाधात् यथा रज्वोः प्रतीतिर्भवति, तथैवाहङ्कारस्य बाधात् वाक्यार्थस्यापि प्रतीतिर्भवति।

अनुमानेन बुद्ध्यादेरनात्मत्वे सिद्धेऽपि अज्ञानस्य निवृत्तिर्न भवतीति तत्त्वम-

स्यादिवाक्यं समाश्रयेत्। बौद्धादयः श्रुतिवाक्यमनादृत्य कपोलकल्पितसिद्धान्तेनानात्मत्वमेव प्राप्नुवन्ति। श्रुतेः प्रमाणान्तरैरज्ञातस्य वस्तुनः प्रतिपादकत्वात्, अपि च तत्र (श्रुतौ) विपरीतप्रतिपादनस्य संशयितप्रतिपादनस्याप्रतिपादनस्य वाभावात् तस्याः (श्रुतेः) प्रामाण्यविषये संशयस्य लेशाभासोऽपि नास्ति। वेदान्तोक्तसृष्टिस्थितिप्रलयात्मकोऽर्थवादसूचिततर्क एव वाक्यार्थप्रतिपत्तेः हेतुः। विषयेऽस्मिन् श्रुतिवाक्यानामुदाहरणमपि वर्तते आकरे।

अहङ्कारवृत्त्यैवाहं ब्रह्मास्मीति बोधोदयात् तत्स्वरूपबाधमाध्यमेनाहङ्कारः वाक्यार्थप्रतिपत्तौ कारणं भवति। तत्त्वमस्यादिवाक्यैः सह प्रत्यक्षादेः विरोधो नास्ति, शुद्धाशुद्धात्मविषयकत्वेन भिन्नविषयत्वात्। विशुद्धात्मनः प्रत्यक्षादिप्रमाणैरनधिगम्यत्वात् तत्त्वमस्यादिनामेव आत्मनि प्रामाण्यं सामर्थ्यञ्च वर्तते। तस्मात् देहादारभ्य प्राणपर्यन्तं सर्वमन्वयव्यतिरेकाभ्यां निरासं कुर्वते पुरुषाय कोऽस्मीति तदीय जिज्ञासोदये सति तत्त्वमस्यादिवाक्यात्मिका श्रुतिः तत्त्वज्ञानं प्रददाति।

देहेन्द्रियादिवत् दृश्यत्वात् अहङ्कारोऽप्यनात्मा। अस्तित्वनिष्ठत्वादितिहेतुना अनुमानेन साक्षादात्मप्रतीतिर्न भवति। अस्ति कश्चिदात्मा धर्मिसद्भावमात्रनिष्ठत्वादिति लिङ्गमपि न सदसदादिविकल्पशून्यअसाधारणात्मस्वरूपबोधकमिति तादृश्य आत्मप्रतिपत्तिः वाक्यादेव साक्षात् भवति। अतः सदसदादिविकल्परहित आत्मा तत्त्वमस्यादिवाक्यादेव प्रतीयते। यथा बाह्यवृत्तिं विनाऽहङ्कारस्याभिव्यक्तिर्नास्ति, तथैवाभिव्यञ्जकस्यान्तःकरणस्याभावात् सुषुप्तावज्ञानस्यापि स्पष्टानुभवो नास्ति। परस्पर तादात्म्याध्यासाद्वह्निकाष्ठयोरेकत्रैव दाह्यदाहकता यथा भवति, एवमेवाहङ्कारात्मनोस्तादात्म्यादेकत्रैव परस्परं ज्ञेयज्ञातृकत्वं भवति। ज्ञातोपक्रियमाणेऽपक्रियमाणे वा सति विषयेषु ज्ञातुर्ममत्वबोधः भवति, अन्यथा इदन्त्वेनैव ज्ञानं भवति। अन्वयव्यतिरेकाभ्यां श्रुतिवाक्यद्वारा चोत्पन्नेन ज्ञानादिनाऽत्मानात्मनोः विवेको ज्ञातो भवति। परन्त्वज्ञानस्य निरासः तत्त्वमस्यादिवाक्यादेव भवति। विषयेऽस्मिन् "दशमस्त्वमसि" इतिवाक्यस्योदाहरणं वर्तते। तदनन्तरं स्थाणु-पुरुष-दृष्टान्तेन भ्रान्तिप्रसिद्धार्थस्यानुवादद्वारा तत्त्वमस्यादिवाक्यानामुपदेशप्रकारोऽस्ति। 'तत्' शब्दस्य 'त्वं' शब्दस्य च वाच्यार्थरूपविरोध्यंशपरित्यागपूर्वकाविरोध्यंश एव ग्रहणीयः। एवमेव पदद्वयस्य लक्ष्यार्थः द्वित्वपारोक्ष्यवर्ज्जितोऽखण्डैकरस आत्मा सिद्ध्यति।

तत्त्वंपदयोर्मध्ये 'त्वं' पदार्थस्याहङ्कारांशः 'तत्' पदार्थस्य च परोक्षतांशः हेयो भवति। तच्छब्दार्थः त्वमर्थेन सह सम्बन्धे सति त्वं-पदार्थगतं नानात्वं विनिवर्तयेत्, अपि च त्वं-पदार्थस्य सान्निध्यात् "तत्" पदार्थस्य परोक्षता परित्यक्ता भवति। तत्त्वमर्थयोरैक्यमेव पुरुषार्थः। अतएव तयोः स्वलक्षार्थमपरित्यज्य विरुद्धांशयोरेव भवति बाधः।

अथ प्रसंख्यानवादस्य निराकरणं वर्तते। "प्रसंख्यानं नाम तत्त्वमस्यादि-शब्दार्थान्वयव्यतिरेकयुक्तिविषयबुद्ध्याम्रेडनमभिधीयते"।[१] तत्त्वमस्यादिवाक्यानां वस्तुनिष्ठत्वात् तत्र योषाग्निवत् दृष्टिविध्यर्थता कल्पिता नास्ति। प्रमाणानां भिन्नविषयकत्वात् परस्परयोर्मध्ये विरोधो नास्ति। वस्तुतः दुःखित्वादय आत्मनि न सन्ति दुःखित्वादिकं वास्तवं चेत् (प्रसंख्यानादिना) नैव बाध्यं स्यात्। प्रत्यक्षविरुद्धं प्रसंख्यानं प्रमाणं नैव स्यात्, तस्य च भावनारूपत्वात् नैकान्तिकफलदातृत्वमपि भवति। स्वल्पाभ्यासजा भावना कल्पकोट्युपबृंहितस्य दुःखस्य ध्वंसाय समर्था न भवति। भावनाजन्यफलं कर्मणः फलञ्चानित्यमेव भवति। तत्त्वमस्यादिवाक्योत्थप्रत्ययबलेनात्मनः निर्दुःखत्वसिद्धत्वात् प्रत्यक्षादेर्विषयेऽस्मिन् प्रामाण्यं नास्ति, प्रत्यक्षादीनां बहिर्मुखताऽपि श्रुतिसिद्धत्वात्। आत्मनः दुःखित्वादिकं गौणं भवति, षष्ठीगुणक्रियाजातिरूढयः आत्मन्यभावात्, तस्मादात्मा कस्यापि शब्दस्य वाच्यः भवितुं नार्हति। यथा प्रायशः शयानाः स्वनामभिः बोध्यमानाः सहसैव प्रबुध्यन्ते लोके तथैव तत्त्वमस्यादिभिर्वाक्यैः अविद्यानिद्रातः प्रत्यगत्मनि प्रबुध्यन्ते।

ज्ञानाज्ञाने आत्मानं न स्पृशतः, परन्तु ज्ञानेनाऽज्ञानस्य ध्वंसो भवति। आत्मनः स्वप्रकाशत्वात् तत्राप्रबोधः स्थातुं न शक्नोति।

अविद्या कमपि प्रमाणमनपेक्ष परमार्थवत् तिष्ठति। क्रियाकारकवर्ज्जिते आत्मनि अविद्यायाः सम्भावनापि नास्ति। दुर्विवेकयाऽविद्यानिद्रया प्रसुप्तः पुरुषः भावाभाव-व्युदासिन्या श्रुत्यैव प्रतिबोध्यते। तस्मात् तत्त्वमस्यादि-वाक्यमनादृत्य प्रसंख्यानादिद्वारा आत्मतत्त्वावगतिश्चक्षुषा रसग्रहणमिवासम्भवः भवति। तत्त्वमस्यादिवाक्यादधिकारिणः प्रमातुरर्थबोधो भवति, अतस्तत्र विधिपरत्वं न कल्प्यम्, तत्त्वमस्यादेः विधिपरत्वा-भावाच्च। अनात्मनः नामादेः निराकृत्य योऽहं ब्रह्मेति बोधवान् भवति, तस्योपासनायाः अवसर एव नास्ति। श्रुतवाक्यात् प्रमोत्पत्तिः न स्याच्चेत् श्रुतेः प्रयोजनीयताऽपि न भवति। युक्तिशब्दौ प्रसंख्यानानुष्ठानात् पूर्वं प्रमोत्पत्तिं नाकुरुताम् चेदनन्तरमपि कथं करिष्यतः। श्रुतप्रसंख्यानः श्रवणादिकाले प्रयोक्तव्यः, न तु तत्साध्यज्ञाने। अपि च त्वंपदार्थबोधाय श्रवणादिविधिरपि स्वीकृतो भवति, अतः तदङ्गरूपसर्वकर्मसंन्यासस्य विधानात् परमहंसीयाचरणोऽपि शास्त्रीय एवेति सिद्धम्।

## इति महावाक्यव्याख्यानात्मको तृतीयोऽध्यायः।

---

१. नैष्कर्म्यसिद्धि, ३.९० श्लोकावतरणिका।

# चतुर्थोऽध्यायः

## (प्रकरणार्थसंक्षेपनिरूपणात्मको चतुर्थोऽध्यायः)

चतुर्थाध्याये आत्माऽनात्मनोः विवेको सम्यग्रूपेण प्रतिपादितो विद्यते। लोके प्रत्यक्षादिप्रमाणैरात्माऽनात्मनोः सिद्धिर्भवति। अपि चानात्मनः सिद्धिरात्मपूर्विकैव भवति। शरीरातिरिक्तस्य बाह्यवस्तुनरनात्मत्वं तु स्वतस्सिद्धं भवति। शरीरेन्द्रियादेरनात्मत्वे तु संशयः सत्त्वात् तत्र तेषामनात्मत्वमनुमानतः सिद्ध्यति। तत्र देहेन्द्रियादयोऽनात्मा दृश्यत्वाज्जडत्वात्, आत्मा हि सत्यः अदृश्यत्वात् "यत्तदद्रेश्य"मितिश्रुतेः। अहङ्कार-गतेदमंशस्य निराकृते सति शेषांशः तत्त्वमसिवाक्यात् प्रत्यक्स्थो भवति। श्रुतिप्रति-पाद्यात्मतत्त्वविज्ञानादेव भवति स्वरूपावबोधः। बुद्धिगतोऽयं विवेकः कदलीफलं स्वजनकं वृक्षमिव बुद्धिमपि नाशयति। केवलं अनुमानद्वारैवात्मतत्त्वसाक्षात्कारो न भवति। श्रुत्युक्तमहावाक्यजन्यबोधादेव भवति आत्मसाक्षात्कारः। उक्तं हि श्रुतौ— "यच्चक्षुषा न पश्यति"[१] "न दृष्टेर्द्रष्टारं पश्ये"[२] इत्यादिः। देहादिबुद्धिपर्यन्तं पदार्थ-मनात्मत्वेन ज्ञात्वा तद् विरक्तमेव पुरुषं श्रुतिः "तत्त्वमसी"ति उपदिशति। स्वमतस्याचार्य-परम्पराप्रयुक्तत्वं प्रतिपादनाय श्रीमच्छङ्कराचार्यकृतोपदेशसाहस्र्या उदाहरणमवतारयति ग्रन्थकारः "किं परमात्मन" इत्यत आरभ्य "नेक्षते दशमं यथा" इत्यन्तेन ग्रन्थेन।[३] स्वप्नद्रष्टा स्वाप्निकनिमित्तवशतः स्वप्ने करणादिकमनुभूय प्रबोधिते सति यथा स्वप्नगतं करणं कर्मकर्त्तारं नैवेक्षते, एवमेवानात्मज्ञः अज्ञाननिद्रां परिहाय श्रुत्यावबोधितः सन् आत्मनोऽन्यं गुरुं शास्त्रं शिष्यञ्च नैव पश्यति। दण्डज्ञानेन दण्डसर्पो यथा दण्डावसाननिष्ठो भवति, तथैव महावाक्यजन्यप्रत्यगात्मज्ञानेन जगत् प्रत्यगात्मनिष्ठं भवति, अर्थात् प्रत्यगात्मसत्तातिरिक्ततया सत्तावन्न भवति। सुषुप्तौ द्वैतग्रहणमात्र-स्याभावात् द्वैतस्याभाव इति कथयति श्रुतिः किन्तु तत्राज्ञानस्याभावात् द्वैतग्रहणस्याभावेति न कथयति। तस्मात् सुषुप्तावज्ञानस्याभावो नास्ति। विषयेऽस्मिन् गौडपादाचार्येण भाष्यकारेण चोक्तमुदाहरणं प्रदर्शितम्। ततः अज्ञानस्यानात्मधर्मत्वमिति मतस्य निरासो वर्तते। सर्वोऽपि द्वैतसम्बन्धः चित्तस्यैव भवति, न त्वविकारिण आत्मनः, सुषुप्ति-रूपदृष्टान्तेन प्रतिपादयत्येतत्।

अवस्थात्रयेऽपि अविकारित्वात् ज्ञानमूर्तिरात्माऽद्वितीय एव, अथ ज्ञानिनो ममत्वाहंत्वाभावः, ज्ञानाज्ञानावस्थयोर्वैलक्षण्यञ्च विदुषो व्यवहारश्च वर्तते। इदमेव सर्ववेदान्तोक्तं परमार्थात्मनिष्ठं ज्ञानमज्ञानापनोदकम् विद्याविद्याविभागः विद्वदविद्व-

---

१. के.उ., १.७.    २. बृ.उ., ३.४.२.

३. उपदेशसाहस्र्याः तत्त्वमसिप्रकरणादुदाहृतानि खलु भाष्यकारवचनानि। (उप.सा., १८.७६, ७७.१७४, १७५.)

द्विभागश्चात्मन्येव विकल्पेन वर्तते।

आत्मज्ञानात् प्राग् बाह्यवस्तुविषयकं ज्ञानम्, ज्ञानोदयानन्तरन्तु आत्मैकविषयं भवति। सम्यगात्मतत्त्वबोधात् प्रवृत्तिवन्निवृत्तिरपि विनशति। ज्ञानोत्पत्तेर्देशकालाश्रितत्वात् आत्मनश्च तत्संस्पृष्टाभावात् वस्तुतः आत्मनो ज्ञानाज्ञाने न स्तः। ज्ञानाग्निना ज्ञानस्य तत्कार्यस्य च नाशिततत्वात् ज्ञानिनो किमपि कार्यं नास्ति।

निवृत्तिसर्पज्ञानस्य पुरुषस्य किञ्चित्कालपर्यन्तं कम्पं यथा न मुञ्चति। एवमेव वाधितानुवृत्त्या मिथ्याज्ञानकृतं कर्तृत्वं फलोपभोगं विना नैव मुञ्चति। तस्य निवृत्तिस्तूपचारत एव भवति। अथालेपकपक्षस्य निराकरणमस्ति।

वेदान्तशास्त्रस्याधिकारिनिरूपणविषये तु तैः कथितम्—अमानित्वादिकं द्वेषशून्यतादिकञ्च विद्योदयम्प्रति साधनम्। संसाराद्विरक्ताः संयमिनः सर्वकर्मपरित्यागिनः प्रत्यक्प्रवणबुद्धयः निष्कामाः शान्ता यतयः एवास्य ग्रन्थस्याधिकारिणः। अथ स्वगुरुं प्रणम्य ग्रन्थस्य प्रयोजनादिकञ्च सामान्यतयोक्त्वा ग्रन्थसमाप्तिं कृतवान्।

नैष्कर्म्यसिद्धौ भगवतो भाष्यकारस्यैव मतवादः श्रुतियुक्तिभ्यां प्रपञ्चितः समर्थितश्च। अतएव प्रमेयबहुलात्मकोऽयं ग्रन्थः। तत्त्वमसिमहावाक्यस्य विचार एवास्य ग्रन्थस्य वैशिष्ट्यम्। ग्रन्थगतभावस्तु गम्भीरः ग्रन्थकारस्यापि लोकोत्तरमनीषायाः द्योतको वर्तते। आत्मानात्मनोर्विचारावसरे श्रीसुरेश्वराचार्यः आत्याश्चर्यवद् बुद्धिमतां प्रकाशितवान्। अद्वैतवेदान्तशास्त्रेऽयमेकः प्रामाणिकः ग्रन्थः।

**इति प्रकरणार्थसंक्षेपनिरूपणात्मको चतुर्थोऽध्यायः।**

**इति नैष्कर्म्यसिद्धेराशयः।**

## भावतत्त्वप्रकाशिकायाः वैशिष्ट्यनिरूपणम्

नैष्कर्म्यसिद्ध्युपरि श्रीचित्सुखाचार्यः "भावतत्त्वप्रकाशिका" नाम्नीमेकां टीकां विरचितवान्। इयमेव सर्वापेक्षया नैष्कर्म्यसिद्धेः प्राचीना टीकेति भाति। तथाहि— ज्ञानोत्तममिश्रकृतायां चन्द्रिकायां "भावतत्त्वप्रकाशिकायाः वाक्यानि प्रायशः वर्तन्ते। चन्द्रिकायाः वाक्यानि तु अत्र नैव सन्ति। केचिद्वदन्ति[१] यत् ज्ञानोत्तमस्यानुकरणमेव चित्सुखाचार्यैः कृतम्। तदयुक्तम्, श्रीचित्सुखाचार्यः स्वीयतत्त्वप्रदीपिकादिद्वारैव प्रसिद्धत्वात् प्रसिद्ध्यर्थमन्यस्य पुनरनुकरणमयुक्तम्। अपि च ज्ञानोत्तममिश्रः श्रीचित्सुखा-चार्यापेक्षयाऽर्वाचीनः इति भाति। श्रीचित्सुखाचार्यः त्रयोदशशताब्दावासीत्। ज्ञानोत्तम-मिश्रस्य कालस्ययद्यपि सम्यग्रूपेण निर्णयः नास्ति(मया न दृष्टः) तथापि षोडश-शताब्देरनन्तरमेवागतः स इति भाति। यतः बृटिशशासनात्पूर्वं "महामहोपाध्याय".

१. जि. ए. जैकवादयः। पूण्यपत्तनतः प्रकाशितस्यसचन्द्रिकानैष्कर्म्यसिद्धेः भूमिका - XXX।

इत्युपाधेः प्रचलनं नासीत्। ज्ञानोत्तममिश्रः महामहोपाध्यायोपाधिविभूषित आसीदिति चन्द्रिकाख्यायाः टीकायाः अन्तेलिखितमस्ति। शास्त्रसिद्धान्तलेशसंग्रहे प्रायः सर्वेषां प्राचीनाचार्याणामुल्लखे विद्यमानेऽपि ज्ञानोत्तममिश्रस्योल्लेखो नास्ति। तस्मात् ज्ञानोत्तममिश्रः श्रीचित्सुखाचार्यपेक्षया अर्वाचीन इति निश्चयेन वक्तुं पार्यते। चन्द्रिकाकारः ज्ञानोत्तममिश्रः न चित्सुखाचार्याणां गुरुः इति अन्यत्र (चित्सुखाचार्यस्य संक्षेपपरिचय-प्रदानावसरे) प्रतिपादितम्। तस्मात् स्वतन्त्रा प्राचीना चेयं टीकेति निश्चयेन वक्तुं पार्यते।

भावतत्त्वप्रकाशिकायां श्रीचित्सुखाचार्यः सर्वेषां श्लोकानां व्याख्यां न कृतवान्। केवलः प्रयोजनानुसारेण दुर्वोध्यश्लोकानामेव व्याख्यां प्रदत्तवान्। बहुषु स्थलेषु सम्बन्धोक्तिमात्रं विधाय त्यक्तवान्। तथापि संक्षेपेण दुर्वोध्यशब्दानामेव व्याख्याततत्वात् विदुषामानन्दकरत्वं द्योतयति। अत्युत्तमाऽपीयं टीकेदानीमप्रकाशितत्वात् शोधनिबन्ध-रूपेणेदानीं मया प्रकाश्यते।

## ज्ञानोत्तमकृतायाः टीकायाः विवेचनम्

श्रीज्ञानोत्तममिश्रपादाः नैष्कर्म्यसिद्ध्युपरि एकां "चन्द्रिका" इत्याख्यां टीकामपि विरचितवन्तः। सैवेदानीं विदुषां मध्ये प्रचलिता वर्तते। इयं टीका वाराणसीतः पुण्यपत्तनाच्च मुद्रापिता। टीकेयम् श्रीचित्सुखाचार्यकृतायाः "भावतत्त्वप्रकाशिका" ख्यटीकायाः विस्ताररूपा इति वक्तुं पार्यते। श्रीचित्सुखाचार्यः सुवोधश्लोकानां व्याख्यां न कृतवान्। परन्तु सर्वेषां श्लोकानां व्याख्याकृता एतैः। बहुषु स्थानेषु श्रीचित्सुखाचार्यः श्लोकानां सम्बन्धादिकं किञ्चिद्रूपेणोक्त्वा विरतोऽभूत्। परन्त्वनेन तत्र तत्र श्लोकानां व्याख्यानमपि कृत्वा साधारणजिज्ञासुनां प्रभूत उपकारः सम्पादितः। वस्तुतस्तु ज्ञानोत्तममिश्रः टीकारचनावसरे श्रीचित्सुखाचार्यमेवानुसृतवान्। यत्किञ्चित् भाषायाः परिवर्तनमपि कृतं स्वीयायां टीकायाम्। तथाहि—"यत्र श्रीचित्सुखाचार्येण कथितं "वेदानां शक्तितात्पर्यापरिज्ञानविजृम्भितमिदं प्रमाणवचनम्—।"

तत्र ज्ञानोत्तममिश्रेण- "वेदान्तवाक्यशक्तितात्पर्यपरिज्ञान—।"[१]

यत्र श्रीचित्सुखाचार्यः "इत्यर्थः" इति शब्दं प्रयुक्तवान्, तत्र मिश्रपादैः "इति भावः" इत्युक्तमिति कृतम् तयोर्भेदः।

### नैष्कर्म्यसिद्धेरपरटीकायाः क्लेशापहारिण्याः विवेचनम्

होलेनरसीपुरतः प्रकाशितायाः नैष्कर्म्यसिद्धेः काचित् विस्तृता टीका

---

१. नैष्कर्म्यसिद्धिः, १.१५.

"क्लेशापहारिणी" त्याख्या श्रीसच्चिदानन्देन्द्रसरस्वतीविरचिता वर्तते। टीकेयमत्यन्त-विस्तृतरूपेण मूलग्रन्थस्य प्रायो विषयं स्पष्टीकरोतीति भाति। परन्तु बहुषु स्थानेषु तैः सम्प्रदायानुभवविरुद्धसिद्धान्तं तु अविचाररमणीययुक्तिभिः प्रकटीकर्तुं प्रयतितम्। तत्र कतिपयस्थलानि दृष्टान्तरूपेण प्रस्तूयन्ते। तथाहि—

क्लेशापहारिण्याश्चतुर्विंशतितमे (२४) पृष्ठे—

"तदेवमात्माश्रया आत्मविषया च सा मूलाऽविद्या वाक्यजन्यसम्यग्ज्ञानेन विनाश्यते। तद्विनाश एव मुक्तिः" इति पूर्वपक्षं कृत्वा सिद्धान्तरूपेण न्यगादीत् टीकाकारः तत्रैव—

तदेतत्सर्वं अभित्तिचित्रम्। ग्रन्थकारैः कुत्राप्यनुपन्यासात् तादृशाविद्यायाः। ज्ञानविरोधित्वेन लोके प्रसिद्धत्वाच्च तस्याः—इत्युपेक्ष्यते।

अत्रात्माश्रयाया आत्मविषयायाश्चाविद्याया निरूपणस्य स्वयमाचार्यैरेव नैष्कर्म्य-सिद्धेः तृतीयाध्यायस्य प्रारम्भे कृतत्वात् क्लेशापहारिणीटीकाकारः सम्यग्रूपेण मूलग्रन्थस्यापि अध्ययनं न कृतवान् इति तेषां पूर्वोक्तकथनेन भाति। तथाहि—"पारिशेष्यादात्मन एवास्त्वज्ञानं तस्याज्ञोऽस्मीत्यनुभवदर्शनात्"—इत्यादिना आत्मनोऽज्ञानाश्रयत्वं निरूप्य तत्रैव पुनः "किं विषयं पुनस्तदात्मनोऽज्ञानम्" इत्युत्थाप्य "आत्मविषयमिति ब्रूमः —" इत्यादिना अविद्यायाः विषयोऽपि आत्मैवेति स्पष्टतया कथितवान् आचार्यः। अतएव 'कुत्राप्यनुपन्यासात् ग्रन्थकारैस्तादृशाविद्याया' इत्यादिनि वाक्यानि तेषां स्वकपोलकल्पितानि प्रलापमात्राणि इति भाति।

पुनस्तत्रैव नवनवत्यधिकैकशततमे (१९९) पृष्ठे—

"बोधादूर्ध्वमिति ब्रह्मात्मैक्यापरोक्ष्येण मूलाज्ञाने बाधिते इति केचिद्व्याकुर्वते। तदनादेयं व्याख्यानम्। ब्रह्मात्मैक्यापरोक्ष्यस्यात्राप्रकृतत्वात्, मूलाज्ञानस्य ग्रन्थकृदन-भिमतत्वाच्च। अत्र ह्यविद्यापरिकल्पितं साक्षित्वमाश्रित्य कर्तृत्वाद्यशेषपरिणाम प्रतिषेधः प्रतिज्ञातो ग्रन्थकृता। मूलाज्ञानस्य च तदभिमतप्रक्रियानन्तर्गतमिति दर्शितं प्रागेवेति।"

अत्रापि युक्त्याभास एव प्रदर्शितस्तैः। ग्रन्थकृता मूलाज्ञानस्य मूलाज्ञानम् मूलाविद्या वेति शब्दप्रयोगद्वारा निरूपणमपि नैव कृतम्, किन्तु तस्य खण्डनमपि कुत्रापि न कृतम्। तेन तैः मूलाज्ञानं स्वीकृयते इति प्रतिभाति। अद्वैतवेदान्त-सिद्धान्तान्तर्गतायाः तूलाविद्यायाः विषये सत्यपि मतविरोधे मूलाज्ञानविषये सर्वेषां अद्वैतवेदान्तीनामैक्यं परिलक्ष्यते। अतएव मूलाज्ञाननिराकरणोपायस्त्वेतेषां स्वकपोल-कल्पितः विभ्रान्तिकरश्चेति निश्चयेन वक्तुं पार्यते।

क्लेशापहारिण्याः अष्टचत्वारिंशाधिकद्विशतपृष्ठे (२४८)

सिद्धान्तमेव पूर्वपक्षरूपेणोत्थाप्य दूषयति—"केचित्त्वत्र अनाद्यग्रहणव्यतिरेकेण भावरूपा अनाद्यविद्या न विद्यते—इति शङ्काभिप्रायं कल्पयित्वा तदुत्तरत्वेन श्लोक-

मवतारयन्ति। तत्तु ग्रन्थाक्षरबाह्यमित्युपेक्ष्यम्। न हि चोद्यग्रन्थे "मिथ्याज्ञानव्यतिरेकेण आत्मानवबोधस्याभावात्" इति, "अज्ञानं नाम ज्ञानाभाव:" इति च विस्पष्टोक्ति:, अग्रहणव्यतिरिक्तभावाविद्याक्षेपार्था इति वक्तुं पार्यते केनापि सचेतसा ग्रन्थाक्षराण्यनुसरता। न च "अज्ञात एव सर्वोऽर्थ:" इत्यादिश्लोकाक्षराणि भावाविद्यापरत्वं श्लोकस्य मन्यमानस्य अनुकूलानीति सङ्गच्छते। अज्ञानस्याभावत्वेऽपि अज्ञातसत एव संसारोत्पत्ति-रवकल्पते इत्येवम्परतया तु सुव्याख्यान: श्लोक:, तथैव च व्याख्यातमस्माभिरिति"। अत्राऽनेनाज्ञानस्य भावरूपत्वं नाङ्गीकृतम्। अज्ञानस्य ज्ञानाभावरूपत्वे प्रतियोगिसापेक्ष-त्वादभावस्यात्रापि ज्ञानाभावं प्रति ज्ञानमेव प्रतियोगी, अत: तस्य ज्ञानमस्ति चेत् अज्ञानोक्तिस्तु वदतोव्याघातदोषग्रस्ता स्यात्। अत: अज्ञानस्य भावरूपत्वमेव सूत्र-भाष्यकाराभिमतमिति निर्णितं सम्प्रदायविद्भि:। उक्तं हि अध्यासभाष्ये— "अत्यन्तविविक्तयोर्धर्मधर्मिणोर्मिथ्याऽज्ञाननिमित्त: सत्यानृते मिथुनीकृत्य..."[१] "अत्र रत्नप्रभाकारस्तु— "अज्ञानं ज्ञानाभाव: इति शङ्कानिरासार्थं मिथ्यापदम्"। आनन्द-गिरिस्तु—"तत्र मिथ्येत्युक्ते भ्रान्तिज्ञानप्राप्तावज्ञानमित्युक्तम्। तन्मात्रग्रहे ज्ञानाभावशङ्कायां मिथ्येति"।

अपि च भगवान् भाष्यकार ईशावास्योपनिषद: नवमश्लोकव्याख्यानावसरे "विद्याया अन्या अविद्या" इति कथितवान्। यदि अविद्या नाम विद्याया अभाव इति अभिप्रायं स्यात्तेषां तदा ते विद्याया अन्या" इति स्थले विद्याया अभाव वक्तव्यमासीत् तै:। परन्तु तथा न कृत्वा अर्थत: अविद्याया: भावरूपत्वमेवाङ्गीकृतमाचार्यपादै:। एवं बहुषु स्थलेषु अज्ञानस्य भावरूपत्वमेव स्वीकृतम्।

अत्र टीकाकारै: यदुत्थापितं "मिथ्याज्ञानव्यतिरेकेण आत्मानवबोधस्याभावादि"ति, किन्त्वेतद् वाक्यमज्ञानस्याभावरूपं न स्पष्टयति। अपि च "अज्ञानं नाम ज्ञानाभाव" इति वाक्यं स्वयं सुरेश्वराचार्य: अज्ञानस्य भावरूपत्वं प्रतिपादनाय पूर्वपक्षत्वेन नैयायिकमतमाश्रित्य कथितवान्। तथाहि—

"अज्ञानं हि नाम ज्ञानाभाव:, तस्य च अवस्तुस्वाभाव्यात् कुत: संसारकारणत्वम्? न हि असत: सज्जन्मेष्यते। कुतस्तु खलु सोम्येवं स्यादिति कथमसत: सज्जायते"[२] इति श्रुतेरिति। एवं पूर्वपक्षं कृत्वा सिद्धान्तपक्षमवतारयति—अत्रोच्यते—

अज्ञात एव सर्वोऽर्थ: प्राग्यतो बुद्धिजन्मन:।
एकेनैव सता संश्च सन्नज्ञातो भवेत्तत:।। (नै.सि., ३.७)

अत्र ग्रन्थकारैरज्ञानस्य भावरूपत्वमेवाङ्गीकृत्य कथितम् क्लेशापहारिणीकार: मूलाज्ञानमपि अभित्तिचित्रमिति कथयित्वा तन्निराशाय व्यर्थपरिश्रमं कृतवान्। उक्तं

---

१. ब्र.सू.शा.भा., १.१.१.    २. छान्दोग्योपनिषत्, ६.१.२.

हि श्रुतौ—"अजामेकाम्"[१] "मायान्तु प्रकृतिं विद्यात्"[२] "तरत्यविद्यां विततां" "अक्षरात् परतः परः"[३] "तद्धेदन्तर्ह्यव्याकृतं"[४] "तम आसीत्तमसा गूढम्"[५] "इन्द्रो मायाभिः पुरुरूप इयते"[६] इत्यादयः। अतएव क्लेशापहारिणीकारसम्मतमज्ञानादि-आलोचितविषयकं सर्वं सिद्धान्ताभास एव, अज्ञानस्याभावरूपत्वे कथितदोषपातात्, सम्प्रदायविरुद्धत्वाच्च।

अपि चैकोनपञ्चाशाधिकद्विशतपृष्ठे (२४९) उक्तं तैः —"ननु बृहद्वार्तिकेऽपि—

अस्य द्वैतेन्द्रजालस्य यदुपादानकारणम्।
अज्ञानं तदुपाश्रित्य ब्रह्मकारणमुच्यते।।[७]

इत्यज्ञानस्य द्वैतोपादानकारणत्वं स्पष्टमुक्तम्। अतः द्वैतस्योपादानापेक्षस्याभावेतर-कारणकत्वमेव ग्रन्थकृदभीष्टमिति प्रतीयते। मैवम्, द्वैतस्येन्द्रजालसदृशत्वोक्त्या मिथ्याध्यासमेवोक्तमिति। अध्यासस्यावस्तुत्वात् उपादानादिकारणापेक्षा नैवास्ति। न च ग्रन्थकृता क्वचिदप्यध्यासोपादानत्वेनाज्ञानं समुपन्यस्तम्, प्रत्युताधस्तादस्माभि-रुपपादितरीत्या मिथ्याज्ञानसंशयौ प्रत्यभावरूपाज्ञानस्यैव कारणत्वमत्राप्युक्तमिति। "...न हि भावाविद्यावादिभिरभ्युपगता अविद्याऽध्यासोपपादनमिति कुत्रापि कण्ठरवेणोक्तम् येन तत्परत्वेन वार्तिकश्लोको व्याख्यायते। न चास्ति प्रकृतश्लोकेऽपि भावाविद्या-परामर्शः।"

अत्रापि श्रुति-युक्त्यनुभवसिद्धं पक्षं दूषयितुं व्यर्थप्रयास एवावलम्बितः। अध्यासस्यावस्तुत्वेऽपि उपादानकारणस्याऽस्त्येवापेक्षा, निरधिष्ठानभ्रमस्यासम्भवात्। न हि रज्ज्वाभावेऽपि भवति सर्पभ्रमः। न वा शुक्त्यभावेऽपि कदाचित् भवति रजतभ्रमः। न च मरुमरीचिकाऽभावे भवति जलस्य भ्रमः। यदि अध्यासस्यावस्तुत्वात् उपादानादिकारणापेक्षा न स्यात् रजतादिप्रसिद्धभ्रमेष्वपि कारणापेक्षा न स्यात्, तस्याप्यवस्तुत्वात् अन्यथा सर्वत्रैव रजतप्रतीति स्यात्। वस्तुतस्तु अवस्तुत्वं हि मिथ्यात्वापरपर्यायम्। न तु सर्वथैव वस्तुनोऽभावः। अन्यथा तदा बन्ध्यापुत्रआकाश-कुसुमादेरपि प्रतीतिर्भवतु।

यत्कथितं "न च ग्रन्थकृता क्वचिदप्यध्यासोपादानत्वेन अज्ञानं समुपन्य-स्तमि"त्यादि। तदप्ययुक्तम्, ग्रन्थारम्भे एवोक्तत्वात्। तथाहि—"शोभनाशोभनाध्यास-निबन्धनत्वादध्यासस्य... शुक्तिकारजतादिवत् सर्वस्यापि स्वतस्सिद्धाद्वितीयात्मानव-बोधमात्रोपादानत्वाद् व्यावृत्तिः।" इत्यत्रात्मनः अनवबोधत्वमध्यासम्प्रत्युपादान-

---

१. श्वेताश्वतरोपनिषत्, ४.५.
२. तदेव, ४.१०.
३. मुण्डकोपनिषत्, २.१.२.
४. बृहदारण्यकोपनिषत्, १.४.७
५. ऋग्वेदः, १०.१२९.३.
६. तदेव, ६.४७.१८.
७. बृहदारण्यकोपनिषद्भाष्यवार्तिकम्, १.४.३७१.

त्वेनाङ्गीकृत्य "अज्ञाननिवृत्तेश्च सम्यग् ज्ञानस्वरूपलाभमात्रहेतुत्वात्तदुपादानम्। इत्यत्र पुनरात्माऽनवबोधम्प्रति अज्ञानमेव उपादानत्वेन कथितं ग्रन्थकारैः। अतः सच्चिदानन्देन्द्र-संयमिनः नेयं क्लेशापहारिणी, अपि त्वत्यन्तक्लेशकारिणी एव। इति स्थालीपुला-कान्यायेन किञ्चिद्विचारः प्रकटीकृतः। सर्वत्रैव तैः अपसिद्धान्तप्रतिपादनाय प्रयतितवान्।

## नैष्कर्म्यसिद्धेरन्याटीका

श्रीचित्सुखाचार्यविरचिता "भावतत्त्वप्रकाशिका" श्रीज्ञानोत्तम-मिश्रकृता "चन्द्रिका" श्री सच्चिदानन्देन्द्रसंयमिविरचिता "क्लेशापहारिणी" इत्याख्यटीकात्रयं विहाय अपरा अपि काश्चन टीकाः सन्ति इति "भण्डारकर ओरियण्टल रिसर्च इन्स्टीट्युट, पुनातः प्रकाशितायाः चन्द्रिकायुक्त-नैष्कर्म्यसिद्धेः अष्टोत्तर द्विशप्तति (२०८) पृष्ठायां सङ्केतितम्। तद्यथा-"सारार्थः", "विद्यासुरभिः", "नैष्कर्म्यसिद्धि-विवरणम्" इत्याख्यं टीकत्रयमप्यस्ति इति सङ्केतः लब्धः। परन्तु एतासां दर्शनम् ममभाग्ये साम्प्रतमपि न जातम्। तथापि उपर्युक्तग्रन्थसहाय्येन प्रयोजनानुसारं कतिपयेषु स्थानेषु टीप्पणं दत्तं मया।

वेदान्तसिद्धान्तोक्तेन तत्त्वज्ञानेनैव भवति कारणसम्वलितसंसारस्य निवृत्तिः। वेदान्तविज्ञानमपि वेदान्तवाक्यानां श्रवणमनननिदिध्यासनैरेव भवतीति श्रुत्या स्मृत्या तत्त्वज्ञानामनुभवेन च ज्ञायते। अतः वेदान्तविज्ञानपरिशुद्ध्यर्थमेव शोधप्रबन्धरूपेणास्याः भावतत्त्वप्रकाशिकाख्यायाष्टीकायाः सम्पादनमहं कृतवान्। कार्येऽस्मिन् सौविध्यप्राप्तये विश्वविद्यालयीय-नियममनुस्मरन् मननादौ प्रवृत्तोऽहम्। साध्यानुसारं प्रयतमानोऽपि टीकात्मके मूले असम्बद्धः पाठः अन्याश्च त्रुटय यत्र-तत्र क्वचिदवशिष्टाः स्यात्।

अत्र भूमिकायां ग्रन्थोक्तविषयाः प्रयोजनानुसारं किञ्चिदन्यच्चालोचितम्। अत्र येषां खलु आचार्यवर्याणां पण्डितवर्याणां साहाय्यं तेषां ग्रन्थेभ्यः गृहीतं तेषां प्रति बारं बारं कृतज्ञतां ज्ञापयन् विरमामि। इति नारायणस्मृतयः।

ऋषि पञ्चमी
संवत् २०४८

श्रीगुरुचरणाश्रितः
स्वामी प्रज्ञानानन्द सरस्वती

।। श्रीः ।।

# ।। नैष्कर्म्यसिद्धिः ।।

## प्रथमोऽध्यायः

**आब्रह्मस्तम्बपर्यन्तैः सर्वप्राणिभिः सर्वप्रकारस्यापि दुःखस्य स्वरसत एव जिहासितत्वात्तन्निवृत्त्यर्था प्रवृत्तिरस्ति स्वरसत एव।।**

---

## श्रीभावतत्त्वप्रकाशिका

यत्साक्षात्सच्चिदानन्दं प्रत्यगद्वयमक्रियम्।
तन्नमामि नृसिंहस्य[१] योगिगम्यं परं पदम्।।

ज्योतिर्यद्दक्षिणा[२]पूर्वं व्यासशङ्करशब्दितम्।
ज्ञानोत्तमाख्यं तद्वन्दे सत्यानन्दपदोदितम्[३]।।

संसारगरसन्तापनिर्वापणसुधापगाम्।
नैष्कर्म्यसिद्धिं यश्चक्रे तन्नमामि सुरेश्वरम्।।

नैष्कर्म्यसिद्धेः क्रियते पूर्वाचार्यवचोनुगा[४]।
मुनिना चित्सुखाख्येन भावतत्त्वप्रकाशिका।।

---

श्रीमद्गुरुपदाम्भोजरजोराजितविग्रहः ।
टिप्पणीं भक्तितश्चक्रे प्रज्ञानानन्दमस्करी।।

१ पुण्यपत्तनतः प्रकाशितायाः सचन्द्रिकाव्याख्यानैष्कर्म्यसिद्धिभूमिकाया अन्ते टिप्पणरूपेणोद्धृताया भावतत्त्वप्रकाशिकाया मङ्गलाचरणे "नृसिंहाख्यम्" इति पाठः वर्तते।

२ <u>दक्षिणापूर्वम्</u>— दक्षिणा शब्दः पूर्वं यस्य, "दक्षिणामूर्त्तिः" इति भावः। अथवा दक्षिणापूर्वकमूर्त्तिपदप्रतिपाद्यं यज्ज्योतिरित्यर्थः।
पुण्यपत्तनतः प्रकाशितायाश्चन्द्रिकाव्याख्यासम्वलितायाः नैष्कर्म्यसिद्धेः भूमिकायां टिप्पणरूपेणोद्धृतभावतत्त्वप्रकाशिकाया मङ्गलाचरणे "दक्षिणामूर्ति" शब्द एव वर्तते इति। भाष्यभावप्रकाशिका–चित्सुख्यादिष्वपि ग्रन्थेषु "दक्षिणामूर्ति" शब्द एव वर्तते।

३ <u>सत्यानन्देति</u>— सत्यानन्दपदाभ्यां प्रकाशितं, अथवा सत्यानन्दात्मकं यत्पदं पद्यते इति पदं स्फुरितम्। इत्थम्भावे तृतीया; अनेन च गुरुदेवतयोरैक्यमुक्तम्। (नयनप्रसादिनी-२) भाष्यभावप्रकाशिकायान्तु सत्यानन्दपदोत्थितमिति पाठः वर्तते।

४ <u>पूर्वाचार्यवचोनुगा</u>— इत्यंशं गृहीत्वा केचन आक्षिपन्ति यदेते चन्द्रिका (नैष्कर्म्यसिद्धिटीका) काराणामेव शिष्याः। परन्तु तदयुक्तम्। विषयेऽस्मिन् विस्तररूपेण **भूमिकायां** द्रष्टव्यम्।

**दुःखस्य च देहोपादानैकहेतुत्वात्, देहस्य च पूर्वोपचितधर्मा-**

---

व्याचिख्यासितायाः श्लोकसन्दर्भरूपायाः नैष्कर्म्यसिद्धेरधिकारिप्रयोजनतत्साधन-सम्बन्धविषयाणामभावादनारम्भमाशङ्क्य सम्बन्धोक्तिकारः प्रकरणारम्भसिद्धये क्रमेण तानुपपादयति—"आब्रह्मस्तम्बपर्यन्तै"रित्यादिना "प्रकरणमिदमारभ्यत" इत्यन्तेन ग्रन्थेन। तत्राधिकारिणमुपपादयति—तन्निवृत्त्यर्था प्रवृत्तिरस्ति स्वरसत एवेत्यनेन ग्रन्थेन। आब्रह्म च ते स्तम्बपर्यन्ताश्चेत्याब्रह्मस्तम्बपर्यन्तास्तैश्चतुर्मुखप्रभृतिभिः स्तम्बावसनैः प्राणिभिरिति यावत्। सर्वप्रकारस्याऽऽध्यात्मि[1]कादिभेदभिन्नस्य स्वरसत एव स्वभावत एवान्तरेणापि शास्त्राधेयसंस्कारमिति यावत्।

इदमत्र तात्पर्यम्—यद्यपि दुःखमतीतमतीतत्वादेव न निवर्त्यम्। नापि वर्तमानं स्वत एव निवृत्तेः। नाप्यनागत[2]मनुपस्थितेरेव निवर्तयितुमशक्यत्वात्। तथाप्यनागतं दुःखं तद्धेतुनिवर्तनेन शक्यमेव हन्तुमतस्सम्भवत्येव निखिलदुःखनिवृत्तिकामोऽधिकारी। न च शङ्कनीयमशेषदुःखकारणानिवृत्तौ सुखस्यापि निवृत्तेर्न दुःखकारणनिवृत्तिः पुरुषार्थ इति विषयदोषदर्शिनां वीतरागाणां वैषयिकं सुखं विषसंपृक्तान्नवद् दुःखपक्षनिक्षिप्तं पश्यतामत्र पुरुषार्थबुध्यनुत्पत्तेः। अतो वैषयिकसुखाभिलाषप्रतिबन्धनामप्रवृत्तावपि स्वतः सर्वदुःखनिवृत्तिकामस्सुलभ एवाधिकारीति।

नन्वाध्यात्मिकदुःखस्याधिव्याधिप्रसवस्यायुर्वेदविहितोपायैराधिभौतिकस्य च शत्रुव्याघ्रादिजनितस्यान्वयव्यतिरेकसिद्धतत्तत्साधनैराधिदैविकस्य चातिवाय्वतिवर्षणादिनिमित्तस्य शान्तिकपौष्टिकादिना निवृत्तेर्न दुःखनिवृत्तिः प्रकरणस्य प्रयोजनं अन्यत एव सिद्धेरित्याशंक्यात्यन्तिकदुःखनिवृत्तिलक्षणप्रयोजनस्य प्रकरणप्रतिपाद्यात्म-विद्याव्यतिरिक्तसाधनान्तराऽसाध्यत्वं दर्शयति—**दुःखस्य** चेत्यादिना **अशेषपुरुषार्थ-परिसमाप्ति**रित्यन्तेन ग्रन्थेन। देहस्य कार्यकारणसङ्घातलक्षणस्योपादानमहं ममग्रहः स एवैको मुख्यो हेतुर्यस्य तद्दुःखं देहोपादानैकहेतुस्तस्य भावस्तत्वं तस्माद्दुःख-स्यानुच्छित्तिरिति वक्ष्यमाणेन सम्बन्धः। अत्रायमभिसन्धिः सत्यपि देहे यद्यपि कदाचित् किञ्चित् दुःखं निवर्त्यमानमुपलभ्यते तथापि समानाधिकरणदुःखान्तरप्रागभावा-

---

१ आध्यात्मिकादि— आदिपदेन आधिभौतिकं आधिदैविकञ्चेति।
तत्र आध्यात्मिकम्– ज्वरादिशारीरिकं, प्रियवियोगात्मकमानसञ्चेति द्विविधम्। अन्तरोपायसाध्यत्वादाध्यात्मिकम्। (सां.त.कौ.)
आधिभौतिकम्— भूतान्यधिकृत्योत्पन्नं (दुःखम्) जरायुजाण्डजादिभ्य इति भावः।
आधिदैविकम्— दैवमधिकृत्य यदुपजायते, अतिवृष्टि-अनावृष्ट्यादिकम्।

२ हेयं दुःखमनागतम् (पा.यो.द. २.१६)।

**धर्ममूलत्वादनुच्छित्तिः। तयोश्च विहितप्रतिषिद्धकर्ममूलत्वादनिवृत्तिः।।**

**कर्मणश्च रागद्वेषास्पदत्वाद्रागद्वेषयोश्च शोभनाशोभनाध्यास[1]-**

---

समानकालीनदुःखनिवृत्तेर्देहोपादाने सत्यसम्भवात्तन्निवृत्तिरूपायान्तरसाध्येति। एवमपि धर्माधर्मयोरूपभोगेनोपक्षये कारणाभावाद्देहसन्तानस्यापि विच्छेदो भविष्यतीति तत्राह—**तयोश्चेति**। तयोरपि धर्माधर्मयोर्विहितप्रतिषिद्धे ये कर्मणी यजन[2]ब्रह्महनना[3]दिव्यापारलक्षणे तज्जन्यत्वात्तयोस्थितौ तन्निवृत्तिरित्यर्थः। तयोरित्यर्थः। तयोरप्यनित्यत्वात् स्वयमेव विच्छेदो भविष्यतीत्यत आह—**कर्मणश्चेति**। व्यक्तिरूपेण विच्छिद्यमानस्यापि कर्मजातस्य रागद्वेषप्रयोज्यत्वात्तयोः स्थितो न तत्सन्तानविच्छेद इत्यर्थः। रागद्वेषयोरपि स्वत एव निवृत्तिमाशङ्क्याह—**रागद्वेषयोश्चेति**। विषयेषु इदं शोभनं रमणीयमिदमिति यः प्रत्ययः यश्च तद्विपरीतमशोभनमिदमिति प्रत्ययः तावव्यभिचारिणि विषयेऽव्यभिचारित्वाद्विभ्रमभूतौ तयोश्च स्थितयोर्न तज्जन्यरागद्वेषसन्तानस्य विच्छेद इत्यर्थः। तयोरप्यध्यासयोरनित्यत्वात् स्वत एव निवृत्तिमाशङ्क्याह—**अध्यासस्य** चेति। (स) सर्वस्यापि विभ्रमप्रसरस्य स्वतस्सिद्धत्वात् स्वयम्प्रभत्वादद्वितीयो द्वितीयशून्यो योऽयमात्मा द्वितीयस्य हि जड़स्य स्वतस्सिध्यनुपपत्तेरात्मसिद्ध्यभिसम्बन्धात् सिद्धिरेष्टव्या, सम्बन्धस्समवाय तादात्म्यादिलक्षणस्तु हिमदहनवद्विरुद्धस्वभावयोर्जडाजडयोरनुपपन्न इति जडस्याजडतादात्म्याध्यासात् सिद्धिरभ्युपेया। अतः कल्पितत्वात् द्वैतस्य सिद्ध आत्माऽद्वितीयस्तस्य तस्मि[4]न्योऽयमनवबोधः स्वतस्सिद्धतया सततमद्वैतरूपेण प्रकाशप्राप्तौ तथा प्रकाशादर्शनाद्विपरीतरूपप्रकाशदर्शनाच्च, तद्धेतुतया परिकल्पितस्तन्मात्रोपादानत्वात्तस्मिन्विद्यमाने नाध्यासस्य निवृत्तिरित्यर्थः। तदेवमज्ञानस्याध्यासराग-[5] द्वेष-

---

१ शोभनाशोभनाध्यासः—वस्तुनि रमणीयबोधजन्याध्यासः शोभनाध्यासः। तत्र रागो भवति। वस्तुनि प्रति अरमणीयबोधजन्यद्वेषात्मकोऽध्यासोऽशोभनाध्यासः।

२ अग्निहोत्रादि, "अहरहः सन्ध्यामुपासीत" इत्यादीनि विहितानि।

३ "ब्राह्मणो न हन्तव्यः" "कलञ्जं न भक्षयेत्" इत्यादीनि प्रतिषिद्धानि श्रुतिप्रमाणात्।

४ तस्य तस्मिन्- तस्य विषयभूतस्य तस्मिन् आश्रयभूते उक्तं हि संक्षेपशारीरके—
आश्रयत्वविषयत्वभागिनी, निर्विभागचित्तिरेव केवला।
पूर्वसिद्धतमसो हि पश्चिमो, नाश्रयो भवति नापि गोचरः।। सं.शा. १.३१९.

५ राग:— सुखानुशयी रागः (पा.यो.द. २.७)
सुखाभिज्ञस्य सुखानुस्मृतिपूर्वः सुखे तत्साधने वा यो गृधस्तृष्णा लोभः स रागः इति व्यासभाष्ये। काम-मत्सर-स्पृहा-तृष्णा-लोभादयोऽपि रागशब्दान्तर्गता इति नैयायिकाः।
(भा.द.को., पृ.१२७)

**निबन्धनत्वात्, अध्यासस्य च अविचारितसिद्धद्वैतवस्तुनिमित्तत्वात्, द्वैतस्य च शुक्तिकारजतादिवत्सर्वस्यापि स्वतःसिद्धाद्वितीयात्मानवबोधमात्रापादानत्वादव्यावृत्तिः, अतः सर्वानर्थहेतुरात्मानवबोध एव[१]।।**

**सुखस्य चानागमापायिनोऽपरतन्त्र[२]स्याऽऽत्मस्वभावत्वात्**

---

[३]प्रवृत्ति-[४]धर्माधर्मदेहोपादानपरम्परया[५] दुःखहेतुत्वात्तस्मिन् सति दुःखस्यो-पायान्तरेण न निवृत्तिरित्युपसंहरति—**अत इति**। न केवलमसौ सर्वाऽनर्थहेतुरपि त्वात्मस्वभावतया सततमपरोक्षप्रकाशयोग्यतां प्राप्तस्य सुखस्यापि तिरोधायकस्ततस्त-न्निवृत्तौ निरतिशयसुखावाप्तिरप्यस्मन्मते सम्यग्दर्शनात् सिध्यतीत्यभिप्रेत्याह—**सुखस्य चेति**। आगमश्चाऽपायश्चागमापायावुदयास्तमयौ तौ विद्येते यस्य तदागमापायि न आगमापाय्यनागमापायि तस्य, तदेव कुत इत्यत आह—**अपरतन्त्रस्येति**। कारणानधीनस्येति यावत्। एतदपि स्वभावादात्मवद् यद्वा आत्मा सुखस्वभावः निरुपाधिकप्रेमास्पदत्वात्, सुखवदिति प्रयोगः। विपक्षे च निरुपाधिकप्रेमास्पदत्वासिद्धिरेव बाधिका। न हि दुःखनिवृत्तिरूपतया तस्य प्रेमास्पदत्वं भावत्वान्नापि सुखसाधनतया दुःखनिवृत्तिसाधनतया वा तयोर्निरुपाधिकप्रेमेति।[६] तदेवमनुमानात् "एषोऽस्य परम आनन्द" इत्यागमतश्चात्मनस्सुखस्वभावत्वात्तस्य चापराधीनप्रकाशतया सत्त्वात्तथा प्राप्तप्रकाशस्य

---

१ सर्वानर्थहेतुरात्मानवबोध एव। सुखस्य चेत्यादि—
अज्ञानस्य विक्षेपलक्षणानर्थहेतुतामेवमुपपाद्यानन्दाद्वयस्वरूपाप्रतीतिलक्षणविक्षेपकारणावरणहेतुतामुपपादयति सुखस्य चेति सारार्थः। (अत्राप्रतीतिलक्षण इत्यस्यावरणेऽन्वयः)

२ अपरतन्त्रः—वस्तुतन्त्रः। सुखस्य विद्यमानत्वे सति सर्वे तस्यानुभवं कुर्वन्त्येव। सुखे विद्यमाने सुखं नानुभवामि, नानुभूतम्वेति न कोऽपि कथयति। सुखस्य ज्ञातैकसत्त्वात्।

३ द्वेषः— दुःखानुशयी द्वेषः। (पा.यो.द. २.८)
दुःखाभिज्ञस्य दुःखानुस्मृतिपूर्वो दुःखे तत्साधने वा यः प्रतिघो मन्युर्जिघांसा क्रोधः स द्वेष इति व्यासभाष्ये। प्रतिकूलेष्वर्थेषु द्वेषः। (न्या.द.वा. १.१.१०)
एकस्यानेकार्थदर्शिनो दर्शनप्रतिसन्धानात् दुःखहेतौ द्वेषः (न्या.द.वा.भा. १.१.१०)

४ प्रवृत्तिः— प्रवृत्तिसाधनौ धर्माधर्मौ प्रवृत्तिशब्देनोक्तौ, यथान्नसाधनाः प्राणाः। (न्या.द.वा.भा. १.१.२)
प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः। (न्या.द., १.१.१७)

५ देहोपादानत्वात् परम्परयेति भावः।

६ प्रमेयत्वमिति मूलपाठः।

**तस्य अनवबोधः पिधानम्[१], अतः तस्यात्यन्तोच्छित्तावशेषपुरुषार्थ-परिसमाप्तिः। अज्ञाननिवृत्तेश्च सम्यग्ज्ञानस्वरूपरलाभमात्रहेतु-त्वात्तदुपादानम्।**

**अशेषानर्थहेत्वात्मानवबोधविषयस्य च अनागमिकप्रत्यक्षा-दिलौकिकप्रमाणाविषयत्वाद्वेदान्तागमवाक्यादेव सम्यग्ज्ञानमतोऽ-शेषवेदान्तसारसंग्रहप्रकरण[२]मिदमारभ्यते।**

---

प्रतिबन्धकोऽनवबोध इत्यर्थः। फलितमाह—**अतस्तस्येति**। तस्यानवबोधस्यात्यन्तमन-वशेषेण। "भूयश्चान्ते विश्वमाया निवृत्ति"रिति न्यायेनोच्छिन्नाऽवशेषस्य सकलदुःखनिवृत्ति-रूपस्य निरतिशयानन्दावाप्तिलक्षणस्य पुरुषार्थस्य परिसमाप्तिः स्यादित्यर्थः। भवत्वेवं तथापि कर्मोपासनादि परिहारेण विशिष्टाधिकारिणः सम्यग्दर्शन एव कुतः प्रवृत्तिर्येन सम्यग्दर्शनाय प्रकरणारम्भसम्भव इत्यत्र आह—**अज्ञाननिवृत्तेश्चेति**। **सम्यग्ग्रहणे**नो-पासनाज्ञानं व्यावर्तयति **स्वरूपलाभ**ग्रहणेन ज्ञानाभ्यासं, **मात्र**पदेन च कर्मापेक्षा तदेवमुपायान्तरपरिहारेणाऽधिकारिणरसम्यक् ज्ञानोपादानमेव सम्भवतीत्यर्थः। यद्यपि सम्यक् ज्ञानोपादानत्वन्तथापि तस्य प्रमाणान्तरादप्युपपत्तेर्वेदान्तप्रकरणादिषु तदर्थिनः कुतो नियमेन प्रवृत्तिरित्यत आह—**अशेषेति**। आगमिकमागमवाक्यजन्यमात्मसाक्षात्कार-लक्षणमनुमानञ्च "यत्प्राणेन प्राणिति"[३] "येन वा पश्यति" इत्याद्यस्ति, तद्विषयत्वनिरासाशङ्कापनोदायाह—**नागमिकेति**। कानि तानीत्याह—**लौकिक-प्रमाणेति**। तेषां चात्मा न विषयः रूपाद्यभावात्तत्सम्बन्धलिङ्गाद्यदर्शनाच्च। तदेवमनन्य-साधारणत्वादुपनिषदामेवात्माविषय इत्याह—**वेदान्तेति**। आगमग्रहणञ्च "वेदोषरा[४] वेदान्ता" इति मतनिरासेन प्रामाण्यसूचनाय। वाक्यग्रहणञ्च[५]न कर्मवाक्यशेषतया

---

१ तस्यानवबोधः पिधानम्—तस्य सुखात्मनोऽनवबोधः पिधानमावरणम्। सुखाप्रतीत्या विपरीतप्रतीतिहेतुः। (सारार्थः)

२ प्रकरणम्—शास्त्रैकदेशसम्बन्धं शास्त्रकार्यान्तरे स्थितम्।
अहुः प्रकरणं नाम ग्रन्थभेदं विपश्चितः॥
(पराशरोपपुराणम्, १८-२१-२२)

३ "यत्प्राणेन प्राणिति" इति वाक्यं उपनिषत्सु न दृश्यते। किन्तु "यः प्राणेन प्राणिति" (वृ.उ.,३.७.२२) इति श्रुतिः वृहदारण्य-कोपनिषदि वर्तते।

४ वेदोषरा— उषरः = मरुस्थलम्, तथैव वेदान्तस्य व्यर्थत्वमिति भावः (पूर्वपक्षिणः)।

५ तत्त्वमस्यादिमहावाक्यद्योतनायेति भावः।

**तत्राभिलाषितार्थप्रचयाय प्रकरणार्थसंसूत्रणाय चायमाद्य-श्लोक:-**

**खानिलाग्न्यब्धरित्र्यन्तं स्त्रक्फणीवोद्गतं यत:।**
**ध्वान्तच्छिदे नमस्तस्मै हरये बुद्धिसाक्षिणे।।१।।**

---

तत्रैव वाक्यत्वं किन्तु स्वतन्त्रतयैवेति द्योतनाय, एवकारश्च वाक्याभ्यासादे[१]र्ज्ञान-कारणत्वनिरासाय। इदानीं प्रकरणलक्षणमुपपादयन् प्रकरणारम्भमुपपादितमुपसंहरति— **अतोऽशेषेति**। यत उक्तरीत्या प्रयोजनादीनां सद्भावा: साधनान्तरानधीनश्च प्रयोजनमत इत्यर्थ:। अत्रा**शेषवेदान्त**शब्देन शास्त्रं दर्शितम्। तत्रापि निष्प्रपञ्चब्रह्मप्रतिपादक-शास्त्रैकदेशेन सम्बन्धद्योतनाय सारग्रहणम्। तत्रापि विस्तरेण प्रतिपादितस्य संक्षेपेण प्रतिपादन[२] कार्यान्तरं दर्शयितुं संग्रहग्रहणम् तदेवम्—

शास्त्रैकदेशसम्बन्धं शास्त्रकार्यान्तरे स्थितम्।
आहु: प्रकरणं नाम ग्रन्थभेदं विचक्षणा:।।

इत्युक्तलक्षणलक्षितमिदं प्रकरणमिति।

इदानीं प्रतिश्लोकं सम्बन्धोक्तिमारभमाण: प्रथमश्लोकस्य तात्पर्यं दर्शयन् सम्बन्धमाह—**तत्राभिलषितार्थेति**। तत्र प्रकरणे आद्यश्लोकोऽभिलषितार्थस्य अभिलषितोऽर्थ: प्रकरणान्तरस्य प्रचयाय तस्य प्रचयाश्शिष्यपरम्परया शिष्टपरिग्रह:। **तस्मै**। उपलक्षणमिदमविघ्नेन परिसमाप्तिशिष्टाचारपरिपालनयोरिष्टदेवतानमस्कारस्य विद्यायामन्तरङ्गसाधनत्वसूचनस्य च। प्रकरणस्यार्थो विषय: प्रयोजनञ्च तयोस्सम्यक् सूत्रणं संक्षेपेण सूचनं, तस्मै च। तत्र हेतुराद्यश्लोक इति। यस्मादयमाद्यस्तस्माच्छ्रोतृणां प्रवृत्यङ्गतया सुखावबोधाय चात्रैव सूचनीयमुभयमिष्टदेवतानमस्कारश्चकरणीय इति— **खानिलेति**।[३] अत्रोद्गतमिति कार्यजातमुच्यते। तदेव विशेष्यं तस्यैव कार्यजातस्य

---

१ आदिपदेन युक्त्याभास: ग्राह्य:। वाक्याभास: मिथ्यावाक्यं श्रुते: कदर्थम्वा। तथाहि— "असद्वा इदमग्र आसीत्" (छा.६.२.१) इति श्रुतिवाक्यं बौद्धा: असद्वादसमर्थकत्वेन यत् योजयन्ति तद्वाक्याभास:। युक्त्याभासोऽपि तथैव यद्वस्तु तच्छून्यावसानं, यथा दीप:।

२ "प्रतिपन्नम्" इति पाठ: चन्द्रिकायां दृश्यते.

३ खानिलेति— खञ्चानिलश्चाग्निश्चापश्चेति। अत्र अन्तशब्द: स्वरूपवचन: स्वप्नान्तं बुद्धान्त-मित्यादिवत्। खानिलाग्न्यब्धरित्रीस्वरूपम्। यद्वा खानिलाग्न्यब्धरित्रीशब्देन पञ्चीकृतानि पञ्चमहाभूतानि उच्यन्ते, तानि भूतान्यन्तं लयं यस्य भौतिकस्य जगतस्तत्खानि-लाग्न्यब्धरित्र्यन्तम्। यद्वा खानिलाग्न्यब्धरित्रीशब्देन पञ्चीकृतानि पञ्चमहाभूतान्युच्यन्ते, तानि भूतान्यन्तं यस्य पञ्चीकृतभूतलक्षणस्य जगतस्तत्खानिलाग्न्यब्धरित्र्यन्तम्। यद्वा

**स्वसंप्रदायस्य चोदितप्रमाणपूर्वकत्वज्ञापनाय विशिष्टगुण-संबन्धसंकीर्तनपूर्विका गुरोर्नमस्कारक्रिया–**

**अलब्ध्वाऽतिशयं यस्मात् व्यावृत्तास्तमबादयः।**
**गरीयसे नमस्तस्मा अविद्याग्रन्थिभेदिने।।२।।**

---

विशेषणम् **खानिलाग्न्यब्धरित्र्यन्तमिति।**[१] तत्र **स्रक्फणीव** यतो भवति तस्मै ध्वान्तच्छिदे बुद्धिसाक्षिणे हरये नमः इति सम्बन्धः। तत्र **स्रक्फणीवे**त्यारम्भपरिणाम-व्युदासाय,[२] हरये बुद्धिसाक्षिणे इति सामानाधिकरण्यं प्रत्यगात्मपरमात्मनोरेकत्वलक्षण-विषयद्योतनाय। **ध्वान्त** इति अज्ञाननिवृत्तिलक्षणप्रयोजनकथनाय।।१।।

उत्तरश्लोकतात्पर्यमाह—**स्वसम्प्रदायस्येति।**[३] स्वेन प्राप्तो विद्योपदेशस्तस्य। **च** शब्दो देवतानमस्कारेण गुरुनमस्कारस्य समुच्चयार्थः। तस्य सम्प्रदायस्योदितः प्रमाणमाचार्यः—

"आचार्यवान् पुरुषो वेद" इत्यादि[४] श्रुतिभ्यः तत्पूर्वकत्वज्ञापनाय। **उचित-प्रमाणेति** वाक्येऽप्ययमेवार्थः। विशिष्टगुणैराचार्यस्य यस्सम्बन्धः तत्सङ्कीर्तनपूर्विका गुरोर्नमस्कारक्रिया प्रदर्श्यत इति शेषः। यद्वा येयं नमस्कारक्रिया सा स्वसम्प्रदाय-स्योचितप्रमाण[५]पूर्वकत्वज्ञापनायेति सम्बन्धः। **अलब्ध्वेति** यस्मात् गुरोरन्यत्रातिशयमलब्ध्वा तमवादयः प्रत्ययाः विषयाभावादेव व्यावृत्य यस्मिन्नेव परिनिष्ठितास्तस्मै गरीयसे नम इत्यन्वयः। तत्र हेतुर**विद्याग्रन्थिभेदिन** इति स्वस्मादन्यैरभेद्याविद्याग्रन्थिभेदित्वात् गुरोरेवंविधता सिद्धैवेत्यर्थः।।२।।

समनन्तरश्लोकाभिप्रायमाह—**नमस्कारेति।** नमस्कारस्य निमित्तभूतो यस्स्व-स्याशयोऽभिप्रायविशेषः येनाभिप्रायेण नमस्कारः कृतस्तस्याविष्करणार्थमुत्तरश्लोक इत्यर्थः। वेदान्त(वि)ज्ञानं[६] वक्ष्य इति सम्बन्धः। किं प्रमाणकं तदिति अत आह—

---

खानिलाग्न्यब्धरित्रीशब्देनापञ्चीकृतानि पञ्चमहाभूतान्युच्यन्ते तानि भूतान्यन्तं यस्य पञ्चीकृत-भूतलक्षणस्य जगतस्तत्खानिलाग्न्यब्धरित्र्यन्तमित्यनुपात्तं विशेष्यं बहुव्रीहित्वाज्जगदित्येकं पदमध्याहरणीयम्। अथवा उद्गतमिति कार्यजातमुच्यते। तदेव विशेष्यम्। तत्खानिलाग्न्य-ब्धरित्र्यन्तं कार्यजातं यतो भवतीति क्रियाध्याहारः। (नै.सि.च.)

१ धरित्री यस्यान्तं तद्धरित्र्यन्तमिति भावः।

२ विवर्त्तवाद एव स्वीकृतमिति भावः।

३ **सम्प्रदायः**— सम्प्रदीयते गुरुणा शिष्यायेति सम्प्रदायः वेदः। (न्या.कु.,प्र.)

४ आदि शब्देन "आचार्याद्धैव विद्या विदिता साधिष्टं प्रापत्" इत्यादि ग्राह्यः।

५ उदितप्रमाणेति पाठ इति केचित्।

६ विज्ञानमिति हस्तलिखितपुस्तके वर्तते। मूलानुसारेण "ज्ञानम्" इत्येव युक्तमिति।

**नमस्कारनिमित्तस्वाशयाविष्करणार्थः–**

**वेदान्तोदरसंगूढं संसारोत्सारि वस्तुगम्।**
**ज्ञानं व्याकृतमप्यन्यैर्वक्ष्ये[1] गुर्वनुशिक्षया।।३।।**

**किंविषयं प्रकरणमिति चेत्तदुपन्यासः–**

**यत्सिद्धाविदमः[2] सिद्धिर्यदसिद्धौ न किंचन।**
**प्रत्यग्धर्मैकनिष्ठस्य याथात्म्यं वक्ष्यते स्फुटम्।।४।।**

---

**वेदान्तोदरसंगूढमिति।** वेदान्तानामुदरेष्वन्तस्संगूढं संछन्नमशुद्धबुद्धिरभिप्रायत्वात्। किं विषयं तज्ज्ञानमित्यत्राह—**वस्तुगमिति।** समस्तद्वैतकल्पनाऽधिष्ठानभूतात्मतत्त्वविषयं तदित्यर्थः। बहुभिर्व्याकृतत्वात् किमिति त्वया तत्कथ्यत इत्यत आह—**व्याकृतमपीति।** बहुभिर्व्याकृतमपि गुर्वनुशिक्षया "त्वया ग्रन्थः करणीय" इति गुरोरनुशासनात् तदाज्ञापरिपालनायाहं वक्ष्य इत्यर्थः।।३।।

सामान्यतस्सिद्धं विशेषतोऽप्रसिद्धञ्च वस्तुविषयो भवति, ब्रह्म तु निस्सामान्य-विशेषमद्वितीयत्वादतः कथन्तद्विषयत्वं प्रकरणस्येत्याक्षिपति—**किं विषयमिति।** तत्साधनायोत्तरश्लोक इत्याह—**तदुपन्यास** इति। यद्विषयमिदं प्रकरणं तस्य विषयस्यो-पन्यास इति यावत्। **यत्सिद्धाविति।** यस्य चिदात्मनस्सिद्धावन्तःकरणादावाभासोदयात् स्फुटतरव्यवहारयोग्यत्वे सति इदमः प्रमातृत्वादेरनात्मनो जडस्य सिद्धिः स्फुरणम्, यदसिद्धौ यस्यात्मनोऽन्तःकरणादावाभासोदयादप्रसिद्धौ स्फुटतरव्यवहारायोग्यत्वे सति न किञ्चनप्रमात्रादिजडं सिद्ध्यतीति शेषः।[3] तदेवं ब्रह्मणस्सामान्यतस्सिद्धिरुक्ता। अनिर्णीतप्रमाणाप्रमाणकरणिका[4] या लोकप्रसिद्धेश्चिदात्मनि तस्मिन्भावात्। यद्यपि ब्रह्मासामान्यविशेषं तथापि तस्य सच्चिदात्मादिसाधारणकारेण सिद्धावपि सर्वप्रपञ्च-विभ्रमाधिष्ठाननित्यशुद्ध-बुद्ध-मुक्ताऽद्वितीयानन्दलक्षणासाधारणाकारेणासिद्धेस्सम्भवति प्रकरणविषयत्वमिति आह—**प्रत्यग्धर्मेति।** देहादिष्वात्मानात्मविवेकादनात्मतया बहिर्भावमापद्यमानेषु प्रातिलोम्येनान्तरं[5] च वेत्ति इति प्रत्यगुच्यते साक्षी स चासौ

---

१ 'ज्ञानं वक्ष्ये' इति चन्द्रिकाकारः। अत्र ज्ञायतेऽनेनेति व्युत्पत्तिः। अत्र खलु वाक्यप्रयोगा-नुकूलव्यापारो 'वच' धातोरर्थः।

२ यत्सिद्धाविदमः—किञ्चन—"अध्यस्तस्याधिष्ठानसत्तातिरिक्तसत्ताऽनङ्गीकारात्।" "अधिष्ठानावशेषो हि नाशः कल्पितवस्तुन" इति स्मरणात्। ब्रह्मैव सर्वेषामधिष्ठानम्।

३ न किञ्चन न कस्यचन इति केचित्।

४ प्रमाणकरणीयलोक... इति चन्द्रिकापाठः। अत्र करणीय= करणविषय इति भावः।

५ प्रातिलोम्येनान्तरमञ्चतीवेति चन्द्रिकायाम्।

**विवक्षितप्रकरणार्थ प्ररोचनायानुक्तदुरुक्ता प्रामाण्यकारण-शङ्काव्युदासेन स्वगुरोः प्रामाण्योपवर्णनम्–**

**गुरुक्तो वेदराद्धान्तस्तत्र नो वच्म्यशक्तितः।**
**सहस्रकिरणव्याप्ते[1] खद्योतः किं प्रकाशयेत्।।५।।**

**गुरुणैव वेदार्थस्य परिसमापितत्वात्प्रकरणोक्तौ ख्यात्याद्य[2]-प्रामाण्यकारणाऽऽशङ्केति चेत्तद्व्युदासार्थमुपन्यासः–**

**न ख्यातिलाभपूजार्थं ग्रन्थोऽस्माभिरुदीर्यते।**
**स्वबोधपरिशुद्ध्यर्थं ब्रह्मविन्निकषाश्मसु।।६।।**

---

धर्मश्चेति प्रत्यग्धर्मः। अविद्यातत्कार्ययोः स्वात्मन्यध्यस्तयोरधिष्ठानत्वेन धारणात् प्रत्यग्धर्म एवैकोऽसाधारणः। निष्ठा पर्यवसानमस्येति प्रत्यग्धर्मैकनिष्ठस्तस्यात्मानमनतिक्रम्य वर्तत इति यथात्मं तस्य भावो याथात्म्यमारोपितप्रपञ्चस्वभावविरोधि ब्रह्मतत्त्वं तदेतदितस्ततो विस्तरेण शारीरके दर्शितमित्यस्पष्टमिह तु संक्षिप्यैकत्र विस्पष्टमुच्यते इत्याह—**वक्ष्यते स्फुटमिति**।।४।।

स्फुटं वक्ष्यत इत्युक्तत्वात् गुरुणा सम्यग्वेदान्तार्थो नोक्तो दुरुक्तो वेति गुरोरप्रामाण्यमज्ञानलक्षणं विपर्यासलक्षणं वा प्राप्तं, तद्द्वारा स्वस्यापि तत्प्राप्तमतस्तन्निरासायोत्तरश्लोक इति सम्बन्धं दर्शयति—**विवक्षितप्रकरणेति**। वक्तुमिष्टे प्रकरणस्यार्थे शिष्याणां रुच्युत्पादनायानुक्तदुरुक्तलक्षणयोरप्रामाण्यज्ञप्तिहेतुभूतयोर्व्युदासेन स्वगुरोः प्रामाण्योपवर्णनं क्रियत इत्यर्थः। गुरूक्त इति उक्तत्वादेवानुक्तिलक्षणमप्रामाण्यं नास्ति, वेदराद्धान्तस्यैवोक्तत्वात्। दुरुक्तिलक्षणप्रामाण्यञ्च नास्ति। नास्तीति दर्शितं तत् किमभ्यधिकं त्वयोच्यते इति नेत्याह—**तत्रेति**। तत्र वेदान्तराद्धान्ते **न वच्मि** अधिकमिति शेषः। तत्र हेतुरशक्तितः इति तत्र दृष्टान्तमाह—**सहस्रकिरणेति**। यद्वा तत्रानुक्तं दुरुक्तं वा न वच्मीत्यर्थः।।५।।

**परिसमापितत्वात्** कार्त्स्न्येन सम्यगुक्तत्वात्। **ख्यात्यादि**कमेवाप्रामाण्यस्य कारणमग्रहणान्यथाग्रहणपूर्वकत्वात् ख्यात्याद्यर्थितायाः। तर्हि गुरुणैव वेदान्तराद्धान्तस्योपदेशसाहस्रिकादिप्रकरणे स्फुटं सम्यगुक्तत्वात् प्रकरणोक्तिस्तवानर्थिकेत्यत आह—**स्वबोधेति**। निकषन्ति येषु हेमपरीक्षितुं ते निकषाश्मानः। इह तु ब्रह्मविद एवं

---

१ सहस्रकिरणव्याप्ते—"आकाशे इति शेषः" इति सारार्थः।
२ आदिपदेन लाभपूजानाम् ग्रहणम्।

**अनर्थानर्थहेतुपुरुषार्थतद्धेतुप्रकरणार्थसंग्रहख्यापनायोपन्यासः–**
**ऐकात्म्याऽप्रतिपत्तिर्या स्वात्मानुभवसंश्रया।**
**साऽविद्या संसृतेर्बीजं[१] तन्नाशो मुक्तिरात्मनः।।७।।**
**पुरुषार्थहेतोरवशिष्टत्वात्तदभिव्याहारः–**
**वेदावसानवाक्योत्थसम्यग्ज्ञानाऽऽशुशुक्षणिः[२]।**
**[३]दन्दहीत्यात्मनो मोहं न कर्माप्रतिकूलतः।।८।।**

---

निकषाश्मानस्तेषु स्वबोधस्य परिशोधनार्थमेतत् प्रकरणं अनुक्तौ स्वबोधस्य परैः परीक्षितुमशक्यत्वादेवं वक्तुः प्रयोजनमिदं दर्शितम्। श्रोतृणान्तु 'वक्ष्यते स्फुटमि''त्यत्रैव प्रयोजनं दर्शितम्।।६।।

तर्हि कियन्तोऽर्थाः प्रकरणेन प्रतिपाद्यन्त इत्याह—**अनर्थेति**। अनर्थोऽनर्थहेतुः पुरुषार्थस्तद्धेतुरिति प्रकरणेन चत्वारोऽर्थाः पूर्वोक्तविषयस्यैव प्रतिपादनाय प्रदर्श्यन्ते। ते चोत्तरश्लोकाभ्यां संगृह्योच्यन्त इत्यर्थः। **ऐकात्म्येति** एकोऽद्वितीय आत्मा एकात्मा तस्य भावः ऐकात्म्यं तद्विषया अप्रतिपत्तिरैकात्म्याप्रतिपत्तिरित्यविद्याया विषयो दर्शितः। इदानीमाश्रयोऽपि स एवेत्याह—**स्वात्मेति**। स्वश्चासौ आत्मेति स्वात्मा स्वशब्देना-रोपितात्मभावानहंकारादीन् व्यावर्तयति। स्वात्मा चासौ अनुभवश्चेति स्वात्मानुभवः स एव संश्रयो यस्यास्सा तथोक्ता। एवं भूताऽविद्यासंसारस्य कर्तृत्वभोक्तृत्वलक्षणस्य बीजमुपादनमनर्थहेतुञ्च दर्शयति—**साऽविद्येति**। इदानीं पुरुषार्थं दर्शयति—**तन्नाशः इति**। आत्मनो मुक्तिर्नाम तस्याः अविद्याया निवृत्तिः। नान्या भावरूपोपासना-साध्याऽस्तीत्यर्थः।।७।।

प्रतिज्ञातेषु त्रयाणामुक्तत्वाच्चतुर्थस्योपन्यासायोत्तरश्लोक इत्याह—**पुरुषार्थ-हेतोरिति। वेदावसानेति**। तत्र सम्यग्ग्रहणमुपासनाज्ञाननिवृत्त्यर्थम्। सम्यग्ज्ञानाग्नेर-विद्यातत्कार्यादिरशेषतो निवर्तकत्वलक्षणातिशयाभिप्रायेण दन्दहीतिति यङ्लुक् प्रयोगः।

---

१ संसृतिः—कर्तृत्वभोक्तृत्वरूपसंसारः। स एवानर्थहेतुः अविद्यैव मुख्यतयाऽनर्थहेतुः, किन्तु कार्यकारणयोरभेदात् तादृशसंसारोऽपि अनर्थहेतुः भवति।

२ सम्यग्ज्ञानाशुशुक्षणिः—आशुशुक्षणिः=अग्निः आशोष्टुमिच्छति, आङ्पूर्वाच्छुष्यते (दि.प.अ.) सनन्तात् (अङ्ग् शुषेः सनश्छन्दसि (उ. २/१०६) इत्यनिः। छान्दसानामपि क्वचिद्भाषायां प्रयोगः। अध्वर्युक्रतुः (२.४.४) इति ज्ञापकात्। आशु शीघ्रं आशुं व्रीहि वा शु क्षणेति। ''क्षणु हिंसायाम् (त.उ.रो.) इन् (उ. ४.११८) शु इति पूजार्थमव्ययम्। (अमरकोषः रामाश्रमी)
''ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा'' (गीता, ४.३७)

३ दन्दहीति—''समूलघातं हन्ति। एकान्तिकात्यन्तिकोच्छेदं करोतीति यावत्। (सारार्थः)

**प्रतिज्ञातार्थसंशुद्ध्यर्थं पूर्वपक्षोक्तिः। तत्र ज्ञानमभ्युपगम्यैव तावदुपन्यासः–**

**मुक्तेः क्रियाभिः सिद्धत्वाद् ज्ञानं तत्र करोति किम्।**
**कथं चेच्छृणु तत्सर्वं प्रणिधाय मनो यथा।।९।।**
**अकुर्वतः क्रियाः काम्या निषिद्धास्त्यजतस्तथा।**
**नित्यं नैमित्तिकं कर्म विधिवच्चानुतिष्ठतः।।१०।।**

---

आशुशुक्षणिसादृश्यञ्च समर्थस्यापि प्रतिबन्धवशाद्दाह्यैकदेशस्य प्रारब्धभोगादेरनिवर्तकत्वाभिप्रायेण। एवं मोक्षलक्षणपुरुषार्थसाधनं ज्ञानमेवेत्युक्तम्। तत्र कर्मणो ज्ञानेन समुच्चितस्यासमुच्चितस्य वा मुक्तिसाधनत्वं विस्तरेण निराचिकीर्षुस्संक्षिप्य तावत् प्रतिजानीते—**न कर्मेति**। तत्र हेतु**रप्रतिकूलत** इति निवर्त्येन बन्धेन स्वरूपतो विषयद्वारा वा जड़स्याप्रमाणभूतस्य कर्मणो विरोधाभावादित्यर्थः।।८।।

विमृश्य पक्षप्रतिपक्षाभ्यामर्थनिर्णय इति न्यायात् ज्ञानमेव मुक्तिसाधनं न कर्मेति प्रतिज्ञातस्यार्थस्य संशुद्ध्यर्थं पूर्वपक्षोक्तिः क्रियत इति उत्तरग्रन्थसन्दर्भस्य तात्पर्यमाह—**प्रतिज्ञातेति**। तत्र पूर्वपक्षो द्विविधः यथाऽवस्थिताऽऽत्मवस्तुविषयं ज्ञानं केचिदिच्छन्ति केचिन्नेच्छन्ति। तत्र ये तावदेवंविधं ज्ञानमभ्युपगम्यापि कर्मैव मोक्षसाधनमिति मन्यन्ते तन्मतप्रदर्शनयाभ्युपेत्यैवमुच्यत इत्यतः प्राक्तनो ग्रन्थ इत्याह—**तत्र ज्ञानमिति**। ज्ञानिनोऽपि यागादि श्रुतिचोदित[१]कर्मणामकरणे प्रत्यवायहेतूनामवश्यानुष्ठेयत्वात्तैरेव मोक्षसिद्धेर्विद्यमानमपि विज्ञानमकिञ्चित्करमित्याह—**मुक्तेरिति**।[२] कर्मणामनित्यफलसाधनानां[३] कथं नित्यमोक्षसाधनत्वमिति शङ्कते—**कथञ्चेदिति**। स्वरूपावस्थानलक्षणायाः मुक्तेरसाध्याया अपि प्रतिबन्धतिरोधानात्सिद्धिं सम्भावयाम इत्याह—**शृण्विति**।।९।।

संसारस्याविद्याहेतुत्वमभ्युपगच्छतापि कर्महेतुत्वस्य "पुण्यः पुण्येन कर्मणा भवति" "कर्मणा बध्यते जन्तु"रित्यादिश्रुतिस्मृतिभ्योऽवश्याश्रयणीयत्वात् काम्यप्रतिषिद्धविहिताकरणलक्षणनिमित्तपरिहारेण नैमित्तिकस्य तस्य स्वरूपावस्थानच्युतिलक्षणस्य परिहारात् स्वरूपावस्थितिलक्षणा मुक्तिर्ज्ञानं विनापि सिद्ध्यतीत्याह—**अकुर्वत** इति। मुक्तिर्भवतीति शेषः।।१०।।

---

१ यावज्जीवमग्निहोत्रं जुहुयादित्यादियावज्जीवादिश्रुतिचोदितकर्मणामकरणेति भावः।

२ कर्मणैव मोक्षस्य सिद्धत्वात् ब्रह्मज्ञानमनर्थकं विद्यमानस्याप्यकिञ्चित्करत्वादिति भाट्टाः प्रतिपेदिरे इति भावः।

३ "तद् यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति च श्रुतेः।

**किमतो भवति–**

**काम्यकर्मफलं तस्माद्देवादीमं न ढौकते।**

**निषिद्धस्य निरस्तत्वान्नारकीं नैत्यधोजनिम्।।११।।**

**देहारम्भकयोश्च धर्माधर्मयोर्ज्ञानिनां सह कर्मिणः समानौ चोद्यपरिहारौ–**

**वर्तमानमिदं याभ्यां शरीरं सुखदुःखदम्।**

**आरब्धं पुण्यपापाभ्यां भोगादेव तयोः क्षयः।।१२।।**

**काम्यप्रतिषिद्धकर्मफलत्वात्संसारस्य तन्निरासेनैवाशेषानर्थनिरासस्य सिद्धत्वात् किं नित्यानुष्ठानेनेति चेत्तन्न, तदकरणादप्यनर्थप्रसक्तेः–**

**नित्यानुष्ठानतश्चैनं प्रत्यवायो न संस्पृशेत्।**

**अनादृत्यात्मविज्ञानमतः कर्माणि संश्रयेत्।।१३।।**

---

अतः काम्यादिवर्जनादिसाधनात् स्वरूपेण साधनान्मुक्तिः केन द्वारेण भवतीति पृच्छति—**किमत** इति। देवादिदेवतादिफलं[१] काम्यकर्मत्यागिनमिमं न ढौकते न स्पृशति न निमित्ताभावान्निषिद्धस्य निरस्तत्वात् परिहृतत्वान्नारकीं नरकसम्बन्धिनीं जनिं शरीरग्रहणं न प्राप्नोति। उपलक्षणमेतत्, तिर्यगादिजन्मप्राप्तेरपि।।११।।

भवत्वेवमप्रारब्धफलयोः कर्मणोः परिहारः प्रारब्धफलयोस्तु कथमित्यत आह—**देहेति**। प्रारब्धफलयोः कर्मणोः भोगादेव क्षय इत्यत्र नावयोर्विवादः इत्युत्तरश्लोकस्य तात्पर्यमुक्तम्।।१२।।

काम्यप्रतिषिद्धकर्मनिमित्तत्वात् संसारस्य भवतु तत्परिहारेण परिहारः नित्यनैमित्तिकानुष्ठानं पुनरनुपयुक्तं तयोस्सुखदुःखासाधनत्वात् मोक्षस्य कर्मजन्यत्वानङ्गीकाराच्चेत्याक्षिपति—**काम्येति**। समाधत्ते—**न तदकरणादपीति**। नित्याकरणस्य संसारानर्थकरणप्रत्यवायहेतुत्वात्। प्रत्यवायपरिहारद्वारेण तदनुष्ठानमप्युपयुक्तम् कथमकरणादभावात् प्रत्यवायस्य भावस्योत्पत्तिरिति च नाशङ्कनीयम्। योग्यानुपलब्धेरेव ज्ञानहेतुत्ववदकरणस्यापि प्रत्यवायहेतुत्वोपपत्तेरिति भावः। तदेतदाह—**नित्यानुष्ठानत** इति। अवान्तरप्रकरणमुपसंहरति—**अनादृत्येति**। अभ्युपगतेऽपि ज्ञाने कर्मैव मोक्षसाधनमित्यर्थः।।१३।।

अभ्युपगतञ्चेत् ज्ञानं तत एव मुक्तिः स्वीक्रियतां "तमेवं विदित्वाऽतिमृत्युमेती"

---

१ देवत्वादि।

**अभ्युपेत्यैवमुच्यते न तु यथावस्थितात्मवस्तुविषयं ज्ञानमस्ति, तत्प्रतिपादकप्रमाणाभावात्–**

**यावन्त्यश्चेह विद्यन्ते श्रुतयः स्मृतिभिः सह।**
**विदधत्युरुयत्नेन कर्मातो भूरिसाधनम्।।१४।।**

**स्यात्प्रमाणासंभवो भवदपराधादिति चेत्तन्न, यतः–**

**यत्नतो वीक्षमाणोऽपि विधिं ज्ञानस्य न क्वचित्।**
**श्रुतौ स्मृतौ वा पश्यामि विश्वासो नान्यतोऽस्ति नः।।१५।।**

**स्यात्प्रवृत्तिरन्तरेणापि विधिं लोकवदिति चेत्तन्न। यतः–**

**अन्तरेण विधिं मोहाद्यः कुर्यात्सांपरायिकम्।**
**न तत्स्यादुपकाराय भस्मनीव हुतं हविः।।१६।।**

---

त्यादिश्रुतेरित्याशङ्क्य इदानीं द्वितीयं पूर्वपक्षमाह—**अभ्युपेत्येति**। प्रमाणाभावमेव दर्शयति—**यावन्त्य इति**। उरुयत्नेन महता तात्पर्येण **भूरिसाधनं** मोक्षं प्रत्यपि पुष्कलं कारणमित्यर्थः।।१४।।

वेदानां शक्तितात्पर्यापरिज्ञानविजृम्भितमिदं प्रमाणाभाववचनमिति शङ्कते—**स्यात्प्रमाणेति**। एतदुत्तरत्वेनोत्तरश्लोकमवतारयति—**तन्नेति**। अध्ययनविधिपरिगृहीतानां[1] वैदिकशब्दानां निष्प्रयोजनतानुपपत्तेः प्रयोजनस्य च प्रवृत्तिनिवृत्तिसाध्यत्वात् प्रवृत्तिनिवृत्त्योश्च क्रियाविषययोः परिनिष्पन्ने वस्तुन्यसम्भवात् सिद्धार्थे वेदान्तानां तात्पर्यं न सम्भवतीत्याह—**यत्नत** इति। यत्नतस्तात्पर्यतः वीक्षमाणः पर्यालोचयन्नपि ज्ञानस्य विधिं विज्ञानविषयं विधिं 'द्रष्टव्य' इत्यादिवाक्यं पश्यन्नपि प्रदर्शितप्रयोजकपर्यालोचनया न पश्यामि, कर्मप्रवृत्तिहेतुभूतकर्त्रात्मज्ञानविधिपरत्वात्तस्य मोक्षसाधनज्ञानविषयत्वाभावादित्यर्थः। श्रुतिस्मृतिनिरपेक्षाणामपि मोक्षाय ज्ञाने प्रवृत्तिस्सौगतादेर्दृश्यत इत्यत्राह—**विश्वास** इति। वेदप्रमाणानुसारिणामस्माकं श्रुतिस्मृतिव्यतिरेकेण न प्रवृत्तिरितरप्रवृत्तेर्भ्रान्तिमूलकतया प्रामाणिकत्वाऽनङ्गीकारादित्यर्थः।।१५।।

ज्ञानादज्ञाननिवृत्तेरन्वयव्यतिरेकसिद्धत्वात् किमत्र विधिनेत्याशङ्क्योत्तरश्लोकमवतारयति—**स्यात्प्रवृत्तिरिति**। सत्यमज्ञाननिवृत्तिमात्र[2]रूपं चेत् कैवल्यं तदैव

---

१ "स्वाध्यायोऽध्येतव्यः" (तै.आ. २.१५.७) इति श्रुतेः।

२ श्रुत्युक्तं "सत्यं ज्ञानमनन्तं ब्रह्म" "आनन्दं ब्रह्म" इत्यादौ सत्यज्ञानादयः सत्यत्वज्ञानत्व-अनन्तत्व-आनन्दत्वादि कश्चिद्धर्मस्य प्रतिपादनाय नोक्तमपितु ब्रह्मणि मिथ्यात्वनिराकरणाय "सत्य" शब्दः, जडत्वनिराकरणाय 'ज्ञान' शब्दः, परिच्छिन्नत्वनिराकरणाय 'अनन्त' शब्दः, दुःखत्वनिराकरणाय 'आनन्द' शब्दः कथितः।

**अभ्युपगतप्रामाण्यवेदार्थविज्जैमिन्यनुशासनाच्च–**

**आम्नायस्य क्रियार्थत्वादानर्थक्यमितोऽन्यथा।**
**इति साटोपमाहोच्चैर्वेदविज्जैमिनिः स्वयम्।।१७।।**

**मन्त्रवर्णाच्च –**

**कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः।**
**इति मन्त्रोऽपि निःशेषं कर्मण्यायुरवासृजत्।।१८।।**

**ज्ञानिनश्च वस्तुनि वाक्यप्रामाण्याभ्युपगमाद्वाक्यस्य च क्रिया-पदप्रधानत्वात्ततश्चाभिप्रेतज्ञानाभावः–**

**विरहय्य क्रियां नैव सहंन्यन्ते[1] पदान्यपि।**
**न समस्त्यपदं वाक्यं यत्स्याद् ज्ञानविधायकम्।।१९।।**

---

स्यान्नत्वेवम् अशरीरत्वलक्षणस्य कैवल्यस्य देहपातोत्तरकालीनतया अदृष्टफलत्वात् ज्ञानस्यान्वयव्यतिरेकाभ्यान्तत्साधनत्वावगमानुपपत्तेर्जीवन्मुक्तेश्च परिभाषामात्र-त्वादित्याह—**अन्तरेणेति। साम्परायिकं** पारलौकिकफलं कर्म।।१६।।

न केवलं युक्तिभिरेवाप्तवाक्यादपि वस्तुपरत्वं वेदस्य न सिध्यतीत्याह—**अभ्युपगतेति।** अभ्युपगतं प्रामाण्यं यस्य सोऽभ्युपगतप्रामाण्यः स चासौ वेदार्थविच्चेति समासः। तस्य जैमिनेरनुशासनाद्वाक्यादित्यर्थः। **आम्नायस्य** वेदस्य **क्रियार्थत्वात्** कार्यपरत्वादतोऽन्यथाऽक्रियार्थत्वे सत्यानर्थक्यं आम्नायस्य क्रियार्थत्वादानर्थक्यमत-दर्थानामितिवदता दर्शितमित्यर्थः। **साटोपं** ससम्भ्रमं आहेति क्रियाविशेषणम्।।१७।।

वेदवचनादप्येवमित्याह—**मन्त्रवर्णाच्चेति।** अध्यात्माधिकारे पठितोऽयं मन्त्रो मुंमुक्षोरपि निश्शेषमायुः कर्मणि कर्मानुष्ठान एवावासृजदुत्सृष्टवान् विनियुक्तवान् यावज्जीवं कर्मैवानुष्ठेयमिति दर्शितवानित्यर्थः।।१८।।

एवं तात्पर्याभावाद्वस्तुपरतेत्युत्तरश्लोकतात्पर्यमाह—**ज्ञानिनश्चेति।** ज्ञानिनोऽपि वस्तुनि वाक्यं प्रमाणमित्यत्र न विवादः। तच्च वाक्यं सत्येव क्रियापदे निराकांक्ष-बुद्ध्युत्पादकम्। "शुक्लां दण्डेन गाम्" इत्येतावन्मात्रप्रयोगे सति असति क्रियापदे निराकाङ्क्षबुद्ध्युत्पत्त्यदर्शनात्। एवञ्च वेदस्यापि क्रियापरत्वात् क्रियायाश्च साध्यैक-विषयत्वान्न सिद्धवस्तुपरो वेदभागोऽस्तीत्यर्थः। पदार्थानां स्वरूपेण प्रमाणान्तर-सिद्धत्वाच्छ्रोतृणान्तावन्मात्रप्रतिपत्तये पदानां प्रयोगायोगात् संसर्गबोधाय तेषां प्रयोगोऽभ्युपेयः। स च संसर्गः कारकाणां न क्रियां विनेति सर्वपदानां कार्यान्विते

---

१ न संहन्यते—"अन्वयबोधजनकवाक्यघटकतां न लभन्त" इत्यर्थः। (सारार्थः)

**ज्ञानाभ्युपगमेऽपि न दोषो यतः–**
**कर्मणोऽङ्गाङ्गिभावेन स्वप्रधानतयाऽथ वा।**
**संबन्धस्येह संसिद्धेर्ज्ञाने सत्यप्यदोषतः।।२०।।**
**यस्माद् ज्ञानाभ्युपगमानभ्युपगमेऽपि न ज्ञानान्मुक्तिः–**
**अतः सर्वाश्रमाणां हि वाङ्मनःकायकर्मभिः[१]।**
**स्वनुष्ठितैर्यथाशक्ति मुक्तिः स्यान्नान्यसाधनात्।।२१।।**
**असदर्थप्रलापोऽयमिति दूषणसंभावनायाह–**
**इति हृष्टधियां वाचः स्वप्रज्ञाध्मातचेतसाम्।**
**घुष्यन्ते यज्ञशालासु धूमानद्धधियां किल।।२२।।**

---

शक्तिरित्याह—**विरहय्येति**। न च मन्तव्यं पदानां कार्यपरत्वेऽपि वाक्यात्सिद्धं वस्तु प्रतिपत्स्यामह इति पदानामेव संहत्यार्थमभिदधतां वाक्यत्वात्तद्व्यतिरिक्त-वाक्यस्याभावादित्याह—**न समस्तीति**।।१९।।

एवं केवलेभ्यः कर्मभ्यः कैवल्यं न सिद्धवस्तुविषयं ज्ञानमस्तीत्युक्तम्। इदानीं ज्ञानाभ्युपगमेऽपि न तावन्मात्रं कैवल्यसाधनं, किन्तु कर्मसमुच्चितमित्युत्तरश्लोक-सम्बन्धमाह—**ज्ञानेति**। कर्मणो नित्यनैमित्तिकादेरङ्गत्वेन ज्ञानस्य "यदेव विद्यया करोती" तिवाक्यात्तदङ्गित्वेन वा "यज्ञेन विविदिषन्ती"त्यादि वाक्येभ्यस्स्वप्रधानतया "विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं सहे" त्यादिश्रुतिभ्यः परस्परं सम्बन्धस्य समुच्चयस्य इह कैवल्ये फले सिद्धे सत्यपि ज्ञाने कर्मणः कैवल्यसाधनत्वे न कश्चिद्दोष इत्याह—**कर्मण** इति।।२०।।

निरपेक्षं[२] ज्ञानं मुक्तिसाधनं न भवतीत्युक्तार्थोपसंहारभूतोत्तरश्लोकगतातश्शब्द-परामृष्टं हेतुं दर्शयति—**यस्मादिति**।। नान्यसाधनत्वात् केवलात् ज्ञानान्मुक्तिः स्यादित्यर्थः।।२१।।

प्रदर्शितं पूर्वपक्षमुपहसितुमुत्तरश्लोक इत्याह—**असदर्थेति**। इत्येवं विधाः पूर्वोक्ताः **वाचो यज्ञशालासु घुष्यन्ते किलेति** सम्बन्धः, वक्तृद्वारा वाचां दूषणं सम्भावयति इति **हृष्टधियामिति**। वित्तपुत्रकलत्रादिपरित्यागपुरस्सरं ज्ञाननिष्ठालक्षण-

---

१ वाङ्मनः कायकर्मभिः—"तत्र वाक्कर्माणि सत्यमितहितभाषणादीनि गुरुपूर्वकनिर्दोष-वेदाध्ययनानि च। मनः कर्माणि प्रसादभाव शुद्ध्यादीनि। कायकर्माणि शौचाचारादीनि नित्यनैमित्तिकप्रायश्चित्ताचरणादीनि च यथायथं ज्ञेयानि। (सारार्थः)

२ कर्मनिरपेक्षमिति भावः।

**दूषणोपक्रमावधिज्ञापनायाह–**

**अत्राभिदध्महे दोषान् क्रमशो न्यायबृंहितैः।**
**वचोभिः पूर्वपक्षोक्तिघातिभिर्नातिसंभ्रमात्।।२३।।**

---

बहुलायासमन्तरेण कर्मभ्य एवं स्वर्गापवर्गावस्माकं सुखेनैव सिध्यत इति हृष्टा धीर्येषां तेषां एतावता तद्वचसां कथमप्रामाणिकत्वमित्यत आह—**स्वप्रज्ञेति**। स्वकीया प्रज्ञा युक्त्युपदेशबहिष्कृता कर्मनिमित्तत्वात् संसारस्य तत्परिहारेण परिहारः स्यादिति केवलोत्प्रेक्षालक्षणा तया आध्मातमुपबृंहितं चेतो येषान्ते तथोक्ताः। तत्प्रज्ञायाः यथार्थायाः अभावे श्रुतिस्मृतिलिङ्गानि सन्तीति सूचयति—**इति धूमानद्धेति**। धूमेनानद्धा आबद्धा सम्यग्ग्रहणे प्रतिबद्धा धीर्येषान्ते धूमानद्धधियः। एवं हि श्रौतानि स्मार्तानि लिङ्गानि च दृश्यन्ते "अग्निमुग्धो हैव धूमतान्ताः स्व लोकं न प्रतिप्रजानाति"। "प्लवा ह्येते अदृढा यज्ञरूपाः" "न तं विन्दाथः" "अविद्यायामन्तरे वर्तमानाः"

"यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः।
वेदवादरताः पार्थ नान्यदस्तीति वादिनः।।" —गीता, २/४२.

इत्येवमादीनि। तस्मात्तदीयं ज्ञानमयथार्थमेवातस्तद्वाचस्सम्भावितदोषा एवेति भावः।।२२।।

सम्प्रति सम्भावितदोषान् प्रकटीकर्तुमुत्तरग्रन्थसन्दर्भ इति तात्पर्यमाह—**दूषणेति**। व्युत्क्रमदोषं परिहरति—**क्रमश इति**। स्वपक्षस्थापनोपयोगिन्या च सम्पन्नतान्दर्शयति। न केवलमेतावदेव परपक्षप्रतिक्षेपसामर्थ्यमप्यस्तीत्याह—**पूर्वपक्षेति**। इदानीं छल[1]जातिनिग्रहस्थानादिभिर्नपरोक्तयो निरस्यन्त इत्याह—**नातिसम्भ्रमादिति**। तेनैकत्वनिर्णयावसानानि पदकरूपाण्यस्मद्वचांसीति भावः।।२३।।

---

१ **छलम्**—वचनविधातोऽर्थविकल्पोपपत्त्या छलम्। (न्या.द., १.२.१०)
यथा बालोऽयं नवकम्बलविशिष्टः इति नवीनकम्बलमुद्दिश्य कथिते सति, उत्तरं भवति एकैवास्य कम्बलोऽस्ति, न तु नवसंख्यकः इति छलम्।
**जातिः**—असदुत्तरमिति भावः। न त्वत्र गोत्वादयो ग्राह्याः। "साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः।" (न्या.द. १.२.१८)
प्रयुक्ते हि हेतौ यः प्रसङ्गो जायते सा जातिः। स च प्रसङ्ग साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानमुपालम्भः प्रतिषेधः इति। उदाहरणसाधर्म्यात् साध्यसाधनं हेतुः इत्यस्योदाहरणवैधर्म्येण प्रत्यवस्थानम्। तथा उदाहरणवैधर्म्यात्साध्यसाधनं हेतुः इत्यस्योदाहरणवैधर्म्यात्साध्यसाधनं हेतुः इत्यस्योदाहरणसाधर्म्येण प्रत्यवस्थानम्। प्रत्यनीकभावाज्जायमानोऽर्थो जातिरिति। (न्या.द.वा.भा. १.२.१८)
**निग्रहस्थानम्**—शास्त्रार्थे पराजयस्य हेतुभूतवाक्यम् विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम्। (न्या.द. १.२.१९)

**चतुर्विधस्यापि कर्मकार्यस्य मुक्तावसंभवान्मुक्तेर्न कर्मकार्य-त्वम्–**

**अज्ञानहानमात्रत्वान्मुक्तेः कर्म न साधनम्।**
**कर्मापमार्ष्टि नाज्ञानं तमसीवोत्थितं तमः।।२४।।**

**कर्मकार्यत्वाभ्युपगमेऽपि दोष एव–**

**एकेन वा भवेन्मुक्तिर्यदि वा सर्वकर्मभिः।**
**प्रत्येकं चेद्वृथाऽन्यानि सर्वेभ्योऽप्येककर्मता।।२५।।**

---

नित्यसिद्धात्मस्वरूपावस्थानप्रतिबन्धकसकार्याज्ञाननिवृत्तिव्यतिरेकेणो[१]त्पत्त्याप्ति-विकृतिसंस्कृतिलक्षणचतुर्विधकर्मकार्यरूपताभावान्मुक्तेर्न कर्मसाध्यत्वमित्याह—**चतुर्विध-स्यापीति**। स्वरूपावस्थानस्य नित्यसिद्धतया कर्मासाध्यत्वेऽपि अज्ञाननिवृत्तेरागन्तुक्याः कर्मसाध्यता किं न स्यादित्यत आह—**कर्मेति**। तत्र दृष्टान्तमाह—**तमसीवेति**। तमसि सत्येवोत्थितं रशनोरगभ्रमादि यथा तमो न निवर्तयति तद्धेतुकत्वात्। एवमज्ञानहेतुकं कर्म नाज्ञानं निवर्तयति। तेन स्वभावतो विषयतश्च विरोधाभावादित्यर्थः।।२४।।

**सर्वेभ्योऽपीति** अग्निहोत्र-दर्शपूर्णमास-चातुर्मास्य-पशु-सोमादीनां मिलितानां मोक्षसाधनत्वे सत्येकमुमुक्षुनियोगविषयतयैककर्मत्वं प्राप्तम्, तच्चायुक्तम्। सर्वाश्रम-कर्मणामेकेनाऽऽश्रयिणाऽनुष्ठानशक्यत्वात्। प्रत्येकाश्रमविहितसर्वकर्मभ्यो मोक्ष इति पक्षेऽपि सामग्रीवैचित्र्यात् फलेऽपि वैचित्र्यं प्राप्नोति। न च तद्युक्तम् मुक्तेरेकरूपत्वात्। न चोक्त विकल्पदोषदुष्टत्वादन्तःकरणशुद्धिद्वारा कर्मणां ज्ञानसाधनत्वमपि न स्यात्। अपि शङ्कनीयं चिरचिरतरचिरतमत्वादल्पत्वमहत्वादिभिश्शुद्धेः कालतः स्वरूपश्च वैचित्र्याभ्युपगमादिति भावः।।२५।।

नित्यनैमित्तिकानां फलान्तराश्रव(य)णात् मोक्षस्य च फलत्वेन साधनाकाङ्क्षत्वा-

---

तत्र खलु–प्रतिज्ञाहानिः, प्रतिज्ञान्तरः, प्रतिज्ञाविरोधः, प्रतिज्ञासंन्यासः, हेत्वन्तरः, अर्थान्तरः, निरर्थकः, अविज्ञातार्थः, अपार्थकः, अप्राप्तकालः, न्यूनः, अधिकः, पुनरुक्तः, अननुभाषणः, अज्ञानम्, अप्रतिभा, विक्षेपः, मतानुज्ञा, पर्यनुयोज्योपेक्षणम्, निरनुयोज्यानुयोगः, अपसिद्धान्तः, हेत्वाभासः, इति द्वाविंशति प्रकाराणि निग्रहस्थानानि वर्तन्ते।

१ **उत्पत्तिः**—यथा घटं करोति। अत्र क्रियायाः फलं घटोत्पत्तिः।
**आप्तिः** (प्राप्तिः)—ग्रामं गच्छति, गमनक्रियायाः फलम् ग्रामप्राप्तिः।
**विकृतिः**—तण्डुलं पचति–अत्र पाकक्रियायाः फलं तण्डुलविक्रियात्मकः विकारः।
**संस्कृतिः**—ब्रीहीन् प्रोक्षति, अत्र प्रोक्षणक्रियायाः फलं ब्रीहिगत-संस्कारः।

**सर्वप्रकारस्यापि कर्मण उत्पत्तित[१] एव विशिष्टसाध्याभिसंबन्धान्न पारिशेष्यसिद्धिः[२]–**

**दुरितक्षपणार्थत्वान्न नित्यं स्याद्विमुक्तये।**
**स्वर्गादिफलसंबन्धात्काम्यं कर्म तथैव न।।२६।।**

---

दन्योन्याकाङ्क्षया सम्बन्धः पारिशेष्यन्यायेन सिद्ध्यति। एवमन्येषामप्यज्ञानफलानां कर्मणां मोक्षसाधनत्वं सेत्स्यति इत्याशङ्क्याह—**सर्वेति**। इष्टसाधनरूपत्वाद्विधेयस्य साध्यस्य चेष्टत्वान्मोक्षस्य चासाध्यत्वादग्निहोत्रं जुहोतीत्याद्युत्पत्तिविधिवाक्यादेव विशिष्टेष्टसाधनत्वप्रतीतेरश्रूयमाणफलकेष्वपि विश्वजिदादिषु[३] स्वर्गकामाधिकरणन्यायेन[४] स स्वर्गस्स्यादिति स्वर्गस्यैवं फलत्वेन श्रवणान्न पारिशेष्यसिद्धिरित्यर्थः। "येन केनचन यजेतापि दर्विहोमे नानुपहतमना एव भवती"त्यादिवाक्येभ्यो नित्यानां कर्मणां दुरितक्षयणार्थत्वं[५] द्रष्टव्यम्।।२६।।

---

१ उत्पत्तितः—कर्मस्वरूपमात्रबोधको विधिरूत्पत्तिविधिः, यथा—"अग्निहोत्रं जुहोती"ति। ततः उत्पत्तितः इति भावः।
स्वर्गकामो यजेतेत्यादिविधितः (सारार्थः)
उत्पत्तित एव—"उत्पत्तिसिद्ध्यनन्तरं विनियोगविधिना विशिष्टसाध्याभिसंबन्धस्य सिद्धत्वात्।" (नै.सि. विवरण)

२ पारिशेष्यन्यायसिद्धिः—"पारिशेष्य इत्यत्र भावार्थो न विवक्षितः। परिशेष इत्यर्थः। (सारार्थः) दुरितक्षपणार्थत्वाद् इत्युपलक्षणं प्रत्यवायपरिहारस्यापि। (विद्यासुरभिः)

३ यथा विश्वजिदधिकरणे हि "विश्वजिता यजेत" इत्यत्र फलस्याश्रवणात्फलमन्तरेण च विधिश्रुतेरनुपपत्तेरवश्यं फले कल्पयितव्ये सर्वाभिलषितत्वेन स्वर्गः फलमित्युक्तम्। एवं च यत्रार्थवादवाक्ये विधिवाक्ये फलं न श्रूयते तत्र स्वर्गः फलं कल्प्यत इति प्रकृतन्यायविषयः। एवमन्यत्राप्यूह्यमिति। (८५७, लौकिकन्यायसाहस्री)

४ **स्वर्गकामाधिकरणम्** मीमांसादर्शनस्य (पूर्व) षष्ठाध्याये यजेत स्वर्गकाम इति स्वर्गस्यैव फलत्वं निर्णितः, न तु यागस्य इति भावः।

५ **नित्यानि** अकरणे प्रत्यवायसाधनानीति वेदान्तसारकारः (वे.सा. ७) विषयेऽस्मिन् वार्तिककारः —
नित्यानां चाक्रियाऽभावः प्रत्यवायस्ततः कुतः।
न ह्यभावाद्भवेद्भावो मानं यस्मान्न विद्यते।।
पूर्वोपचितकर्मभ्यस्तस्मात्कर्तारमेति या।
प्रत्यवायक्रिया तस्या लक्षणार्थः शता भवेत्।।
नित्यानामक्रिया यस्माल्लक्षयित्वैव सत्वरा।
प्रत्यवायक्रियां तस्माल्लक्षणार्थे शता भवेत्।। (तै.भा,वा., १.१९,२०,२१)

**प्रमाणासंभवाच्च–**

**साध्यसाधनभावोयं वचनात्पारलौकिकः।**
**नाश्रौषं मोक्षदं कर्म श्रुतेर्वक्त्रात्कथंचन।।२७।।**

**अभ्युपगताऽभ्युपगमाच्च श्वश्रूनिर्गच्छोक्तिवद्भवतो[1] निष्प्रयोजनः प्रलापः–**

**निषिद्धकाम्ययोस्त्यागस्त्वयाऽपीष्टो यथा मया।**
**नित्यस्याफलवत्त्वाच्च[2] न मोक्षः कर्मसाधनः।।२८।।**

**एवं तावत् मुक्तेः क्रियाभिः सिद्धत्वात् इति निरस्तोऽयं पक्षोऽथाधुना सर्वकर्मप्रवृत्तिहेतुनिरूपणेन यथावस्थितात्म-**

---

मोक्षोद्देशेन कर्मणां विधानाभावादपि न तत्साधनत्वमित्याह—**प्रमाणेति**।।२७।।

यदुक्तम् ''अकुर्वतः क्रियाः काम्याः'' इति तदस्माभिरभ्युपगतमेव त्वयाप्युक्तं नाधिकमित्याह—**अभ्युपगतेति**। ननु कर्मणां मोक्षसाधनत्वं त्वयाऽनभ्युपगतमपि मयोक्तमिति तत्राह—**नित्यस्येति**।।२८।।

वृत्तानुद्रवणपूर्वकं वर्तिष्यमाणस्य ग्रन्थसन्दर्भस्य तात्पर्यमाह—**एवं तावदिति**। इदानीं सर्वकर्मसु प्रवृत्तौ यो हेतुर्मिथ्याज्ञानादिलक्षणस्तस्य प्रवर्तकस्य निरूपणेन कर्मणामविद्याकार्यतया विद्या साध्याऽविद्यानिवृत्तिलक्षणमोक्षोपयोगात् कर्मासमुच्चिता-भ्यासनिरपेक्षात्मज्ञानादेव कैवल्यमिति प्रदर्श्यत इत्यर्थः। ननु कथं कर्मसु प्रवृत्तेर्मिथ्याज्ञानं

---

अत्र आनन्दगिरिः—

यदि यथावन्नित्यनैमित्तिकानुष्ठानं स्यात्तदा सञ्चितदुरितक्षयोऽपि भवेन्न चायं विहितकार्यीततः प्रत्यवायी भविष्यतीति शिष्टैर्लक्ष्यते तेन शतृप्रत्ययस्यान्यथाऽपि सिद्धत्वान्न तद्बलादकरणस्य प्रत्यवायहेतुत्वसिद्धिरित्यर्थः। (तै.भा.वा.आ. १.२१)

१ श्वश्रूनिर्गच्छोक्तिवत्— यत्र परकृतनिषेधं निराकृत्य स्वयं निषेधति, तत्रायं न्यायः प्रवर्तते। यथा—कश्चिद् भिक्षामटते माणवाकाय भिक्षाम्प्रत्याचक्षाणां स्वस्नुषां भर्त्सयित्वा श्वश्रुः पुनस्तमाहूय समागते तस्मिन्नास्ति भिक्षा निर्गच्छेति तथैव प्रत्याचष्टे, तथा प्रकृतेऽपि। (२६७, लौकिकन्यायसहस्री)

२ नित्यस्याफलवत्वाच्च—अत्रोक्तस्य नित्यस्याफलवत्वं च दूरितक्षयादिव्यतिरिक्तभाव-विषयमेव। अन्यथा ''नित्यानुष्ठानतश्चेमं प्रत्यवायो न संस्पृशेत्'' इत्यनेन विरोधः स्यात्। (विद्यासुरभिः)

**वस्तुविषयकेवलज्ञानमात्रादेव सकलसंसारानर्थनिवृत्तिरितीमं पक्षं द्रढयितुकाम आह–**

**इह चेदं परीक्ष्यते, 'किं यथा प्रतिषिद्धेषु यादृच्छिकेषु च कर्मसु स्वाभाविकस्वाशयोत्थनिमित्तवशादेवेदं हितम्, इदमहितमिति परिकल्प्य मृगतृष्णिकोदकपिपासुरिव लौकिकप्रमाणसिद्धान्येव च साधनान्युपादायेष्टप्राप्तयेऽहितनिवृत्तये च स्वयमेव प्रवर्तते निवर्तते च, तथैवाऽदृष्टार्थेषु काम्येषु नित्येषु च कर्मसु, किं वाऽन्यदेव तत्र प्रवृत्तिनिवृत्तिनिमित्तमिति।।**

**किं चातो यद्येवं शृणु। यदि तावद्यथावस्थिवस्तु सम्यग्ज्ञानं प्रमाणभूतमागमिकं लौकिकं[1] वां प्रवृत्तिनिमित्तमिति निश्चय:,**

---

हेतुस्तेषां यथायोगं लौकिकवैदिकप्रमाणाज्ञानमूलत्वादित्याशङ्क्य कर्मप्रवृत्तिहेतुनिरूपणार्थं विमृशति—**इह चेति**। प्रतिषिद्धेषु कलञ्जभक्षणादिषु स्वाभिमत: शास्त्रानाधेयो[2] यस्स्वाभिप्राय: अहमप्राप्तसुखोऽपरिहृतदु:खश्च तेन मम प्राप्तव्यम् परिहरणीयं चास्तीति मिथ्याज्ञानं तदुत्थनिमित्तं रागादितद्वशात् प्रवृत्तेर्विषयविशेषालम्बनत्वादिदं पुरोवर्तिहितमनुकूलमिदं चाहितम्प्रतिकूलमिति कल्पनामात्रेण निश्चित्य स्वयमेव शास्त्रनिरपेक्षं लौकिकप्रमाणसिद्धान्येव च साधनानि साधनत्वेनोपादाय यथा प्रवर्तते तथैवादृष्टार्थेष्वन्वयव्यतिरेकासिद्धफलेषु तान्येवाह—**काम्येष्विति**। किं प्रर्वतत इति शेष:। एवं सिद्धान्तहृदयमभिधाय पूर्वपक्षहृदयमाह—**किं वाऽन्यदिति**। शास्त्रादिजनितसम्यग्ज्ञानमित्यर्थ:। ''सन्दिग्धं सप्रयोजनञ्च विचार्यमि''[3]ति न्यायात्। सन्देहप्रदर्शनानन्तरं प्रश्नपूर्वकं प्रयोजनं दर्शयति—**किञ्चात इत्यादिना**। विषयतो वस्तुतश्च ज्ञानस्य निर्दोषतामाह—**यथा...वस्तु...प्रमाणभूतमिति**। भवत्वेवं कर्मसु सम्यग्ज्ञानात् प्रवृत्तिस्तथापि सर्वकर्मसंन्यासेऽपि सम्यग् ज्ञानेनैव प्रवृत्तिर्भविष्यति, तस्यापि निवृत्ति-

---

१ लौकिकमागमिकं वा—लौकिकं लोकव्यवहारोपयोगितया प्रसिद्धान्वयव्यतिरेकानुविधायि। आगमिकं शास्त्रजन्यं शाब्दबोधात्मकम्। (सारार्थ:)

२ शास्त्रज्ञानानाधेय इति भाव:।

३ सन्दिग्धं सप्रयोजनञ्च विचारमर्हतीति न्याय: —
यथा विचारविषयत्वं हि नाज्ञातस्य नापि निश्चितस्य, किन्तु सन्दिग्धस्येति भाव:। (भु.लौ.न्या.सा. ३८७)

निवृत्तिशास्त्रं च नाभ्युपगम्यते तदा हताः कर्मत्यागिनो, भ्रान्तिविज्ञानमात्रावष्टम्भात्, अलौकिकप्रमाणोपात्तकर्मानुष्ठानत्यागित्वाच्च। अथ मृगतृष्णिकोदकपिपासुप्रवृत्तिनिमित्तवदयथावस्तु भ्रान्तिविज्ञानमेव सर्वप्रवृत्तिनिमित्तं, तदा वर्द्धामहे वयं, हताः स्थ यूयमिति–

हितं संप्रेप्सतां मोहादहितं च जिहासताम्।
उपायान्प्राप्तिहानार्थान् शास्त्रं भासयतेऽर्कवत्।।२९।।

एवं तावत्प्रत्यक्षानुमानागमप्रमाणावष्टम्भादेवात्मनो निरति-

---

शास्त्रमूलत्वादित्याशङ्क्य मैवमन्तस्य यावज्जीवादिवचनविरोधादनधिकृतान्धपङ्ग्वादिविषयत्वोपपत्तेरित्यभिप्रेत्य परिहरति—**निवृत्तीति**। आत्मनोऽशनायाद्यतीतत्वे कर्तृत्वाद्यभावे कर्मत्यागे च मूलप्रमाणाभावाभिप्रायेण भ्रान्तिविज्ञानमात्रावष्टम्भादित्युक्तम्। अलौकिकं प्रमाणं ''यावज्जीवमग्निहोत्रं जुहुयादि''त्यादि वैदिकं वचनम्।

कस्तर्हि निर्णय इत्यत आह—**हितमिति**। वैषयिकसुखाभावेऽपि सुषुप्ते सुखमहमस्वाप्समित्यात्मनस्सुखरूपतया स्वानुभवसिद्धत्वात् परप्रेमास्पदत्वेन सुखरूपताऽनुमानाद् ''एषोऽस्य[१] परम आनन्द'' इत्याद्यागमतश्च[२] तस्य निरतिशयसुखाव्यतिरेकसिद्धेः ''अजम्'', ''अजरमभयं'', ''शोकान्तरमि''त्यादिभ्यश्च स्वभावत एव परिहृताशेषानर्थत्वादेवं भूतात्मयाथात्म्यानवबोधादेव हितप्रेप्सादुःखजिहासा च न पुनश्शास्त्रमेव ''यूयं कर्त्तारो भोक्तारश्च युष्माकं प्राप्तव्यम् परिहरणीयञ्चास्ति तस्माद्युष्मभिर्हितं प्रेप्सितव्यमहितञ्च जिहासितव्यम् यूयं वर्णाश्रमवयोऽवस्थाविशेषवन्त इति कर्तृत्वभोक्तृत्वादिकमुत्पादयति बोधयति वा। किन्तु स्वयमेवाध्यारोपितकर्तृत्ववर्णाश्रमावस्थाविशेषाणां पुरुषाणां स्वयमेव प्रेप्सितस्य जिहासितस्य चाहितस्य प्राप्तये परिहाराय च साधनं जिज्ञासमानानामिदं च साधनमिति साध्यसाधनसंबन्धमात्रं यथावस्थितमर्कवत् प्रवृत्तिनिवृत्तिहेतुतत्सत्यत्वादावुदासीनतया प्रकाशयतीत्यर्थः।।२९।।

पूर्वश्लोकोक्तमर्थं सोपस्कारमनुद्य वर्तिष्यमाणस्य ग्रन्थस्य तात्पर्यमाह—**एवन्तावदिति**। शास्त्रञ्चेत्युत्तरार्द्धानुवादः। पदार्थानां शक्तिमात्मनः कर्तृत्वभोक्तृत्वादिशक्तिं स्वर्गादेश्च साध्यत्वशक्तिं साधनत्वशक्तिञ्च नाधत्ते, किन्तु प्रकाशयत्येवे-

---

१ ''एषो यस्य परम आनन्द'' इति हस्तलिखित पुस्तके वर्तते। परन्तु तथा पाठ उपनिषत्सु न लब्धः चन्द्रिकायामुपनिषदि च वर्तमानपाठः वर्तते।

२ आदिपदेन''आत्मैवानन्दः''''आनन्दःआत्मा'' (तै. २.५.१) ग्राह्यः।

शयसुखहिताव्यतिरेकसिद्धेः, अहितस्य च षष्ठगोचरवत्स्वत[1] एवानभिसंबन्धाद्, एवंस्वाभाव्यात्मानवबोधमात्रादेव हितं मे स्यादहितं मे मा भूदिति मिथ्याज्ञानं[2] तूषरशुक्तिकानवबोधोत्थमिथ्याज्ञानवत्प्रवृत्तिनिमित्तमित्यवधारितम्। शास्त्रं च न पदार्थशक्त्याऽऽधानकृदित्येतस्यैवोत्तरत्र प्रपञ्च आरभ्यते–

न परीप्सां जिहासां वा पुंसः शास्त्रं करोति हि।
निजे एव तु ते यस्मात् पश्वादावपि[3] दर्शनात्।।३०।।

उक्तं तावदनवबुद्धवस्तुयाथात्म्य एव विधिप्रतिषेधशास्त्रेष्वधिक्रियत इति। अथाधुना विषयस्वभावानुरोधेन प्रवृत्त्यसंभव वक्तुकाम आह–

लिप्सतेऽज्ञानतो लब्धं कण्ठे चामीकरं यथा।
वर्जितं च स्वतो भ्रान्त्या छायायामात्मनो यथा।।३१।।

---

त्युक्तमित्यर्थः। **निजे एवेति।** शास्त्राधेयविज्ञानं विनैव पश्वादीनामिव तयोस्सद्भावादित्यर्थः।।३०।।

पूर्वं कर्मप्रवृत्तिहेतुनिरूपणेन कैवल्यस्य कर्मसाध्यत्वं निराकृतम्। अधुना अविद्याविषयात्मस्वरूपपर्यालोचनयापि कर्मसु प्रवृत्त्यसम्भवन्दर्शयितुमाह— **उक्तमित्यादिना।** तदेतत्प्राप्तव्यस्य परिहार्यस्य च प्रत्येकं **द्वैविध्यं** दर्शयति—

---

१ षष्ठगोचरवत् = षष्ठप्रमाणगोचरवत् = अभाववत्। वेदान्तदर्शनानुसारेण षष्ठप्रमाणन्तु अनुपलब्धिरेव अभाव एव तस्य विषय इति भावः।

२ मिथ्याज्ञानं तु = मिथ्याज्ञानमेव (सारार्थः)
"एवं च "हेतुदर्शनाच्च" इति सूत्रमप्युक्तार्थे मानं लेभे। तदर्थस्तु यत्र लोभमूलकत्वं दृश्यते तत्र हेतुदर्शनान्न वेदमूलकत्वेन प्रामाण्यम्।" (सारार्थः)

३ पश्वादावपि—पश्वादिभिश्चाविशेषात्। तथा हि पश्वादयः शब्दादिभिः श्रोत्रादीनां संबद्धे सति शब्दादिविज्ञाने प्रतिकूले जाते ततो निवर्तन्ते, अनुकूले च प्रवर्त्तन्ते—यथा दण्डोद्यतकरं पुरुषमभिमुखमुपलभ्य मां हन्तुमयमिच्छतीति पलायितुमारभन्ते, हरिततृणपूर्णपाणिमुपलभ्य तं प्रत्यभिमुखी भवन्ति, एवं पुरुषा अपि व्युत्पन्नचित्ताः क्रूरदृष्टीनाक्रोशतः खड्गोद्यतकरान् बलवत उपलभ्य ततो निवर्तन्ते, तद्विपरीतान् प्रति अभिमुखीभवन्ति। अतः समानः पश्वादिभिः पुरुषाणां प्रमाणप्रमेयव्यवहारः। पश्वादीनाञ्च प्रसिद्ध एवाविवेकपूर्वकः प्रत्यक्षादिव्यवहारः। तत्सामान्यदर्शनाद् व्युत्पत्तिमतामपि पुरुषाणां प्रत्यक्षादिव्यवहारस्तत्कालः समान इति निश्चीयते। (अध्यासभाष्य, ब्र.सू.)

भयान्मोहावनद्धात्मा रक्षः परिजिहीर्षति।
यच्चापरिहृतं वस्तु तथाऽलब्धं च लिप्सते।।३२।।

तत्रैतेषु चतुर्षु विषयेषु प्राप्तये परिहाराय च विभज्य न्यायः प्रदर्श्यते–

प्राप्तव्यपरिहार्येषु ज्ञात्वोपायान् श्रुतेः पृथक्।
कृत्वाऽथ प्राप्नुयात्प्राप्य तथाऽनिष्टं जहात्यपि।।३३।।

अथावशिष्टोः स्वभावतः–

वर्जितावाप्तयोर्बोधाद्धानप्राप्ती न कर्मणा।
मोहमात्रान्तरायत्वात् क्रियया ते न सिध्यतः।।३४।।

कस्मात्पुनरात्मवस्तुयाथात्म्यावबोधमात्रादेवाभिलषितनिरतिशय-

---

**लिप्सत** इति। स्वतः प्राप्तमेव कण्ठगतं सुवर्णभूषणमज्ञानतोऽप्राप्तं प्राप्तुमिच्छति। तथाऽविद्यमानत्वादेव स्वत एव वर्जितं स्वकीयच्छायायां भ्रान्त्यारोपितं राक्षसं मोहावृत्तान्तःकरणो भयवशात् परिहर्त्तुमिच्छति। यच्चान्यद्वस्तुतोऽपरिहृतञ्चोरव्याघ्राद्यलब्धञ्च वित्तादिपरिहर्तुं प्राप्तुञ्चेच्छतीति द्वितीयमपि द्विविधन्दृश्यत इत्यर्थः।।३१-३२।।

भवत्वेवम्, तथापि तत्र तस्य कथं प्राप्तिः परिहारो वेत्याकाङ्क्षायामुत्तर-श्लोकाभ्यामत्रोपायः प्रदर्श्यत इत्याह—**तत्रैतेष्विति**।[१] तत्र वस्तुतोऽप्राप्ते स्वर्गादावपरिहृते च निरयादावागमतस्तदुपायान् विभागेन परिज्ञाय तदनन्तरमनुष्ठायानुष्ठानजनितादृष्टवशात् कालान्तरे तत्फलं लभते।।३३।।

स्वतस्त्वपहृतावाप्तयोरजानत एवातथारूपेणाभिमतयोर्बोधादज्ञाननिवृत्त्या प्राप्तिपरिहारौ, न तु कर्मणा। मोहमात्रस्यैव तत्र प्रतिबन्धकत्वान्न[२] तत्र कर्मसाध्यत्व-मित्यर्थः।।३४।।

स्यातां नाम स्वतः प्राप्तस्यात्मनस्स्वत एव परिहृतस्य चाऽनात्मनो ज्ञानमात्रादेव प्राप्तिपरिहारौ निरतिशयानन्दलक्षणस्य निरस्ताशेषानर्थलक्षणस्य कथं ज्ञानादेव सिद्धिस्तथाभूतस्य मोक्षस्य संसारदशायामनुपलम्भात्। साध्यत्वप्रतीतेरित्याशङ्कायामुत्तर-श्लोकेनोत्तरमुच्यत इत्याह—**कस्मादिति**। यद्वा शुक्तिकानिकटोपसर्पणादिक्रियया रजतादिविभ्रमाणां तत्कारणाज्ञाननिवृत्त्या निवृत्तिदर्शनादात्माज्ञाननिवृत्तिरपि कर्मणा

---

१ तमेति हस्तलिखितपुस्तकपाठः।

२ प्रवृत्तिबन्धकत्वादिति हस्तलिखितपुस्तकपाठः।

**सुखप्राप्तिनिःशेषदुःखनिवृत्ती भवतो न तु कर्मणेत्युच्यते–**

**कर्माज्ञानसमुत्थत्वान्नालं मोहापनुत्तये।**

**सम्यग्ज्ञानं विरोध्यस्य तामिस्रस्यांशुमानिव ।। ३५ ।।**

**नन्वात्मज्ञानमप्यविद्योपादानम्, न हि शास्त्रशिष्याचार्याद्यनुपादायाऽऽत्मज्ञानमात्मानं लभत इति। नैष दोषो, यतः आत्मज्ञानं हि स्वतःसिद्धपरमार्थात्मवस्तुस्वरूपमात्राश्रयादेव अविद्यातदुत्पन्नकारकग्रामप्रध्वंसि स्वात्मोत्पत्तावेव शास्त्राद्यपेक्षते नोत्पन्नमविद्यानिवृत्तौ। कर्म पुनः[१] स्वात्मोत्पत्तावुत्पन्नं च। न हि क्रिया कारकनिस्पृहा कल्पकोटिव्यवहितफलदानाय स्वात्मानं बिभर्ति।**

---

किं न स्यादित्याशङ्क्य परिहरति—**कस्मादित्यादिना**। अयं भावः—उक्तलक्षणस्य मोक्षस्यात्मस्वभावत्वेऽप्यज्ञानपिहितत्वात् संसारदशायामप्रतिभासः। न तु तस्य तदानीमभावात् पूर्वोक्तप्रत्यक्षादीना प्रमाणेन तत्स्वभावत्वनिर्धारणात्। तस्य चाज्ञानस्य ज्ञानादेव निवृत्तिस्तथापि लोके दृष्टत्वात्। निकटोपसर्पणादेस्तु न साक्षादज्ञाननिवर्तकत्वं सम्यक् ज्ञानोत्पत्तिमात्रकारणत्वेनान्यथा सिद्धत्वात्। तत्रस्थस्यैवाधिष्ठानावलोकने कदाचित् भ्रमनिवृत्तेर्निकटोपसृप्तस्याप्यधिष्ठानानवलोकने भ्रमानिवृत्तेश्चेति।।३५।।

अज्ञानोत्थत्वाच्चेत् कर्मणामविद्यानिवृत्तावहेतुत्वं तर्हि विद्यायां अपि तदुत्थत्वाऽविशेषात् तन्निवर्तकत्वं न स्यादिति शङ्कते—**नन्विति**। कुत एतदित्यत आह—**नहीति**। अविद्याकार्यत्वाविशेषेऽपि परमार्थवस्त्वालम्बनतया विषयतो विरोधादविद्यानिवर्त्तकत्वं न विरुध्यत इति परिहरति—**नैष दोष** इति। तत्राजडसत्यात्मविषयतया जडानृतानात्मविद्यारूपाऽविद्याविरोधितामाह—**स्वतस्सिद्धपरमार्थेति**। आत्मनां परस्परभेदेन ब्रह्मणो भेदेन च विद्याविषयत्वे द्वैतविरोधाभावमाशङ्क्याह—**वस्तुस्वरूपेति**। विभ्रमेऽप्यधिष्ठानस्य सामान्येन स्फुरणात्तदालम्बनत्वमस्तीति तद्व्यावृत्तये मात्रग्रहणम्। किञ्च विद्या स्वजन्मन्येवाऽविद्यामपेक्षते न तु फले कर्म पुनस्स्वोत्पत्तौ फले चाविद्यामपेक्षत इति वैलक्षण्यान्तरमाह—**स्वोत्पत्ताविति**।[२] क्रिया चेत् फलसाधनं विद्यावत् स्वलक्षण एव तत् किं न साधयेदित्याशङ्क्य स्वर्गादिफलस्य तदनुपलम्भात् क्रियायाश्चादृष्टद्वारेण फलसाधनत्वात् स्वातन्त्र्यासम्भवाच्च मैवमित्यभिप्रेत्याह—**न हीति**। अनुभवविरुद्ध-

---

१ कर्म पुनरित्यादि—कर्म पुनः स्वोत्पत्तावपि कर्त्रादिसापेक्षम्। उत्पत्त्यनन्तरमाविद्यककारकापूर्वादिसापेक्षमित्यर्थः।। (सारार्थः)

२ स्वात्मोत्पत्ताविति मूलपाठः मुद्रितपुस्तके दृश्यते।

साध्यमानमात्ररूपत्वात्तस्याः। न च क्रिया आत्मज्ञानवत्स्वात्मप्रतिलम्भकाल एव स्वर्गादिफलेन कर्तारं संबध्नाति। आत्मज्ञानं पुनः पुरुषार्थसिद्धौ नोत्पद्यमानस्वरूपव्यतिरेकेणान्यदुपायान्तरं साधनान्तरं वाऽपेक्षते। कुत एतत्? यतः-

बलवद्धि प्रमाणोत्थं सम्यग्ज्ञानं न बाध्यते।
आकाङ्क्षते न चाप्यन्यद्बाधनं प्रति साधनम्।।३६।।

स्वपक्षस्य हेत्ववष्टम्भेन समर्थितत्वान्निराशङ्कमुपसंह्रियते-

तस्माद्दुःखोदधेर्हेतोरज्ञानस्यापनुत्तये ।
सम्यग्ज्ञानं सुपर्याप्तं क्रिया चेन्नोक्तहेतुतः।।३७।।

ननु बलवदपि सम्यग्ज्ञानं सदप्रमाणोत्थेनासम्यग्ज्ञानेन बाध्यमानमुपलभामहे। यत उत्पन्नपरमार्थबोधस्यापि कर्तृत्वभोक्तृत्वरागद्वेषाद्यनवबोधोत्थप्रत्यया आविर्भवन्ति। न ह्यबाधिते सम्यग्ज्ञाने तद्विरुद्धानां प्रत्ययानां संभवोऽस्ति, नैतदेवं, कुतः-

बाधितत्वादविद्याया विद्यां सा नैव बाधते।
तद्वासना निमित्तत्वं यान्ति विद्यास्मृतेर्ध्रुवम्।।३८।।

---

ज्ञानन्तरफलत्वं क्रियाया इत्याह—**न चेति**। आत्मज्ञानमपि कर्मापेक्षयाऽभ्यासद्वारेण वा कैवल्यं साधयतीति मतान्तरमाशङ्क्याह—**आत्मज्ञानं पुनरिति**। **रूपान्तरशब्देनाभ्यास** उच्यते। **साधनान्तरशब्देन** च कर्म। आत्मज्ञानस्याप्यनपेक्षत्वमयुक्तमनादिकालप्रवृत्त[1]द्वैतदर्शनसंस्काराभ्यां बाधपरिहाराय तस्याप्यभ्यासादिसापेक्षादित्याक्षिप्योक्तश्लोकेन समाधत्ते—**कुत एतदित्यादिना**। **न बाध्यते** द्वैतदर्शनद्वैतदर्शनसंस्काराभ्यामिति शेषः। स्वयञ्च द्वैतदर्शनतत्संस्कारयोर्बाधनायाभ्यासादिकमपेक्षत इत्यत आह—**आकाङ्क्षत इति**।।३६।।

एवं ज्ञानमेव कैवल्यसाधनं न कर्मेत्युपपादितमर्थमुपसंहरति—**स्वपक्षस्येति**। उक्त हेतुत इति। अज्ञानसमुत्थत्वोत्पाद्यफलत्वादिहेतुभ्य इत्यर्थः।।३७।।

यदुक्तम् "बलबद्धि प्रमाणोत्थम्" इति, तत्रानुभवविरोधमाशङ्कते—**नन्विति**। तावता कथं बाधोऽवगम्यत इति, अत आह—**न हीति**। बाधितस्य बाधकत्वानुप-

---

१ प्रयुक्तेति हस्तलिखितपुस्तकपाठः।

'कर्माज्ञानसमुत्थत्वात्' इत्युक्तो हेतुस्तस्य च समर्थनं पूर्वमेवाभिहितं 'हितं संप्रेप्सतां' इत्यादिना। तदभ्युच्चयार्थमविद्यान्वयेन च संसारान्वयित्वं प्रदर्शयिष्यामीत्यत आह–

ब्राह्मण्याद्यात्मके देहे लात्वा नाऽऽत्मेति भावनाम्।
श्रुतेः किंकरतामेति[1] वाङ्मनःकायकर्मभिः।।३९।।

यस्मात्कर्माज्ञानसमुत्थमेव तस्मात्तद्व्यावृत्तौ निवर्तत इत्युच्यते–

दग्धाखिलाधिकारश्चेद्ब्रह्मज्ञानाग्निना मुनिः।
वर्तमानः श्रुतेर्मूर्ध्नि नैव स्याद्वेदकिङ्करः[2]।।४०।।

अथेतरो घनतराविद्यापटलसंवीतान्तःकरणोऽङ्गीकृतकर्तृत्वाद्यशेषकर्माधिकारणो विधिप्रतिषेधचोदनासंदंशोपदष्टः कर्मसु प्रवर्तमानः–

---

पत्तेर्मैवमिति परिहरति—**नैतदेवमिति**। अस्तु तर्हि बाधककालादुत्तरकालमुत्पन्नद्वैतप्रत्ययैः विद्याया बाध इत्याशङ्क्य तस्मिन्नपि काले बाधकविद्यासंस्कारजनितप्रत्ययानां बलवत्वात्तेषामेवैतत्प्रत्ययबाधकत्वोपपत्तेर्मैवमिति परिहरति—**तद्वासना इति**। यद्वा तद्वासनेत्यविद्यावासनाः कथ्यन्ते। अत्रापि स्मृतिं विदुषो जनयन्ति। तेन विद्याया न द्वैतस्मृतिभिरपि बाध इत्यर्थः।।३८।।

वृत्तसङ्कीर्तनपूर्वकं वर्तिष्यमाणस्य ग्रन्थस्य तात्पर्यमाह—**तथेति**।[3] चकारः संसारस्याविद्यान्वयवत्तद्व्यतिरेके व्यतिरेकस्यापि समुच्चयार्थाः। **ब्राह्मणाद्यात्मकेति**। वर्णाश्रमवयोऽवस्थाविशेषवति देहेनापुरुष **आत्मेति** भावनां लात्वा समुपादायेत्यविद्यान्वयो दर्शितः। इदानीं तदधीनं कर्तृत्वभोक्तृत्वादिसंसारान्वयं दर्शयति **श्रुतेरिति**। किङ्करताम् तन्नियोगात्तदुक्तकारिताम्।।३९।।

अन्वयमुक्त्वा व्यतिरेकमाह—**यस्मादिति**। अधिक्रियते कर्मण्यनेनेत्यधिकारो ब्राह्मण्याद्यभिमानः वर्तमानश्रुतेर्मुध्निप्रतिपाद्यतया ब्रह्मस्वरूपेण।।४०।।

यः पुनर्वेदकिङ्करो अविद्यान्वयेन संसारान्वयित्वेन दर्शितः। तस्य संसरणप्रकारं

---

१ किंकरतां—नियोज्यतां। "पारतन्त्र्यम्" (सारार्थः)

२ "कर्मकाण्डाद्यात्मकस्य वेदस्य मूर्ध्नि अप्रतिपाद्यतया शब्दशक्तय गोचरब्रह्मपदे वर्तमानो वेदकिंकरो न स्यात्। ब्रह्मभूततया विधिनिषेधातीतत्वात्।।" (सारार्थः)

३ कर्मज्ञानेति ज्ञानोत्तममिश्रः। अत्र मुद्रितमूलपाठानुसारित्वं भाति। अस्याष्टीकाया अनुरोधेन कर्मज्ञानेत्यतः पूर्वं तथेति भाष्यमिति। अथवा प्राक् इत्थमेव पाठ आसीदिति ज्ञेयम्।

शुभैराप्नोति[1] देवत्वं निषिद्धैर्नारकीं गतिम्।
उभाभ्यां पुण्यपापाभ्यां मानुष्यं लभतेऽवशः।।४१।।

आब्रह्मस्तम्बपर्यन्ते घोरे दुःखोदधौ घटीयन्त्रवदारोहावरोह-न्यायेन अधममध्यमोत्तमसुखदुःखमोहविद्युच्चपलसंपातदायिनी-र्विचित्रयोनीश्चण्डोत्पिञ्जलकश्वसनवेगाभिहताम्भोनिधिमध्यवर्ती शुष्कालाबुवत् शुभाशुभव्यामिश्रकर्मवायुसमीरितः—

एवं चङ्क्रम्यमाणोऽयमविद्याकामकर्मभिः।
पाशितो जायते कामी म्रियते चासुखावृतः।।४२।।

यथोक्तेऽर्थे आदरविधानाय प्रमाणोपन्यासः—

श्रुतिश्चेमं जगादार्थं कामस्य विनिवृत्तये।
तन्मूला संसृतिर्यस्मात्तन्नाशोऽज्ञानहानतः।।४३।।

---

वैराग्योत्पादनायाह—**अथेतर** इति। अङ्गीकृतं कर्तृत्वभोक्तृत्व ब्राह्मण्यादिलक्षणमशेषं कर्माधिकारे कारणं येन स तथोक्तः। अत्र च पूर्वं पूर्वमुत्तरोत्तरस्य हेतुः। **अवशः** कामकर्मादिपरतन्त्र इति यावत्।।४१।।

उत्तरश्लोकगतस्यैवंशब्दस्यापेक्षितमर्थं प्रदर्शयन् संसारगतिमेव प्रपञ्चयति—**आब्रह्मेति**। योनीश्चङ्क्रम्यमाण इति श्लोकगतपदेन सम्बन्धः। ता एव योनीर्विशिनष्टि—**अधमेति**। अधममध्यमोत्तमा ये सुखदुःखमोहास्तेषां विद्युद्वच्चपलो यस्य तापस्सम्पर्कस्तं दातुं शीलं यासां योनीनां तास्तथोक्ताः ता एव विचित्रा देवतिर्यङ्नरकादिभेदेन चङ्क्रमणे दृष्टान्तमाह—**चण्डेति**। उत्पिञ्जलक आकुल[2]श्चण्डश्चासावुत्पिञ्जलकश्चेति चण्डोत्पिञ्जलकः। श्वसनो वायुः तस्य वेगेनाभिहतो योऽम्भोनिधिस्तन्मध्यवर्ति यच्छुष्कमलाबु तद्यथाऽतिशयेन भ्रमति, तद्वत् शुभमशुभं तदुभयं व्यामिश्रञ्च यत्कर्म स एवं वायुस्तेन समीरितः प्रेरितः कामी जायत इति।।४२।।

कामस्य संसरणकारणत्वं प्राधान्येनोक्तम्। तत्र श्रुतिस्मृती प्रमाणमिति दर्शयितुमाह—**यथोक्तेति**। यस्मात् संसृतिस्तस्मात्तस्य विनिवृत्तये श्रुतिर्जगादेत्यन्वयः। कथं तर्हि तन्निवृत्तिरित्यत आह—**तन्नाश** इति।।४३।।

"यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः। अथ मर्त्योऽमृतो भवति

---

१ शुभैरिति—"पुण्येन पुण्यं लोकं जयति पापेन पापमुभाभ्यामेव मनुष्यलोकम्" इति श्रुतेः।
२ आकुलीभूत इति भावः।

**का त्वसौ श्रुतिरिति चेत्–**

**'यदा सर्वे प्रमुच्यन्ते' इति न्विति च वाजिनः।**
**कामबन्धनमेवेदं व्यासोऽप्याह पदे पदे।।४४।।**

**एष संसारपन्था व्याख्यातः। अथेदानीं तद्व्यावृत्तये कर्माण्यारादुपकारकत्वेन[1] यथा मोक्षहेतुतां प्रतिपद्यन्ते, तथाभिधीयते–**

**तस्यैवं दुःखतप्तस्य कथञ्चित्पुण्यशीलनात्।**
**नित्येहाक्षालितधियो वैराग्यं जायते हृदि।।४५।।**

**कीदृग्वैराग्यमुत्पद्यत इति, उच्यते–**

**नरकाद्भीर्यथाऽस्याभूत्तथा काम्यफलादपि।**
**यथार्थदर्शनात्तस्मान्नित्यं कर्म चिकीर्षति।।४६।।**

**एवं नित्यनैमित्तिककर्मानुष्ठानेन–**

---

अत्र ब्रह्म समश्नुते।।'' इति नु कामयमानोऽथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो ''न तस्य प्राणा उत्क्रामन्ति'' इत्यादि वाजिशाखिन आहुरित्यन्वयः। कामबन्धनमेवेदं नान्यदस्तीह—**बन्धनमि**त्यादिना। व्यासेनापि कामस्य संसारकारणत्वं स्मर्यत इत्यर्थः।।४४।।

एवन्तावत्कामस्य संसारकारणत्वमुक्तं तस्य च तन्नाशोऽज्ञानहानत इति ज्ञानादज्ञाननिवृत्त्या निवृत्तिरप्युक्ता। (का त्वसौ श्रुतिरिति चेत् यदा सर्वेति कामबन्धनमेवेदमिति च[2]) तत्र सर्वथा कर्मणां मुक्तावप्यनुपयोगशङ्कायामुपयोगप्रकारप्रदर्शनायोत्तरग्रन्थ इत्याह—**एष इति। कथञ्चिदिति** पुण्यशीलनस्य दुर्लभतां दर्शयति। काम्ये पुण्यशीलनस्य दुर्लभतां दर्शयति। काम्ये पुण्येऽप्यानुषङ्गिकी[3] शुद्धिरस्तीति। ततो नित्यानुष्ठाने बुद्धिरुत्पद्यते। एवं नित्येहया नित्यकर्मानुष्ठानेन विशुद्धबुद्धेः काम्यकर्मफलेषु वैराग्यं जायत इत्यर्थः।।४५।।

**यथार्थदर्शनादिति** काम्यः फलस्यानित्यत्व-सातिशयत्व-दुःखबहुलत्वादिदोषदर्शनात् काम्यकर्मभ्यो व्यावृत्तः पुनस्तदेव नित्यं कर्म तात्पर्येणानुष्ठातुमिच्छतीत्यर्थः।।४६।।

---

१ आरादुपकारकत्वेन—आरादुपकारकत्वं च प्रधानस्वरूपानिर्वाहकत्वे सति फलजनकतांशे प्रधानस्योपकारकत्वम्। संनिपत्योपकारकत्वं च प्रधानस्वरूपनिर्वाहकत्वम्। (सारार्थः)

२ कोष्टकांशोऽयं ज्ञानोत्तममिश्रानुसारेण।

३ एकः काम्योऽपरो नित्यस्तथा नैमित्तिकोऽपरः।
प्राधान्येन फलं शुद्धिरार्थिकी काम्यकर्मणः।।२।।
प्राधान्येन फलं शुद्धिर्नित्यस्य फलमार्थिकम्।
केवलं प्रत्यवायस्य निवृत्तिरितरस्य तु।।३।। सूतसंहिता ४.२.३

**शुध्यमानं तु तच्चित्तमीश्वरार्पितकर्मभिः।**
**वैराग्यं ब्रह्मलोकादौ व्यनक्त्यथ सुनिर्मलम्।।४७।।**

**यस्माद्रजस्तमोमलोपसंसृष्टमेव चित्तं कामबडिशेनाकृष्य विषयदूरन्तसूनास्थानेषु निक्षिप्यते, तस्मान्नित्यनैमित्तिककर्मानुष्ठानपरिमार्जनिनापविद्धरजस्तमोमलं, प्रसन्नमनाकुलं, संमार्जितस्फटिकशिलाकल्पं, बाह्यविषयहेतुकेन च रागद्वेषात्मकेनाति-[1]ग्रहबडिशेनानाकृष्यमाणं, विधूताशेषकल्मषं, प्रत्यङ्मात्रप्रवणं, चित्तदर्पणमवतिष्ठते, अत इदमभिधीयते–**

**व्युत्थिताशेषकामेभ्यो यदा धीरवतिष्ठते।[2]**
**तदैव प्रत्यगात्मानं स्वयमेवाविविक्षति।।४८।।**

---

भवत्वेवं काम्यपरित्यागेन[3] नित्यनैमित्तिककर्मणामेवानुष्ठानं तथापि केनद्वारेण तेषां मोक्षहेतुत्वमित्यत आह—**एवमिति**। चित्तशुद्धिवैराग्यातिशयोत्पादनद्वारेणेत्यर्थः।।४७।।

ननु किमुत (मिति) वैराग्येण तस्य मोक्षसाधनत्वेन तत्सहकारित्वेन चाश्रवणादित्याशङ्क्य रागस्य मोक्षोपाये प्रवृत्तिप्रतिबन्धकरागाभावतया वैराग्यस्य मोक्षप्रवृत्तिहेतुतामुपपत्तिपुरस्सरं दर्शयति—**यस्मादित्यादिना**। रजस्तमसी एव हेयत्वान्मलवन्मलः तेन मलेनानुषक्तमन्तःकरणं कामाख्येन वडिशवदाकर्षकत्वात् बडिशेनाकृष्य विषयप्रवणं विधाय विषयाश्शब्दादय एवं दुरन्तानि सूनास्थानानि हिंसास्थानानि विषयपरायणानां पुनः पुनर्मरणादिदुःखहेतुत्वात् तेषु मत्स्यादिवन्निक्षिप्यते। यस्मात्तस्मान्नित्याद्यनुष्ठानात्तथाभूतप्रतिबन्धक्षये यथोक्तविशेषणं चित्तदर्पणं प्रत्यङ्मात्रप्रवणमवतिष्ठते इत्यन्वयः। अपविद्धरजस्तमोमलं व्यावृत्तरजस्तमोमलं अतएव प्रसन्नमनाकुलमचलम्। प्रसन्नतायां दृष्टान्तमाह—**सुमार्जितेति**[4]। एतएव ये बाह्यादयो विषयास्तद्धेतुकौ यौ रागद्वेषौ तल्लक्षणेनातिग्रहवडिशेन विषयान्तं प्रत्यनाकृष्यमाणम्। अत्र च "कामेनातिग्रहेण गृहीत" इति कामस्यातिग्रहत्ववचनादस्य च द्वेषोपलक्षणार्थत्वा-

---

१ अतिग्रहवडिशेन—अष्टौ ग्रहा अष्टावतिग्रहा इत्यत्र श्रुतौ ग्राहकत्वाद् ग्रहत्वमिन्द्रियाणामतीवबन्धकत्वात्पुरुषस्यातिग्रहत्वं कामस्योक्तम्। तदुच्यते अतिग्रहवडिशेनेति। (नै.सि. विवरण)

२ यदा धीरवतिष्ठते—"अवतिष्ठते उद्रिक्तसत्त्वमात्रं भवति।" (सारार्थः)

३ काम्यकर्मपरित्यागेनेत्यर्थः।

४ संमार्जितेति मूलपाठः।

**अतः परमवसिताधिकाराणि कर्माणि प्रत्यक्प्रवणत्वसूनौ कृतसंप्रत्तिकानि चरितार्थानि सन्ति–**

**प्रत्यक्प्रवणतां बुद्धेः कर्माण्युत्पाद्य शुद्धितः।**
**कृतार्थान्यस्तमायान्ति प्रावृडन्ते घना इव।।४९।।**

**यतो नित्यकर्मानुष्ठानस्यैष महिमा–**

**तस्मान्मुमुक्षुभिः कार्यमात्मज्ञानाभिलाषिभिः।**
**नित्यं नैमित्तिकं कर्म सदेवात्मविशुद्धये।।५०।।**

**यथोक्तेऽर्थे सर्वज्ञवचनं प्रमाणम्–**

**'आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते।**
**योगारूढस्य तस्यैव शमः' एवेति च स्मृतिः ।। ५१ ।।**

**नित्यकर्मानुष्ठानाद्धर्मोत्पत्तिर्धर्मोत्पत्तेः, पापहानिस्ततश्चित्त-शुद्धिस्ततः संसारयाथात्म्यावबोधस्ततो वैराग्यं ततो मुमुक्षुत्वं**

---

द्रागद्वेषयोरतिग्रहात्मकत्वं ते (तु) तानाकृष्यमाणत्वे हेतुर्विधूतेति।।४८।।

एवं विशुद्धान्तःकरणस्योत्पन्नवैराग्यस्य सर्वकर्मसंन्यासेऽधिकार इत्यभिप्रेत्याह— **अतः परमिति।** ''यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितमि''ति वचनात् कर्मप्रवृत्ति-निमित्तस्य कामस्य निवृत्तत्वात् कर्माण्यवसिताधिकाराण्युच्यन्ते प्रत्यक्प्रवणत्वसूनौ कृतसंप्रतिकानि। सम्प्रतिर्नाम स्वकार्याणां पुत्रे समर्पणम्। अतएव चरितार्थानि कृतप्रयोजनानि अस्तमायान्तीति श्लोकपदेन सम्बन्धः[१]।।४९।।

एवं कर्मणामन्तःकरणशुद्धिद्वारेण प्रवणता हेतुत्वादस्त्येव मुक्तावुपयोग इत्युपसंहरति—**यत इति**।।५०।।

कर्मणां मुक्तावारादुपकारकत्वं न तु साक्षादित्युक्तं तस्मिन्नर्थे भगवद्वचनं प्रमाणमित्याह—**यथोक्त इति**। आरुरुक्षोस्सम्यग्दर्शनसाधनं ध्यानयोगमारोढुमिच्छो-स्तदनुष्ठानासमर्थस्य शमः कर्मणामुपशमः संन्यासः कारणम्। योगावाप्तौ च साधन-मितिवदन् परम्परैव कर्मणां मोक्षोपायत्वं दर्शयतीत्यर्थः।।५१।।

कर्मणां पारम्पर्येण मुक्तावुपयोगो दर्शितस्तदेव पारम्पर्यमिदानीं दर्शयति— **नित्येति**। धर्मोत्पत्तिः अदृष्टोत्पत्तिः। पापहानिः ''पुण्येन (धर्मेण) पापमपनुदती''ति

---

१ कर्माणि अन्तःकरणशुद्ध्युत्पादनद्वारेण तस्याः प्रत्यक्प्रवणतामुत्पाद्य कृतार्थानि सन्त्यस्तमायान्ति। अर्थात् मोक्षम्प्रति कर्मणः एवं प्रकारेण आरादुपकारकत्वं सिद्ध्यति।

ततस्तदुपायपर्येषणं, ततः सर्वकर्मतत्साधनसंन्यासस्ततो योगाभ्यासस्ततश्चित्तस्य प्रत्यक्प्रवणता, ततस्तत्त्वमस्यादिवाक्यार्थपरिज्ञानं, ततोऽविद्योच्छेदस्ततश्च स्वात्मन्येवावस्थानं, 'ब्रह्मैव सन् ब्रह्माप्येति' 'विमुक्तश्च विमुच्यते' इति–

पारंपर्येण कर्मैवं स्यादविद्यानिवृत्तये।
ज्ञानवन्नाविरोधित्वात्कर्माविद्यां निरस्यति।।५२।।

न च कर्मणः कार्यमण्वपि मुक्तौ संभाव्यते, नापि मुक्तौ यत्संभवति तत्कर्मापेक्षते। तदुच्यते–

उत्पाद्यमाप्यं [१]संस्कार्यं विकार्यं च क्रियाफलम्।
नैवं मुक्तिर्यतस्तस्मात्कर्म तस्या न साधनम्।।५३।।

एवं तावत्केवलं कर्म साक्षादविद्यापनुत्तये न पर्याप्तमिति प्रपञ्चितम्। मुक्तौ च मुमुक्षुज्ञानतद्विषयस्वाभाव्यानुरोधेन सर्वप्रकारस्यापि कर्मणोऽसंभव उक्तो 'हितं संप्रेप्सताम्' इत्यादिना। यादृशश्चारादुपकारकत्वेन ज्ञानोत्पत्तौ कर्मणां समुच्चयः[२] संभवति,

---

श्रुतेः। चित्तशुद्धिः चित्तस्य विवेकक्षमत्वं(ता) याथात्म्यावबोधः अनित्यत्वादिदोषदर्शनम्। योगाभ्यासः श्रवण-मनन-निदिध्यासनादीनामनुष्ठानम्। अत्र चित्तस्य प्रत्यक्प्रवणता नाम प्रत्यगात्मन्येवाप्रयत्नेनावस्थानं कर्मसंन्यासस्य हेतुत्वेन पूर्वोदिता तु प्रत्यक्प्रवणता प्रत्यगात्मविविदिषामात्ररूपेति न पूर्वापरविरोधः। वाक्यार्थपरिज्ञानं साक्षात्कारलक्षणं स्वात्मन्यवस्थानमित्यत्र प्रमाणमाह—**ब्रह्मैवेति**। साक्षादेवाविद्यानिवर्तकं कर्म किं न स्यादित्यत आह—**ज्ञानवदिति**।।५२।।

कर्मणस्साक्षान्मोक्षसाधनत्वाभावे युक्त्यन्तरमाह—**न चेति**। मुक्तौ यत्सम्भवति इति स्वरूपावस्थानमुच्यते।।५३।।

वृत्तसंकीर्तनपूर्वकं वर्तिष्यमाणग्रन्थसन्दर्भस्य तात्पर्यमाह—**एवं तावदिति**। अनित्यफलाद्विरक्तत्वं मुमुक्षुस्वभावः। ज्ञानस्य प्रमाणवस्तुपरतन्त्रतया अविद्यानिवर्तकत्वं स्वभावः। ज्ञानविषयस्य चात्मनः कूटस्थत्वेनासाध्यत्वं निराकृतम्। अधुना ज्ञानेनाङ्गाङ्गिभावेन समप्रधानतया वा समुच्चितस्यापि मुक्तिसाधनत्वन्न सम्भवतीति उच्चत इत्यर्थः।

---

१ उत्पाद्यमित्यादि—"भावप्रधानो निर्देशः" उत्पादनमित्यर्थः। (सारार्थः)

२ समुच्चयः—एककार्यकारित्वम् (सारार्थः)

**तथा प्रतिपादितम्। अविद्योच्छित्तौ[१] तु लब्धात्मस्वभावस्यात्मज्ञान-स्यैवासाधारणं साधकतमत्वं, नान्यस्य प्रधानभूतस्य गुणभूतस्य चेत्येतदधुनोच्यते। तत्र ज्ञानं गुणभूतं तावदहेतुरित्येतदाह–**

**संनिपत्य न च ज्ञानं कर्माज्ञानं निरस्यति।**
**साध्यसाधनभावत्वादेककालानवस्थितेः।।५४।।**

**समप्रधानयोरप्यसंभव एव–**

**बाध्यबाधकभावाच्च पञ्चास्योरणयोरिव।**
**एकदेशानवस्थानान्न समुच्चयता तयोः।।५५।।**

**कुतो बाध्यबाधकभावः? यस्मात्–**

**अयथावस्त्वविद्या स्याद्विद्या तस्या विरोधिनी।**
**समुच्चयस्तयोरेवं रविशार्वरयोरिव।।५६।।**

**तस्मादकारकब्रह्मात्मनि [२]परिसमाप्तावबोधस्याशेषकर्म-चोदनानां अचोद्यस्वाभाव्यात्कुण्ठता। कथं तत्। अभिधीयते–**

---

एवं समुदाय तात्पर्यमभिधायाधुना समनन्तरश्लोकतात्पर्यमाह—**तत्रेति**। कर्मणोऽङ्गत्वेन सन्निपत्य ज्ञानमविद्यां न निरस्यति। कुत इत्यत्राह—**साध्येति**। तत्रान्तःकरणशुद्धिद्वारेण कर्म साधनं च ज्ञानं साध्यमत एवैककालानवस्थितेर्नाङ्गाङ्गिभावः। तत्साध्यस्य तदङ्गत्वा-दृष्टेरेकप्रयोगानारूढत्वाज्जन्मान्तरानुष्ठितस्यापि कर्मणो ज्ञानसाधनत्वाङ्गीकाराच्चेत्यर्थः।।५४।।

ज्ञानकर्मणोस्समसमुच्चयनिरासायाह[३]—**समप्रधानयोरिति**। पञ्चास्यः[४] सिंहः उरणो मेषः। एकदेशे एकस्मिन्नाश्रयेऽनवस्थानात्[५]।।५५।।

उक्तस्य बाध्यबाधकहेतोः समर्थनायाह—**कुत इति**।।५६।।

तस्माज्ज्ञानिनो न कर्मनियोगविषयत्वमित्युपसंहरति—**तस्मादिति**। तत्तद्वर्णाश्र-

---

१ अविद्योच्छित्तौ—केवलकर्मणा मोक्षसाधनत्वं प्रभाकराभिमतं निराकृत्य सम्प्रत्यङ्गाङ्गिभावेन वा समप्राधान्येन वा समुच्चितानामपि कर्मणां भाट्टाभिमतं मोक्षसाधनत्वं न सम्भवतीति प्रतिपाद्यत इत्याह – अविद्योच्छित्ताविति।'' (सारार्थः)

२ पूर्वं विदुषः कर्माङ्गीकृत्य समुच्चयो नास्तीत्युक्तम्।
इदानीं कर्मैव न सम्भवतीत्युच्यते'' (विद्या सुरभिः)
अकारकब्रह्मात्मनि—अशेषभूते स्वतन्त्रे ब्रह्मणि इति भावः।

३ ज्ञानकर्मणोः क्रमसमुच्चयस्य सिद्धान्तसम्मतत्वात्।

४ 'पचि विस्तारे' आस्यं, मुखं विस्तारयति व्याददाति इति पञ्चास्य सिंहः।

५ न समप्रधानतापि तयोरिति शेषः।

बृहस्पतिसवे यद्वत्क्षत्रियो न प्रवर्तते।
ब्राह्मणत्वाद्यहंमानी विप्रो वा क्षत्त्रकर्मणि।।५७।।

यथाऽयं दृष्टान्त एवं दार्ष्टान्तिकोऽपीत्येतदाह–

विदेहो वीतसंदेहो नेतिनेत्यवशेषितः।
देहाद्यनात्मदृक्तद्वत्तत्क्रियां[1] वीक्षतेऽपि न।।५८।।

तस्यार्थस्याविष्करणार्थमुदाहरणम्–

मृत्स्नेभके यथेभत्वं शिशुरध्यस्य वल्गति।
अध्यस्यात्मनि देहादीन्मूढस्तद्वद्विचेष्टते।।५९।।

न च वयं ज्ञानकर्मणोः सर्वत्रैव समुच्चयं प्रत्याचक्ष्महे। यत्र प्रयोज्यप्रयोजकभावो ज्ञानकर्मणोस्तत्र नास्मत्पित्रापि शक्यते निवारयितुम्। तत्र विभागप्रदर्शनायोदाहरणं प्रदर्श्यते–

स्थाणु चोरधियाऽऽलाय भीतो यद्वत्पलायते।
बुद्ध्यादिभिस्तथात्मानं भ्रान्तोऽध्यारोप्य[2] चेष्टते।।६०।।

---

माद्यभिमानशून्यत्वमत्र हेतुरिति सदृष्टान्तमाह—**बृहस्पतीति**।।५७।।

विदेह[3] इति स्थूलशरीराभिमानाभावमाह **वीतसन्देहो**[4] विगतसन्देहः। एतेन सन्देह इति स्थूलशरीराभिमानाभावस्सूच्यते। तत्र हेतुर्नेति **नेतीति**।।५८।।

एवं देहादौ मिथ्याभिमानवत एव प्रवृत्तिर्निरभिमानशून्यस्येत्युक्तम्। तत्र मिथ्याभिमानात् प्रवृत्तिं दृष्टान्तेन दर्शयति—**तस्यार्थस्येति**। **मृत्स्नेभके** प्रशस्तमृदा निर्मितहस्तिनि।।५९।।

एवं तावत् "सन्निपत्य न च ज्ञानमि"त्यादिना ज्ञानकर्मणोस्समुच्चयः निराकृतः। तदेतदयुक्तम्—"यदेव विद्यया करोति" "ज्ञात्वा कर्माणि कुर्वीते"त्यादिवचन-विरोधादित्याशङ्क्याह—**न च वयमिति**। यत्र ज्ञानकर्मणोः प्रयोज्यप्रयोजकभावो निमित्तनैमित्तिकभावस्तत्र न केनापि तयोः समुच्चयो वारयितुं शक्यत इत्यर्थः। कुत्र तर्हि ज्ञानकर्मणोः प्रयोज्यप्रयोजकभावः कुत्रासौ नास्तीत्यत आह—**तत्र विभागेति**। यथा चोरधिया स्थाणुमालाय गृहीत्वा पलायत एवं बुद्ध्यादिरूपेणात्मानं गृहीत्वा

---

१ तद्वत् = यथा दृष्टान्तो। तत्क्रियां = देहादिक्रियाम्। न वीक्षते = अभिमानेन न गृह्णाति।

२ बुद्ध्यादिभिस्तथात्मानमध्यारोप्य—आत्मानं बुद्ध्याद्यभेदेन ज्ञात्वा। "प्रकृत्यादिभ्य उपसंख्यानम्" इत्यभेदे तृतीया इति भावः।

३ विदेहः इति देहमात्राभिमानाभाव उक्तः।

४ वीतसंदेह इति निवृत्तभ्रमादितया चित्तशुद्धिरुक्ता।

**एवं यत्र यत्र ज्ञानकर्मणोः प्रयोज्यप्रयोजकभावस्तत्र सर्वत्रायं न्यायः। यत्र तु समकालं नापि क्रमेणोपपद्यते समुच्चयः[१] स विषय उच्यते–**

**स्थाणोः सतत्त्वविज्ञानं[२] यथा नाङ्गं पलायने।**
**आत्मनस्तत्त्वविज्ञानं तदन्नाङ्गं क्रियाविधौ।।६१।।**

**यस्माद्गुणस्यैतत्स्वाभाव्यम्–**

**यद्धि यस्यानुरोधेन स्वभावमनुवर्तते।**
**तत्तस्य गुणभूतं स्यान्न प्रधानाद्गुणो यतः।।६२।।**

**यस्मात्[३]–**

**कर्मप्रकरणाकाङ्क्षि ज्ञानं कर्मगुणो भवेत्।**
**यद्धि प्रकरणे यस्य तत्तदङ्गं प्रचक्षते।।६३।।**
**स्वरूपलाभमात्रेण[४] यत्त्वविद्यां निहन्ति नः।**

---

कर्म करोतीति। तेन तत्र कर्मप्रवृत्तिनिमित्तत्वाज्ज्ञानं कर्माङ्गमिति भावः।।६०।।

"यदेव विद्यया करोति" "ज्ञात्वा कर्माणि कुर्वीते"त्यादावप्ययमेव न्याय इत्यतिदिशति—**एवमिति**। आत्मज्ञानस्य पुनः कर्मप्रवृत्तौ प्रयोज्यप्रयोजकभावाभावान्न तेन समुच्चय इति सदृष्टान्तमाह—**यत्र त्विति**।।६१।।

प्रधानत्वेनाभिमतकर्मनिवर्तकत्वादपि नात्मज्ञानं कर्माङ्गमित्याह—**यस्माद्-गुणस्येति**। प्रधानमत्तीति प्रधानात्। यत्प्रधानविरोधि न तत्तदङ्गमित्यर्थः।।६२।।

विनियोजकप्रकरणादिसद्भावात् कर्मस्वरूपादिज्ञानस्य तदङ्गित्वमुचितम्। आत्म-ज्ञानस्य पुनः प्रकरणाद्यभावान्न तदङ्गत्वमित्यभिप्रेत्याह—**यस्मादिति**।।६३-६४।।

---

१ एतदुक्तं भवति। सम्यग्ज्ञानं स्वबाध्यज्ञानप्रयोज्यकर्मणा क्वापि न समुच्चीयत इति। (नै.सि.वि.)

२ स्थाणोः सतत्त्वविज्ञानम् — स्थाणुविषयं तत्त्वज्ञानं स्थाणुरेवायं, न चौर इति तत्त्वज्ञानमिति, ज्ञानस्य वस्तुतन्त्रत्वात्। अतः अहं ब्रह्मास्मीति विज्ञानमपि न कर्माङ्गमिति भावः।

३ "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां षण्णामेव प्रमाणानां विनियोगप्रमापकतास्वीकारात्तत्र श्रुत्यादीनामसंभवादेव मनसि निरासं सिद्धवत्कृत्यं प्रकरणसंभवमाशङ्क्य निराकुर्वन् श्लोकमवतारयति यस्मादिति"। (सारार्थः)

४ "स्वरूपलाभमात्रेणेति। तृतीया अभेदे। धान्येन धनवानितिवत्। तथा चाविद्यानिवृत्तिरेव ज्ञानस्य स्वरूपलाभः। यद्वा लब्धात्मलाभमेव ज्ञानं प्रौढप्रकाशस्तम इवाज्ञानं हन्ति। न तत्र सहकार्यन्तरं व्यापारान्तरं वापेक्षते।।" (सारार्थः)

न तदङ्गं प्रधानं वा ज्ञानं स्यात्कर्मणः क्वचित्।।६४।।

**समुच्चयपक्षवादिनाप्यवश्यमेतदभ्युपगन्तव्यम्। यस्मात्–**

**अज्ञानमनिराकुर्वज्ज्ञानमेव न सिध्यति।**
**विपन्नकारकग्रामं ज्ञानं कर्म न ढौकते।।६५।।**

**इदं चापरं कारणं ज्ञानकर्मणोः समुच्चयनिबर्हि–**

**हेतुस्वरूपकार्याणि प्रकाशतमसोरिव।**
**विरोधीनि ततो नास्ति साङ्गत्यं ज्ञानकर्मणोः।।६६।।**

**एवमुपसंहृते केचित् स्वसंप्रदायबलावष्टम्भादाहुर्यदेतद्वेदान्त-वाक्यादहं ब्रह्मेति विज्ञानं समुत्पद्यते तन्नैव स्वोत्पत्तिमात्रेणाज्ञानं निरस्यति। किं तर्हि? अहन्यहनि द्राघीयसा कालेनोपासीनस्य सतो भावनोपचयान्निश्शेषमज्ञानमपगच्छति, 'देवो भूत्वा देवानप्येति' इति श्रुतेः। अपरे तु ब्रुवते वेदान्तवाक्यजनितमहं ब्रह्मेति विज्ञानं संसर्गात्मकत्वादात्मवस्तुयाथात्म्यावगाह्येव न भवति। किं तर्हि? एतदेव गङ्गास्रोतोवत्सततमभ्यस्यतोऽन्यदेवावाक्यार्थात्मकं विज्ञाना-न्तरमुत्पद्यते। तदेवाशेषाज्ञानतिमिरोत्सारीति, 'विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः' इति श्रुतेरिति। अस्य पक्षद्वयस्य निवृत्तय इदमभिधीयते–**

---

आत्मज्ञानस्य कर्मणा समुच्चयमभ्युपगच्छतापि तस्य प्रमाणज्ञानत्वात् स्वविषयाविद्यानिवर्तकत्वं बलादभ्युपेयम्। तथा सति न स्वाभिमतसमुच्चयसिद्धिरित्याह—**समुच्चयेति**। भवत्वेवं ततः किमित्यत आह—**विपन्नेति**। कारकग्रामाभावे कर्मण एवाभावात् ज्ञानं कर्म न स्पृशतीत्यर्थः।।६५।।

**हेतुस्वरूपकार्याणीति** तज्ज्ञानस्य हेतुः प्रमाणम्, स्वरूपं च परमार्थप्रकाशकत्वम्। कार्यमविद्यानिवृत्तिः। कर्मणो हेतुरविद्यारागादिः। स्वरूपं प्रकाशनात्मकत्वम्। कार्यमुत्पत्त्याप्त्यादीति परस्परविरोधीनि।।६६।।

पूर्वं ज्ञानस्य स्वोत्पत्तिमात्रेणाज्ञाननिवर्तकत्वात् कर्मभिः समुच्चयोऽनुपपन्न इत्युक्तम्। अधुना तदेतदयुक्तं वाक्यजन्योत्तरकालीनभावनोत्कर्षात् भावनाजन्य-साक्षात्कारलक्षणजज्ञानान्तरेण वा अज्ञानस्य निवृत्तेर्ज्ञानाभ्यासदशायां ज्ञानस्य कर्मणा समुच्चयोपपत्तेरित्येकदेशिनां मतमुत्थाप्य निराकरोति—**एवमित्यादिना। देवोभूत्वेति** भावनोपचयाद्देवभावं साक्षात्कृत्य पतिते देहे उपास्य देवताभावं प्राप्नोतीति यावत्।

सकृत्प्रवृत्त्या मृद्नाति क्रियाकारकरूपभृत्।
अज्ञानमागमज्ञानं साङ्गत्यं नास्त्यतोऽनयोः।।६७।।

एवं तावदनानात्वे ब्रह्मणि, ज्ञानकर्मणोः समुच्चयो निराकृतः। अथाधुना पक्षान्तराभ्युपगमेनापि प्रत्यवस्थाने पूर्ववदनाश्वासो यथा, तथाऽभिधीयते–

अनुत्सारितनानात्वं ब्रह्म यस्यापि वादिनः।
तन्मतेनापि दुस्साध्यो ज्ञानकर्मसमुच्चयः।।६८।।

तस्य विभागोक्तिर्दूषणविभागप्रज्ञप्तये–

ब्रह्मात्मा वा भवेत्तस्य यदि वाऽनात्मरूपकम्।
आत्मानाप्तिर्भवेन्मोहादितरस्याप्यनात्मनः[१]।।६९।।

तत्र यदि तावद्वास्तवेनैव वृत्तेन ब्रह्म प्राप्तमात्मस्वाभाव्यात् केवलमासुरमोहापिधानमात्रमेवानाप्तिनिमित्तं तस्मिन् पक्षे–

मोहापिधानभङ्गाय नैव कर्माणि कारणम्।
ज्ञानेनैव फलावाप्तेस्तत्र कर्म निरर्थकम्।।७०।।

---

विज्ञाय शास्त्रशब्देन संसृष्टरूपं ब्रह्मावगम्य प्रज्ञां साक्षात्कारलक्षणां संसर्गात्मिकां कुर्वीत सन्तताभ्यासबलात् साधयेदिति यावदिति पूर्वपक्षिणोऽभिप्रेत्य व्याख्यानम्। दूषयति—**सकृदिति**। भवदभिमताया वासनायाः चित्तैकाग्र्यहेतुतया विक्षेपलक्षण-प्रतिबन्धनिरासेन ज्ञानोत्पत्तावेवोपक्षीणत्वादुत्पन्नमात्रामागमिकं सकार्यमज्ञानं तदेव निवर्तयतीति न ज्ञानकर्मणोस्समुच्चयावसरसम्भवतीति भावः।।६७।।

नानात्वशून्यमद्वयं ब्रह्मेत्युपगम्य तज्ज्ञानस्य कर्मणा समुच्चयो निराकृतम्। सम्प्रति द्वैताद्वैतात्मकं ब्रह्मेत्युपगमेऽपि न सम्भवतीत्याह—**एवन्तावदिति**।।६८।।

भेदाभेदपक्षे जीवपरमात्मनोस्संसारदशायामप्यभेदं केचिदिच्छन्ति। केचित्तु संसारदशायां भेद एव मुक्तिदशायामभेदो। तत्र तत्र आद्यकल्पं दूषयति—**आत्मेति**। द्वितीयं दूषयति—**इतरस्येति**। इतरस्य स्वतो व्यतिरिक्तस्य ब्रह्मणो नात्मत्वादनाप्तिरेव न तु कदाचिदव्याप्तिः स्यात् कर्मणां ज्ञानेन वेत्यर्थः।।६९।।

अस्त्वभेदपक्षे मोहादनाप्तिस्तथापि प्रकृते किमायातमित्याह—**तत्रेति**। असुरसम्बन्धी मोह आसुरः आत्मानवबोधः। परिच्छिन्नात्माभिमानलक्षणश्च। "असुराणां

---

१ अनात्मनः – "भावप्रधानो निर्देशः। अनात्मत्वादित्यर्थः। (सारार्थः)

**अनात्मरूपके तु ब्रह्मणि न कर्म साधनभावं प्रतिपद्यते, नापि ज्ञानं कर्मसमुच्चितमसमुच्चितं वा, यस्मादन्यस्य स्वत एव साधकस्य ब्रह्मणोऽप्यन्यत्वं स्वत एव सिद्धम्। तत्रैवम्–**

**अन्यस्यान्यात्मताप्राप्तौ न क्वचिद्धेतुसंभवः।**
**तस्मिन् सत्यपि नानष्टः परात्मानं प्रपद्यते।।७१।।**

**अपरस्मिंस्तु पक्षे विधिः–**

**परमात्मानुकूलेन ज्ञानाभ्यासेन दुःखिनः।**
**द्वैतिनोपि प्रमुच्येरन्न परात्मविरोधिना।।७२।।**

**इतरस्मिंस्तु पक्षे विधेरेवानवकाशत्वम्। कथम्?**

**समस्तव्यस्तभूतस्य ब्रह्माण्येवावतिष्ठतः।**
**ब्रूत कर्मणि को हेतुः सर्वानन्यत्वदर्शिनः।।७३।।**

---

ह्येषोपनिषदि''ति श्रुतेः।।७०।।

एवं प्रथमविकल्पदूषणं प्रपञ्चयति—**अनात्मेति**। स्वतोऽन्यत्वेऽप्यनन्यत्वसिद्धये साधनापेक्षेत्यत आह—**तत्रैवमिति**। ननु ज्ञानं कर्म च हेतुरस्तीत्यत आह—**तत्रैवमिति**। ननु ज्ञानं कर्म च हेतुरस्तीत्यत आह—**तस्मिन्निति**। अन्यस्मिँस्थिते स्वभावविरोधादेव नान्यात्मताप्राप्तिरित्यर्थः।।७१।।

अस्तु तस्यात्मनात्मरूपं ब्रह्म संसारदशायामपि इत्याशङ्क्य तस्मिन्नपि पक्षे ''देवो भूत्वा देवानप्येती''ति न्यायेनाहं ब्रह्मास्मीत्युपासनयैव तत्प्राप्तेस्तद्विधिरेव कथञ्चिदभ्युपगन्तव्यः। न कर्मसिद्धिः। तस्य केवलभेदाश्रयत्वेन स्वाभ्युपगतब्रह्म-रूपविरोधित्वादित्याह—**अपरस्मिंस्त्विति**। यद्वा, परस्य वादिनोऽभिमतो य आत्मा द्वैताद्वैतरूपस्तद्विरोधिना केवलद्वैतज्ञानेन मुच्येरन्नित्यर्थः। केचित्वपरस्मिंस्तु पक्षे विधिरिति भेदपक्ष एव वर्ण्यत इति वर्णयन्ति। तदयुक्तम् तस्यात्मरूपे तु ब्रह्मणीत्यादिनानन्तरमेव निरस्तत्वात्तस्यैव पुनरनुवृत्तौ तु शब्देन व्यावर्त्तनायोगात्, ज्ञानकर्मणोस्समुच्चिता-समुच्चितयोर्मुक्तिहेतुत्वं त्वन्मते निराकृत्यानन्तरमेव पुनस्तदङ्गीकारायोगाच्च। तस्मात्पूर्वोक्तमेव ग्राह्यम्।।७२।।

अस्तु तर्हि प्रस्तुतदोषपरिहाराय केवलो भेद एवानेकरसेन ब्रह्मणेत्याशङ्क्य तत्पक्षे न ज्ञानविधिनोऽपि कर्मविधिस्सम्भवतीत्याह—**इतरस्मिंस्त्विति**। कर्मण्युपासनाख्ये मानसे बाह्ये चेति यावत्।।७३।।

सर्वकर्मनिमित्तसंभवासंभवाभ्यां सर्वकर्मसङ्करश्च प्राप्नोति। यस्मात्–

सर्वजात्यादिमत्त्वेऽस्य नितरां हेत्वसंभवः।
विशेषं ह्यनुपादाय कर्म नैव प्रवर्तते।।७४।।

स्याद्विधिरध्यात्माभिमानादिति चेन्नैवम्। यस्मात्–

न चाध्यात्माभिमानोऽपि विदुषोऽस्त्यासुरत्वतः।
विदुषोऽप्यासुरश्चेत्स्यान्निष्फलं ब्रह्मदर्शनम्।।७५।।

अज्ञानकार्यत्वान्न समकालं नापि क्रमेण[१] ज्ञानकर्मणोर्वस्त्व-वस्तुतन्त्रत्वात्सङ्गतिरस्तीत्येवं निराकृतोऽपि, काशं कुशं वावलम्ब्याह[२]–

अथाध्यात्मं[३] पुनर्यायादाश्रितो मूढतां भवेत्।
स करोत्येव कर्माणि को ह्यज्ञं विनिवारयेत्।।७६।।

सिद्धत्वाच्च न साध्यम्। यतः–

निःश्वासोच्छ्वासवत्तस्मान्न[४] नियोगमपेक्षते।।७७।।

---

किञ्चाभेदपक्षे विद्वान् ब्राह्मणश्शूद्र इतरश्च भवति, सर्वात्मत्वात्ततश्च वर्णाश्रमादि-विशेषनियमाभावान्नियते कर्मणि प्रवृत्तिर्नोपपद्यते इत्याह—**सर्वकर्मेति**। ब्राह्मणत्वात्सम्भवः शूद्रत्वाच्चासम्भवः। एवमत्र योज्यम्। यदा विदुषः प्रतीतवर्णाश्रमाद्यभिमानस्स्वाभाविको भवति, तदा कर्मविधिगोचरत्वं भविष्यति।।७४।।

शङ्कामुत्थाप्य परिहरति—**स्याद्विधिरित्यादिना**।।७५।।

कथं विदुषोऽनुभवसिद्धस्य शरीराद्यभिमानस्य युक्त्या निराकरणमिति शङ्कां प्रदर्श्य तर्हि तस्यानवगतब्रह्मस्वभावत्वात् कामाधिकारेऽपि न ज्ञानकर्मसमुच्चय इति परिहरति—**अज्ञानकार्यत्वादित्यादिना**।।७६।।

पुनरपि विदुषः कर्मासम्भवमाह—**सिद्धत्वाच्चेति**।।७७।।

---

१ न समकालं नापि क्रमेण—"समकालं समप्राधान्येन क्रमेणाङ्गाङ्गिभावेन वा" (सारार्थः)

२ काशं कुशं वावलम्ब्य—दुर्बलप्रमाणमवलम्ब्य इति भावः। यथा—नदीप्रवाहे पतितः कश्चित्तीरप्राप्त्येच्छया तीरस्थं काशं कुशं वाऽवलम्बयति, अनेन कुशादयोऽपि तेन सहैव प्रवाहे गच्छन्ति।

३ अथाध्यात्मं पुनर्यायात्–"विद्वानपि सन् — पुनर्यदि देहादावात्माभिमानं कुर्यात्" (सारार्थः)

४ अस्य योगिनः = "कर्मयोगिनो विदुषः"। (सारार्थः)

निःश्वासोच्छ्वासवत् – "तद्वदप्रयत्नसिद्धत्वादिति भावः।

**अस्तु तर्हि भिन्नाभिन्नात्मकं ब्रह्म। तथा च सति ज्ञानकर्मणी संभवतो भेदाभेदविषयत्वात्तयोः। तत्र तावदयं पक्ष एव न संभवति। किं कारणम्? न हि भिन्नोऽयमित्यभेदबुद्धिमनिराकृत्य भेदबुद्धिः पदार्थमालिङ्गते। एवं ह्यनभ्यूपगमे भिन्नाभिन्नपदार्थयोरलौकिकत्वं[१] प्रसज्येत। अथ निष्प्रमाणकमप्याश्रीयते तदप्युभयपक्षाभ्युपगमादभेदपक्षे दुःखि ब्रह्म स्यादत आह–**

**भिन्नाभिन्नं विशेषैश्चेद्दुःखि स्याद्ब्रह्म ते ध्रुवम्।**
**अशेषदुःखिता च स्यादहो प्रज्ञाऽऽत्मवादिनाम्।।७८।।**

---

एवमभेदपक्षे निराकृते पुनर्भेदाभेदपक्षमुत्थापयति तस्य स्वरूपेणैवासम्भवं दर्शयितुम्-**अस्तुतर्हीं**[२]ति। तत्र च कर्मज्ञानकाण्डयोः प्रामाण्यानुपपत्तिः प्रमाणमभेदं विना ब्रह्मास्मीति ज्ञानानुपपत्तेर्भेदं विना चानेककारकसाध्यकर्मणोऽनुपपत्तेश्चेति दर्शयति—**तथा चेति**। तिष्ठतु तावत् ब्रह्मणो भिन्नाभिन्नत्वं लोकेऽप्ययं पक्षो न सम्भवतीत्याह—**तत्र तावदिति**। ननु सन्घटः शुक्लः पटो मृच्छरावो दण्डी देवदत्त इत्यादौ सामान्यविशेषद्रव्यगुणादीनां सामानाधिकरण्यमत्यन्तभेदेऽभेदे च पटो घटोऽश्वो महिष इत्यादावदर्शनादनुपपद्यमानं भिन्नाभिन्नत्वं कल्पयतीति शङ्कते—**किं कारणमिति**। तर्हि वक्तव्यं अभेद इत्यत्र नञा[३]किं भेदाभावः किं वा भेदविरोधी भेदादन्यो वाभिधीयत इति। न तावदाद्यौ। तथा सति भेदाभेदयोरेकत्र युगपत्समावेशानुपपत्तेः। नापि तृतीयः रूपरसादीनामपि भेदादन्यत्वेनाभेदत्वप्रसङ्गादेवंविधभेदाभेदयोरभ्युपगमे चालौकिकत्वापत्तेस्सामानाधिकरण्यं प्रत्ययस्य च कल्पितभेदेनापि सोऽयं देवदत्तः खं छिद्रमित्यादाविव सम्भवादित्यभिप्रेत्य परिहरति—**नहि भिन्नोयमिति**। भेदबुद्धिरभेदबुद्धिमनिराकृत्य न हि पदार्थमालिङ्गत इत्यन्वयः। अस्तु यथा तथा वा लोके ब्रह्मणि पुनर्भिन्नाभिन्नत्वं सर्वथैवानुपपन्नमित्याह—**अथेति**। न केवलं दुःखित्वमात्रं सर्वजीवाभेदात् तद्गतमखिलमपि दुःखित्वं ब्रह्मगतमेवेति तत्प्राप्तिरनर्थायैव स्यादिति सोपहासमाह—**अशेषेति**।।।७८।।

---

१ अलौकिकत्वं – अप्रसिद्धत्वमिति भावः।

२ अभेदं विना ब्रह्माहमस्मीति ज्ञानानुपपत्तेर्भेदं विना चानेककारकसाध्यकर्मानुपपत्तेश्च भिन्नाभिन्नात्मकं ब्रह्मेति भावः।

३ नञ् शब्दः षड्विधेषु अर्थेषु प्रयुक्तो भवति।
'तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।
अप्राशस्तं विरोधश्च नञोऽर्थाः षट् प्रकीर्तिताः।। इति प्राञ्चः।।

तस्मात्सम्यगेवाभिहितं न ज्ञानकर्मणोः समुच्चय इत्युपसंह्रियते–

तमोऽङ्गत्वं यथा भानोरग्नेश्शीताङ्गता यथा।
वारिणश्चोष्णता यद्वत् ज्ञानस्यैव क्रियाङ्गता।।७९।।

यथोक्तोपपत्तिबलेनैव पूर्वपक्षस्योत्सारितत्वाद्वक्तव्यं नावशेषितमित्यतः प्रतिपत्तिकर्मवत्पूर्वपक्षपरिहाराय यत्किञ्चिद्वक्तव्यमित्यत इदमभिधीयते–

''मुक्तेः क्रियाभिः सिद्धत्वात्'' इत्याद्यनुचितं बहु।
यदभाणि तदन्याय्यं यथा तदधुनोच्यते।।८०।।

योऽयं काम्यानां प्रतिषिद्धानां च त्यागः प्रतिज्ञायते, सा प्रतिज्ञा तावन्न शक्यतेऽनुष्ठातुम्। किं कारणम्? कर्मणो हि निर्वृत्तात्मनो द्वाभ्यां प्रकाराभ्यां निवृत्तिः संभवत्यारब्धफलस्योपभोगेनानारब्धफलस्याशुभस्य प्रायश्चित्तैरिति। तृतीयोऽपि त्यागप्रकारोऽकर्त्रात्मावबोधात्, स त्वात्मज्ञानानभ्युपगमाद्भवता नाभ्युपगम्यते। तत्र यान्यनुपभुक्तफलान्यनारब्धफलानि, तानीश्वरेणापि केनचिदपि न शक्यन्ते परित्यक्तुम्। अथारब्धफलानि त्यज्यन्ते,

---

तमोङ्गत्वमिति। ज्ञानस्य कर्माङ्गत्वाभावे कर्मणश्च ज्ञानाङ्गताऽभावे समसमुच्चयाभावे च दृष्टान्तत्रयम्। क्रियाङ्गतेत्यत्र क्रियां प्रत्यङ्गता क्रियाङ्गसमस्येति क्रियाङ्गतेत्युभयथा द्रष्टव्यम् ।।७९।।

केवलकर्मणां ज्ञानसमुच्चितानां वा मोक्षसाधनत्वस्य निराकरणात् ज्ञानस्यैव मोक्षसाधनत्वं सिद्धम्। तत्र किमुत्तरग्रन्थसन्दर्भेणेत्याशङ्क्य प्रमेयस्योपपादितत्वेऽपि तदुक्तीनामनिराकरणे तत्पक्षो न निराकृत इति मन्दमतीनामाशङ्का स्यात्तन्निवृत्तये तदुक्तीनां क्रमेण खण्डनायोत्तरग्रन्थ इत्याह—**यथोक्तेति**। प्रतिपत्तिकर्मवदिति। उपयुक्त द्रव्यस्य परित्यागे ''चात्वाले कृष्णविषाणमुत्सृजेदि'' ति नियमवन्निराकृतेऽपि पूर्वपक्षे तदुक्तिक्रमनिरासायायं प्रयत्न इत्यर्थः।।८०।।

तत्र ''अकुर्वतः क्रियाः काम्या निषिद्धास्त्यजतस्तथे''ति यदुक्तं तत्तावन्निराकरोति—**योयमिति**। तत्किमनुष्ठितानां परित्यागः किम्वा तदनुष्ठानस्येति विकल्प्य नाद्यः इत्याह—**कर्मणो हीति**। निर्वृत्तात्मनो निष्पन्नस्वरूपस्य। ननु ''क्षीयन्ते चास्य

तान्यपि न शक्यन्ते त्यक्तुम्। किं कारणम्? अनिवृत्तेः। अनिर्वृत्तं हि चिकीर्षितं कर्म शक्यते त्यक्तुं, प्रवृत्तिनिवृत्ती प्रति कर्तुः स्वातन्त्र्यात्। निर्वृत्ते तु कर्मणि तदसंभवाद्दुरनुष्ठेयः प्रतिज्ञातार्थः। अशक्यप्रतिज्ञानाच्च। न च शक्यते प्रतिज्ञातुं यावज्जीवं काम्यानि प्रतिषिद्धानि च कर्माणि न करिष्यामीति, सुनिपुणानामपि [1]सूक्ष्मापराधदर्शनात्। प्रमाणाभावाच्च। न च प्रमाणमस्ति, मोक्षकामो नित्यनैमित्तिके कर्मणी कुर्यात्काम्यप्रतिषिद्धे च वर्जयेदारब्धफले चोपभोगेन क्षपयेदिति। आनन्त्याच्च। न चोपचितानां कर्मणामियत्तास्ति, संसारस्यानादित्वात्। न च काम्यैः प्रतिषिद्धैर्वा तेषां निवृत्तिरस्ति, शुद्ध्यशुद्धिसाम्ये सत्यविरोधादित्याह—

न कृत्स्नकाम्यसंत्यागोऽनन्तत्वात्कर्तुमिष्यते।
निषिद्धकर्मणश्चेत्तु व्यतीतानन्तजन्मसु।।८१।।

स्यान्मतं, व्यतीतानन्तजन्मोपात्तानां कर्मणाम्—

क्षयो नित्येन तेषां चेत्प्रायश्चित्तैर्यथैनसः।
निष्फलत्वान्न नित्येन काम्यादेर्विनिवारणम्।।८२।।

---

कर्माणि तस्मिन्दृष्टे परावरे'' इति ज्ञानादपि सर्वकर्मनिवृत्तिः श्रूयते[2] इति तत्राह—**तृतीयोपीति**। भवत्वेवं ततः किमित्यत आह—**तत्रेति**। तान्येव विशिनष्टि—**आरब्धेति**। उपभोगप्रायश्चित्ताभ्यां विना निष्पन्नस्यानिवृत्तेरित्यर्थः। एतदेव व्यतिरेकमुखेनोपपादयति—**अनिर्वृत्तं हीति। तदसम्भवात्** स्वातन्त्र्यासम्भवात्। अथानुष्ठानस्यैव परित्याग इति द्वितीयं पक्षं दूषयति **आन्यन्त्याच्चेति**। तदेव प्रपञ्चयति—**न चेति**। तर्ह्यस्त्रमस्त्रेण शाम्यतीति न्यायेन काम्यैः काम्यानां प्रतिषिद्धैः निवृत्तिरस्त्विति। अत आह—**न च काम्यैरिति**। उपपादितेऽर्थे श्लोकमवतारयति—**इत्यत आहेति**।।८१।।

अस्तु तर्हि तेषां नित्यकर्मणा निवृत्तिरित्याशङ्क्य परिहरति—**स्यान्मतमिति**।।८२।।

उपात्तदुरितक्षयार्थानि नित्यानीति भाट्टादिभिरभ्युपगमान्नित्यानां निष्फलत्वमसिद्धमित्याशङ्क्याथापि काम्यनिवृत्तिस्ततो भवतीत्यत्र प्रमाणं न पश्याम इत्याह—

---

१ सुनिपुणानामित्यादि—''रामादीनामीश्वरावताराणामप्ययोग्य-बालिवधविलापादिदर्शनात्''। (सारार्थः)

२ तत्र कथं द्वाभ्यां प्रकाराभ्यामित्युच्यत इति शेषः।

**प्रमाणाभावाच्च। कथम्–**

**पापापनुत्तये वाक्यात्प्रायश्चित्तं यथा तथा।**
**गम्यते काम्यहानार्थं नित्यं कर्म न वाक्यतः।।८३।।**

**अथापि स्यात्काम्यैरेव काम्यानां पूर्वजन्मोपचितानां क्षयो भविष्यति, तन्न; यतः–**

**पाप्मनां पाप्मभिर्नास्ति यथैवेह निराक्रिया।**
**काम्यैरपि तथैवास्तु काम्यानामविरोधतः।।८४।।**

**एवं तावत् 'मुक्तेः क्रियाभिः सिद्धत्वात्' इति निराकृतम्। अथात्मज्ञानस्य सद्भावे प्रमाणासंभव उक्तस्तत्परिहारायाह–**

**श्रुतयस्स्मृतिभिस्साकमानन्त्यात्कामिनामिह।**
**विदधत्युरुयत्नेन कर्मातो बहुकामदम्।।८५।।**

**न च बाहुल्यं प्रामाण्ये कारणभावं प्रतिपद्यते। अत आह–**

**प्रामाण्याय न बाहुल्यं न ह्येकत्र प्रमाणताम्।**
**वस्तुन्यटन्ति मानानि त्वेकत्रैकस्य मानता।।८६।।**

**यत्तूक्तं 'यत्नतो वीक्षमाणोऽपि' इति, तत्रापि भवत एवापराधः। कस्मात्? यतः–**

---

**प्रमाणाभावाच्चेति**।।८३।।

अस्तु तर्हि काम्यैरेव काम्यानां निवृत्तिरित्याशङ्क्य श्लोकेन परिहरति—**अथापीत्यादिना**।।८४।।

यदुक्तम् पूर्ववादिना ''युवत्यश्चेह विद्यन्त'' इति तत्परिहारायोत्तरश्लोक इति वृत्तं सङ्कीर्त्तयन्नाह—**एवन्तावदिति**। काम्यमानविधिफलसाधनत्वमेव तत्र तत्र कर्मणां दर्शितं न पुनरात्मज्ञानान्तरस्य वा मोक्षसाधनत्वं वाऽस्तीति तत्र दर्शितमिति भावः।।८५।।

कर्मप्रतिपादकवेदवाक्यानां बहुलत्वादात्मप्रतिपादकानां चाल्पत्वात् कर्मण्येव वेदस्य तात्पर्यमित्यत आह—**न चेति**। प्रमाणानां स्वतः प्रमाणत्वेन स्वविषयसाधने प्रमाणान्तरानपेक्षत्वात् सम्बादात् प्रामाण्यमित्यनङ्गीकारात् काम्यकाण्डेष्वेकैकस्मिन् कर्मण्येकैकस्य वाक्यस्य प्रमाणत्वात् कर्मणां बहुत्वेन तत्र वाक्यबाहुल्यसम्भवादात्मनः एकतया तत्प्रतिपादकवाक्यबाहुल्यानपेक्षणाच्चार्थभेदेन वाक्यबाहुल्यस्योभयत्रापि अविशेषान्न बाहुल्यं प्रामाण्यायापेक्षणीयमिति भावः।।८६।।

यत्पुनरुक्तं वेदान्तेषु विध्यभावात् प्रामाण्यं न सम्भवतीति तत्राह—**यत्तूक्तमिति**।

**'परीक्ष्य लोकान्' इत्याद्या आत्मज्ञानविधायिनीः[१]।**
**नैष्कर्म्यप्रवणस्साध्वीः श्रुतीः किं न शृणोषि ताः।।८७।।**

**ननु 'आत्मेत्येवोपासीत' 'आत्मा वा अरे द्रष्टव्यः' इत्यपूर्वविधिश्रुतेः पुरुषस्यात्मदर्शनक्रियायां नियोगोऽवसीयत इति। नैवम्। अपुरुषतन्त्रत्वाद्वस्तुयाथात्म्यज्ञानस्य सकलानर्थ-बीजात्मानवबोधोत्सारिणो मुक्तिहेतोरिति। विध्यभ्युपगमेऽपि**

---

**आत्मज्ञानविधायिनीरिति।** आत्मज्ञानायाचार्योपगमनादिविधायिनीरित्यर्थः।[२] **नैष्कर्म्यप्रवणा**[३] इति फलवत्वमुक्तम्। **साध्वी**रित्युपक्रमाद्यधिगततात्पर्यवत्त्वम्।।८७।।

आत्मज्ञानविधायिनीरिति यथाश्रुतमेव गृहीत्वा नियोगपरत्वं वेदान्तानां प्राप्तमिति शङ्कते—**नन्वेवमित्यादिना।** ज्ञानस्य प्रमाणवस्तुपरतन्त्रत्वादिच्छया कर्तुमकर्तुमन्यथा-कर्तुमशक्यत्वादन्वयव्यतिरेकसिद्धफलत्वेन च विध्यनपेक्षणात्तस्याविधेयत्वम्। किन्तु तत्साधनश्रवणादेरेवेत्यभिप्रेत्य परिहरति—**मैवमिति।** ननु "श्रोतव्यो मन्तव्य" इति श्रवणादिविधिव्यतिरेकेण द्रष्टव्य इति दर्शने विधिश्श्रूयते इत्याशङ्क्य मैवं दर्शनस्याविधेयत्वप्रतिपादनात् प्राप्तत्वाच्च तत्राऽपूर्वविध्यसंभवादिति[४] परिहरति—**विध्यभ्युपगमेऽपि इति।** विध्यर्थे विधिप्रत्ययस्य लिङादेरर्थः। तत्रानेकत्र पाक्षिकतया प्राप्तौ परिसंख्यति[५] कीर्त्यत इति वचनादत्र चानात्मदर्शनस्य प्रावल्यादात्मदर्शनस्य

---

१ आत्मज्ञानविधायिनी – आत्मज्ञानाय आचार्योपगमनादिविधायिनी इति भावः।

२ स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमिति च श्रुतेः। (मु.उ. २.१.१२)

३ नैष्कर्म्य प्रवणा इति—"अद्वितीयानन्दब्रह्मात्मैक्यफलिकाः
न तु स्वर्गादिविधिवदाभासफलिकाः।" (सारार्थः)

४ **अपूर्वविधिः**—विधिर्वा स्यादपूर्वत्वात् (मी.द., ३.४.३) इति जैमिनिः। सर्वथाऽ-प्राप्तविषयस्य प्रापको यो विधिः, स एवापूर्वविधिरिति भावः। यथा—"व्रीहीन् प्रोक्षति" इत्यत्र प्रोक्षणरूपं यत् संस्कारकर्म तदेतद् विधिवाक्यादन्यत्र केनापि प्रमाणेन नोपलभ्यते, तस्मादयमपूर्वविधिः।

५ **परिसंख्याविधिः**—"परिसंख्या" (मी.द. १.२.३४) इति जैमिनिः। उभयोश्च युगपत्प्राप्तावितरव्यावृत्तिपरो विधिः परिसंख्याविधिः। यथा—"पञ्च पञ्चनखा भक्ष्या" इति। इदं ही वाक्यं न पञ्चनखभक्षणपरं, तस्य रागतः प्राप्तत्वात्। नापि नियमपरं, पञ्चपञ्चनखभक्षणस्य युगपत्प्राप्तेः पक्षे प्राप्त्यभावात्। अत इदमपञ्चनखभक्षणनिवृत्तिपरमिति भवति परिसंख्याविधिः। (अर्थसंग्रहः)

परिसंख्याविधौ "नञ्" शब्दस्याभावात् निषेधवाक्यमित्यनुक्त्वा विधिवाक्यमेवाऽभिधीयते। वस्तुतस्तु तन्निषेधविधावेव पर्यवस्यते। किन्तु "न कलञ्जं भक्षयेत्" इत्यादि निषेधात्

**नापूर्वविधिरयम्। अत आह—**

**नियमः परिसंख्या च विध्यर्थोऽपि भवेद्यतः।**
**अनात्मादर्शनेनैव परात्मानमुपास्महे।।८८।।**

**यच्चोक्तं 'विश्वासो नान्यतोऽस्ति नः' इति, तदपि निद्रान्तुरचेतसा त्वया स्वप्नायमानेन प्रलपितम्। किं कारणम्? न हि वयं प्रमाणबलेनैकात्म्यं प्रतिपद्यामहे, ऐकात्म्यस्य स्वत एवानुभवमात्रात्मकत्वात्। अत एव सर्वप्रमाणावतारासंभवं वक्ष्यति। प्रमाणव्यवस्थायाश्चानुभवमात्राश्रयत्वात्। अत आह—**

**वाक्यैकगम्यं यद्वस्तु नान्यस्मात्तत्र विश्वसेत्।**
**नाऽप्रमेये स्वतसिद्धेऽविश्वासः कथमात्मनि।।८९।।**

---

पाक्षिकत्वे नियमविधि[1] "रात्मा द्रष्टव्य" इति। यदा चात्मानात्मदर्शने तुल्यवत् प्राप्तोऽहमित्यात्मस्फुरणव्यतिरेकेणानात्मनो (स्फुरणात्तत्र) परिसंख्या तेनात्मोपासनमप्यनात्मदर्शनव्यावृत्त्यैव सिद्ध्यति। आत्मप्रत्ययानां पौनः पुण्येन स्वतःएव प्राप्तत्वात्तस्मात्रापूर्वविधिरप्यप्राप्त्यभावादित्यर्थः।।८८।।

प्रमाणगम्ये वस्तुनि तदभावादविश्वासो भवति स्वतस्सिद्धतया सन्ततं प्रकाशमाने पुनरात्मनि न प्रमाणाभावादविश्वास इत्याह—**न हीति**। "प्रत्यक्षादीनामनेवं विषयत्वात्तेषां" स्वारम्भविषयोपनिपातित्वादि"त्यादिना चायमर्थो वर्णयिष्यत इत्याह—**अत एवेति।** किञ्च प्रमाणादीनां सिद्धेरनुभवाधीनत्वान्नानुभवरूपस्यात्मनः प्रमाणाधीनसिद्धिरित्याह—**प्रमाणेति**।। ( अप्रमेये स्वतःसिद्ध आत्मनि न) कथं विश्वास इत्यन्वयः।।८९।।

---

परिसंख्यायाः भिन्नं यदितरनिवृत्तिपरत्वमेव परिसंख्यायाः फलम्। अत्र खलु शास्त्रसिद्धान्तलेशसंग्रहे अप्पय्यदीक्षितमहाभागाः—"एकस्मिन् शेषिणि द्वयोः शेषयोः द्वयोः शेषिणोरेकस्य शेषस्य वा नित्यप्राप्तौ शेष्यन्तरस्य वा निवृत्तिफलको विधिः परिसंख्या विधिः (शा.सि.ले.सं., प्रथम परिच्छेदः)।

१ **नियमविधिः**—नियमार्था वा श्रुतिः (मी.द., ४.२.२४) इति जैमिनिः। पक्षेऽप्राप्तस्य प्रापको विधिर्नियमविधिः, यथा "व्रीहीनवहन्ती" इत्यादिः। (अर्थसंग्रहः)
दर्शपौर्णमासाख्ये क्रतौ पुरोडाशाय तण्डुलनिष्पत्त्यर्थं वैतुष्यकरणाय नखविदलनावघातादयः बहुविधा उपायाः सन्ति, तत्र नियम विधिबलात् अवघातद्वारैव कार्यम् सम्पादनीयम्। "व्रीहीन् अवहन्यादेवे"ति नियमः। एवम् पक्षेऽवघातस्याप्राप्तत्वेन तद्विधाननामक-मप्राप्तांशपूरणम् अनेन विधिना क्रियते। दृष्टमदृष्टञ्चेत्युभयमेव नियमविधेः फलम्। नियमविधिविहितेन अवघातादिकर्मणा यथा वैतुष्यं दृष्टफलं, तथैव नियमादृष्टमपि उत्पद्यते।

यदप्युक्तं 'अन्तरेण विधिम्' इति, तदप्यबुद्धिपूर्वकमिव नः प्रतिभाति। यस्मात्कालान्तरफलदायिषु कर्मस्वेतद्घटते। आत्मलाभकाल एव फलदायिनि त्वात्मज्ञाने नैतत्समञ्जसमित्याह–

ज्ञानात्फले ह्यवाप्तेऽस्मिन्प्रत्यक्षे भवघातिनि।
उपकाराय तत्रेति न न्याय्यं भाति नो वचः।।९०।।

यदपि जैमिनीयं वचनमुद्धाटयसि–तदपि तद्विवक्षाऽपरिज्ञाना-देवोद्भाव्यते। किं कारणम्? यतो न जैमिनेरयमभिप्रायः, आम्नायः सर्व एव क्रियार्थ इति। यदि ह्ययमभिप्रायोऽभविष्यत्, 'अथातो ब्रह्मजिज्ञासा, जन्माद्यस्य यतः' इत्येवमादिब्रह्मवस्तुस्वरूपमात्रया-थात्म्यप्रकाशनपरं गम्भीरन्यायसंदृब्धं सर्ववेदान्तार्थमीमांसनं श्रीमच्छारीरकं नासूत्रयिष्यत्। असूत्रयच्च। तस्माज्जैमिनेरेवायम-भिप्रायो यथैव विधिवाक्यानां स्वार्थमात्रे प्रामाण्यमेवमैकात्म्य-वाक्यानामप्यनधिगतवस्तुपरिच्छेदसाम्यादिति। अत इदमभिधीयते–

अधिचोदनं आम्नायस्तस्यैव स्यात्क्रियार्थता।
तत्त्वमस्यादिवाक्यानां ब्रूत कर्मार्थता कथम्।।९१।।

अपि च, ऐकात्म्यपक्ष इवादृष्टार्थकर्मसु भवत्पक्षेऽपि

---

दृष्टफलत्वादात्मज्ञानस्य विध्यभावेन फलाभावाभिधानमनुभवविरुद्धमित्याह— **यदपीत्यादिना**।।९०।।

यत्पुन''राम्नायस्य क्रियार्थत्वादि''त्युक्तन्तत्राह—**यदपि जैमिनीयमिति**। किमत्र प्रमाणमित्याह—**यदि हीति**। सिद्धरूपस्याकर्तुरभोक्तुः प्रत्यगात्मनः प्रतिपादक वेदान्तवाक्यविचाराय पृथक् शास्त्रारम्भान्यथानुपपत्तिरित्यत्र प्रमाणमित्यर्थः। तर्ह्या''म्नायस्य क्रियार्थत्वादि''त्यस्य सूत्रस्य कोऽर्थ इत्यत आह—**अधिचोदनमिति**। कर्मप्रकरणे पठितानां ''सोऽरोदीदि''त्यादि सिद्धार्थवादवाक्यानामानर्थक्यमनेन सूत्रेणाशङ्क्य विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युरिति विधिशेषत्वेन सार्थकत्वन्तेषां सिद्धान्तितमित्यर्थः।।९१।।

यत्पुनरुक्तम् ''कुर्वन्नेवेह कर्माणि'' इत्ययं मन्त्रः कृत्स्नमायुः कर्मण्येव विनियुङ्क्त इति तदप्ययुक्तम्। आत्मनः परमार्थतः कर्तृत्वभोक्तृत्वाद्यभावात्तद्विदः कर्माधिकारासम्भवात् तस्मादविद्वद्विषय एवायं मन्त्र इति प्रदर्शयितुमाह—**अपि**

**प्रवृत्तिर्दुर्लक्ष्या। यतः–**

**स्वर्गं यियासुर्जुहुयादग्निहोत्रं यथाविधि।**
**देहाद्व्युत्थापितस्यैवं कर्तृत्वं जैमिनेः कथम्।।९२।।**

**न च प्रत्याख्याताशेषशरीरादिकर्मसाधनस्वभावस्यात्ममात्रस्य कर्मस्वधिकारः। यस्मात्–**

**सर्वप्रमाणासंभाव्यो ह्यहंवृत्त्येकसाधनः।**
**युष्मदर्थमनादित्सुर्जैमिनिः प्रेर्यते कथम्।।९३।।**

**प्रवृत्तिकारणाभावाच्च। यस्मात्–**

**सुखदुःखादिभिर्योग आत्मनो नाहमेक्ष्यते।**
**पराक्त्वात्प्रत्यगात्मत्वाज्जैमिनिः प्रेर्यते कथम्।।९४।।**

**किंच–**

---

**चेति।**[1] देहान्तरोपभोग्यस्वर्गादि साधनान्यग्निहोत्रादिविध्यन्यथानुपपत्त्या प्रतीतस्य देहेन्द्रियादिव्यतिरिक्तस्य सर्वगतस्य निरवयवस्यात्मनो न परिस्पन्दपरिणामलक्षण-क्रियावेशात्मकं कर्तृत्वमुपपद्यते। न च प्रयत्नाश्रयत्वेनापि कर्तृत्वं प्रयत्नस्यान्तःकरण-धर्मत्वादनित्यस्य नित्यगुणत्वानुप-पत्तेश्चेत्यर्थः।।९२।।

एवं कर्त्रन्वयन्निराकृत्याधिकारान्वयन्निराचष्टे—**न चेति।** प्रत्याख्यातमशेषं शरीरादिलक्षणं कर्मसाधनं येन तत्स्वभावस्यात एवात्ममात्रस्य। सर्वप्रमाणागोचरश्चेत् कथं तर्हि व्यवह्रियत इत्यत आह—**अहं वृत्त्यैव साधन इति।** युष्मदर्थमहंकारादि-लक्षणमनादित्सुः परमार्थतस्तत्संसर्गरहितजैमिनीर्जीवः प्रेर्यते प्रवर्त्यते विधिना कथञ्चिदित्यर्थः।।९३।।

इदानीं भोक्त्रन्वयं निराचष्टे—**प्रवृत्तीति।** प्रवृत्तिकारणं प्रयोजनम्। कथं भोक्तृत्वा-भावः सुख्यहं दुःख्यहमित्यहं प्रत्ययेनात्मनस्सुखित्वदुःखित्वादि सम्बन्धानुभवादिति चेन्मैवम्। सुखदुःखादीनां साक्ष्यत्वेन पराक्त्वादात्मनश्च साक्षित्वेन प्रत्यक्त्वात्तेषां पराग्रूपान्तःकरणपरिणामित्वादात्मधर्मत्वानुपपत्तेरित्याह—**सुखेति।**।९४।।

भोगसाधनैः सम्बन्धासम्भवादप्यात्मनोऽहं प्रत्ययालम्बनेन शरीरेणापि न सम्बन्धः। अहं प्रत्ययानालम्बनैः पुनर्विषयैश्शब्दादिभिरतिशयेन नास्ति सम्बन्धः। अतः कथमस्य

---

१ यथा वेदान्तीनां ज्ञाने विध्यभावादप्रवृत्तिस्तथा भवत्पक्षे विध्यभ्युपगमेऽप्यग्निहोत्रादि-कर्मस्वप्रवृत्तिरिति भावः।

न तावद्योग एवास्ति शरीरेणात्मनः सदा।
विषयैर्दूरतो नास्ति स्वर्गादौ स्यात्कथं सुखम्।।९५।।
यस्मादन्यथा नोपपद्यते–
नराभिमानिनं[१] तस्मात्कारकाद्यात्मदर्शिनम्।
मन्त्र आहोररीकृत्य 'कुर्वन्' इति न निर्द्वयम्।।९६।।

यच्चोक्तं 'विरहय्य' इति तदपि न सम्यगेव। तथापि तु न या काचित्क्रिया यत्र क्व चाध्याहरणीयां किं तु या यत्राभिप्रेतसंबन्धं घटयितुं शक्नोत्याकाङ्क्षां च वाक्यस्य पूरयति सैवाध्याहरणीया। एवं विशिष्टा च क्रियाऽस्माभिरभ्युपगतैव। सा तूपादित्सित-वाक्यार्थाविरोधिन्येव नाभूतार्थप्रादुर्भावफलेति। षड्भावविकार-रहितात्मवस्तुनो निर्धूताशेषद्वैतानर्थस्यापराधीनप्रकाशस्य विजिज्ञा-पयिषितत्वादस्यस्मीत्यादिक्रियापदं स्वमहिमसिद्धार्थप्रतिपादन-समर्थमभ्युपगन्तव्यं, न विपरीतार्थप्रतिपादनपरमिति।

---

सम्बन्धाय प्रवृत्तिस्स्यादिति आह—**किञ्चेति**।।९५।।

एवं कर्त्रन्वयाधिकारान्वय भोक्त्रन्वयानामात्मनः परमार्थतोऽसम्भवादनाद्य-विद्यावशाद्देहेन्द्रियादावहं ममेति मिथ्याभिमानवत एव कर्माधिकारो मन्त्रेण प्रदर्श्यत इति फलितमित्याह—**यस्मादित्यादिना**।।९६।।

**तदप्यसम्यगेवेति**।[२] अयम्भावः। "फलिता अमी" "रमणीयमिदं वचनमि"-त्यादावन्तरेणापि क्रियापदं वाक्यार्थप्रतीतेर्दर्शनान्न वाक्यार्थप्रतिपत्तौ क्रियापदापेक्षेति। तत्रापि पश्य गच्छेति वा क्रियापदं प्रयोक्तव्यमेव। तन्न प्रयुज्यते द्वारं विव्रियतामित्यर्थे द्वारमित्येव प्रयोगादित्याशङ्क्यैवमपि तत्तद्वाक्यार्थप्रतिपत्त्युपयोगि क्रियाभिधायिन एव पदस्याध्याहरणीयत्वात् प्रवर्तकक्रियापदमेवाध्याहरणीयमिति नियन्तुमशक्यत्वाद्वेदान्तवाक्ये चास्यस्मीति क्रियापदस्याभ्युपगतत्वान्न कश्चिद्दोष इत्याह—**तथापि त्विति**। **नाभूतेति**। उत्पत्तिविकृत्यादिफल एव न भवन्तीति यावत्। तत्र हेतुमाह—**षड् भावेति**[३]। अनर्थनिवृत्त्यर्थमपि न क्रियाध्याहारपेक्षेत्याह—**निर्धूतेति**। तत्र प्रतीत्यर्थम-पेक्ष्यतामित्यताह—**अपराधीनस्येति**। उक्तमेवार्थं दृष्टान्तेनोपपादयति—**धावदिति**।

---

१ नराभिमानिनम् – नरत्वाभिमानिनं मनुष्यत्वाभिमानिनमिति भावः।
२ तदपि न सम्यगिति मूलम् मुद्रितपुस्तके वर्तते।
३ जायते, अस्ति, वर्द्धते, विपरिणमते, अपक्षीयते, नश्यतीति षड्भावविकाराः।

धावेदिति न दानार्थे पदं यद्वत्प्रयुज्यते।
एधीत्यादि तथा नेच्छेत्स्वतःसिद्धार्थवाचिनि।।९७।।

न च यथोक्तवस्तुवृत्तप्रतिपादनव्यतिरेकेण तत्त्वमस्यादिवाक्यं वाक्यार्थान्तरं वक्तीति शक्यमध्यवसातुमित्याह–

तत्त्वमस्यादिवाक्यानां स्वतस्सिद्धार्थबोधनात्।
अर्थान्तरं न संद्रष्टुं शक्यते त्रिदशैरपि।।९८।।

यस्मादेवम्–

अतः सर्वाश्रमाणां तु वाङ्मनः कायकर्मभिः।
स्वनुष्ठितैर्न मुक्तिः स्याज्ज्ञानादेव हि सा यतः।।९९।।

तस्माच्च कारणादेतदप्युपपन्नम्–

स्वमनोरथसंक्लृप्तप्रज्ञाध्मातधियामतः।
श्रोत्रियेष्वेव वाचस्ताः शोभन्ते नात्मवेदिषु।।१००।।

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीमच्छङ्करभगवत्पूज्यपादशिष्य-श्रीसुरेश्वराचार्यकृतौ नैष्कर्म्यसिद्धौ सम्बन्धोक्तौ प्रथमोऽध्यायः।।

---

हिरण्यं दद्यादित्यस्मिन्नर्थे: हिरण्यं धावेदित्ययोग्यत्वाद्यथा न प्रयुज्यते तथैधीत्यादि[1] पदं वृद्ध्यादि विकाररहितात्मवस्तुप्रतिपादकवाक्ये न प्रयोक्तव्यमित्यर्थः।।९७।।

ननु तत्त्वमस्यादिवाक्यानां स्वतस्सिद्धार्थवादित्वमसिद्धं तेषां तदहमस्मीत्यु-पासीतेत्युपासनाविधिपरत्वादिति तत्राह—**न चेति**। उपक्रमोपसंहारादि[2] षड्विधलिङ्गा-धिगतस्तु परिनिष्ठितवस्तुमात्रप्रतिपादनतात्पर्यमविरोधादित्यर्थः।।९८।।

यत्पुनः पूर्ववादिनोक्तमतस्सर्वाश्रमाणामिति तत्राह—**अत इति**।।९९।।

तत्र नास्माभिर्युक्तमिति हृष्टधियामित्यादि तदपि युक्तमेवोक्तमित्युपसंहरति—**तस्माच्चेति**।

इति श्रीमत्परमहंसपरिव्राजकाचार्यज्ञानोत्तमपूज्यपादशिष्य-
चित्सुखमुनिविरचितायां नैष्कर्म्यसिद्धिटीकाभावतत्त्वप्रकाशिकायां
नैष्कर्म्यज्ञानादेव मोक्षनिरूपणात्मकः प्रथमोऽध्यायः।

---

१ आदिपदेन भवादिबोध्यः।

२ "उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये।।" इति

ॐ

## द्वितीयोऽध्यायः

प्रत्यक्षादीनामनेवंविषयत्वात्तेषां स्वारम्भकविषयोपनिपातित्वादात्मनश्चाशेषप्रमेयवैलक्षण्यात्[१] सर्वानर्थैकहेत्वज्ञानापनोदिज्ञानदिवाकरोदयहेतुत्वं वस्तुमात्रयाथात्म्यप्रकाशनपटीयसस्तत्त्वमस्यादेर्वचस एवेति बह्वीभिरुपपत्तिभिः प्रदर्शितम्। अतस्तदर्थाप्रतिपत्तौ यत्कारणं तदपनयनाय द्वितीयोऽऽध्याय आरभ्यते–

श्रावितो वेत्ति वाक्यार्थं न चेत्तत्वमसीत्यतः।
त्वंपदार्थानभिज्ञत्वादतस्तत्प्रक्रियोच्यते ।।१।।

---

### ॐ अथ द्वितीयोऽध्यायः प्रारभ्यते

वृत्तसङ्कीर्तनपूर्वकं वर्तिष्यमाणस्याध्यायस्य तात्पर्यार्थमाह—**प्रत्यक्षादी[२]नामिति**। किं विषयाणि तानि तर्हीर्ति तदाह—**तेषामिति**। स्वारम्भका विषयाश्शब्दादयश्श्रोत्रादीनां भौतिकत्वात्। तथाहि श्रोत्रं भौतिकं वाह्येन्द्रियत्वात् चक्षुरादिवत्। तथाहि श्रोत्रं ग्राह्यजातीयविशेषभवद्रव्यारब्धं बाह्येन्द्रियत्वाच्चक्षुरादिवत्। तथा चक्षुस्तैजसं रसाग्राहकत्वे सति रूपग्राहकत्वात् प्रदीपवत्, रसनमाप्यं रूपाग्राहकत्वे सति रसाभिव्यञ्जकद्रव्यत्वादस्योदकवत् इत्यादि[३]प्रयोगो द्रष्टव्यः। आत्मा पुनश्शब्दादिशून्यत्वात् सर्वविषयित्वाच्च न तेषां विषय इत्याह—**आत्मनश्चेति**। कथं तर्हि तदज्ञाननिवृत्तिरित्यत आह—**सर्वेति**। एवं प्रथमाध्यायेन समन्वये प्रदर्शिते तत्र प्रत्यक्षादिविरोधाशंकायां तत्परिहाराय द्वितीयोऽध्याय आरभ्यत इत्याह—**अत इति**। तस्य वाक्यस्यार्था प्रतिपत्तौ यत्कारणं

---

१ अशेषप्रमेयवैलक्षण्यात् — तत्त्वमसीति (वाक्यं) श्रावितः अतः वाक्यार्थं न वेत्ति चेत् त्वंपदार्थानभिज्ञत्वान्न वेत्ति। "त्वंपदेति तत्पदस्याप्युपलक्षणम्।" (सारार्थः)

२ प्रत्यक्षादीनाम् इत्यत्र आदिशब्देन अनुमानादीनाम् ग्रहणम्। अत्र चन्द्रिकाकारैः श्रीज्ञानोत्तममिश्रैरादिशब्देन श्रोत्रादि यद् गृहीतम् तदयुक्तमिति भाति, प्रत्यक्षशब्देनैव तद्ग्रहणसम्भवात्। अतः आदिनाऽनुमानादि ग्राह्यम्।

३ "यथा सर्वासामपां समुद्र एकायनमेवं सर्वेषां स्पर्शानां त्वगेकायनम्। एवं सर्वेषां रसानां जिह्वैकायनम्। एवं सर्वेषां गन्धानां नासिकैकायनम्। एवं सर्वेषां शब्दानां श्रोत्रमेकायनम्" (बृ. उ. २.४.११) इति श्रुतिरपि श्रोत्रादीनां भौतिकत्वे प्रमाणम्।

**योऽयमहं ब्रह्मेति वाक्यार्थास्तत्प्रतिपत्तिर्वाक्यादेवेति, प्रत्यक्षादीनामनेवंविषयत्वात् इत्यवादिषं, तस्य विशुद्ध्यर्थ-मनैकान्तिकत्वं पूर्वपक्षत्वेनोपस्थाप्यते–**

**कृत्स्नानात्मनिवृत्तौ च कश्चिदाप्नोति निर्वृतिम्।**
**श्रुतवाक्यस्मृतेश्चान्यः स्मार्यते च वचोऽपरः।।२।।**

**एतत्प्रसङ्गेन श्रोत्रन्तरोपन्यासमुभयत्रापि संभावनायाह[1]–**

**वाक्यश्रवणमात्राच्च पिशाचकवदाप्नुयात्।**
**त्रिषु यादृच्छिकी सिद्धिः[2] स्मार्यमाणे तु निश्चिता।।३।।**

**नायमनैकान्तिको हेतुः। यतः–**

---

पदार्थापरिज्ञानं तस्य प्रत्यक्षादिविरोधाशङ्कासम्भूतासम्भावना विपरीतभावना निरासेनापनयनायाध्यायारम्भ इत्यर्थः। तत्त्वमसीत्यतो वाक्यादिति शेषः। तत्प्रक्रिया तस्य त्वं पदार्थस्य प्रतिपादनप्रक्रियेति यावत्।।१।।

वाक्यादेवेत्यत्र इति शब्दः प्रकारवचनः। अहं ब्रह्मेत्येवम्प्रकाराप्रतिपत्तिरित्यर्थः। वाक्यव्यतिरेकेणापि प्रतिपत्तिदर्शनान्न वाक्यस्य नियतं हेतुत्वमित्यनैकान्तिकत्वमेव दर्शयति—**कृत्स्नेति**। कृत्स्नप्रपञ्चविलापने भेदकोपाधेरभावादेकत्वमन्तरेणापि वाक्यं प्रतिपद्यते, यथा विराडात्मा "यन्मदन्यन्नास्ति कस्मान्न विभेति" इति स्वयमेवं श्रुतं वाक्यं ध्यात्वा (स्मृत्वा) कश्चित्प्रतिपद्यते। यथा भृगुः "यतो—इमानी"ति वाक्यस्मृते "रानन्दो ब्रह्मेति व्यजानादिति" कश्चिच्चाचार्येण वाक्यं स्मार्यते[3]। यथा श्वेतकेतुर्नव-कृत्वस्तत्त्वमसि तत्त्वमसीति तयोरुभयोः" वाक्यस्मरणमेव हेतुर्न वाक्यमिति त्रिष्वपि पक्षेषु न वाक्यं हेतुरित्यर्थः।।२।।

कथं तर्हि वाक्यहेतुत्वाशङ्केति तत्राह—**एतत्प्रसङ्गेनेति**। वाक्यव्यतिरेकेण विराट्प्रभृतीनां त्रयाणां ज्ञानं दृष्टम्। पिशाचकस्य पुनः वाक्यश्रवणादपि तत् दृष्टमित्यु-भयत्रापि ज्ञानोत्पत्तिदर्शनान्न वाक्यमेव नियमेन ज्ञानजन्महेतुरिति ज्ञापनायेत्यर्थः। **पिशाचकवदिति**। पिशाचकनामा कश्चिदरण्यं गतस्तत्राधीयानानां तत्त्वमस्यादि-वाक्यमाकर्ण्य जन्मान्तरसंस्कारबलात्तदैव वाक्यार्थं प्रतिपदे इति लोके प्रसिद्धमित्यर्थः। अयं पुनरत्र विशेष इत्याह—**त्रिष्विति**।।३।।

---

१ सम्भावनाय—सांशयिकत्वदर्शनायेतिभावः

२ सिद्धिः – ब्रह्मात्माभेदप्रतीतिरित्यर्थः। (सारार्थः)

३ असम्भावना-विपरीतभावनानिराकरणमुखेन अहं ब्रह्मास्मि-तत्त्वमसीत्यादिवाक्यं स्मार्यते इति भावः।

सर्वोऽयं महिमा ज्ञेयो वाक्यस्यैव यथोदितः।
वाक्यार्थं न ह्यृते वाक्यात्कश्चिज्जानाति तत्त्वतः।।४।।

वाक्यं च प्रतिपादनाय प्रवृत्तं सत्प्रतिपादयत्येव, सर्वप्रमाणानामप्येवं वृत्तत्वात्–

नाहंग्राह्ये न तद्धीने न प्रत्यङ् नापि दुःखिनि।
विरोधः सदसीत्यस्माद्वाक्याभिज्ञस्य जायते।।५।।
नाविरक्तस्य संसारान्निविवृत्सा ततो भवेत्।
न चानिवृत्ततृष्णस्य पुरुषस्य मुमुक्षुता।।६।।

---

इदानीं सिद्धान्तयति—**नायमिति**। लिङ्गस्मरणस्य गमकत्वेऽपि यथा न लिङ्गस्यागमकत्वमेवं वाक्यस्मरणस्य गमकत्वेऽपि न वाक्यस्यागमकत्वं स्मरणस्योभयत्रापि द्वारत्वादित्याह—**सर्वोऽयमिति**। यत्पुनरुक्तं कृत्स्नानात्मनि वृत्तावपीति तत्रापि प्रपञ्चाभावव्यतिरिक्तनिरतिशयानन्दरूपब्रह्माधिगतिर्न वाक्यं विना सम्भवति, तस्य वेदान्तवाक्यव्यतिरिक्तप्रमाणागोचरत्वादित्याह—**वाक्यार्थवदिति**।।४।।

ननु वाक्यमपि प्रमाणान्तरसम्वादाभावात् स्वार्थं निश्चयितुं न शक्नोतीत्यत आह—**वाक्यञ्चेति**। स्वविषयावबोधनाय प्रवृत्तानां प्रमाणानां प्रमाणान्तरसम्वादाभावादप्रतिपादकत्वं ब्रूमः, तद्विरुद्धार्थत्वादिति। तत्राह—**नाहमिति**। अहं ग्राह्यमहं मनुष्य इत्यहं प्रत्ययवेद्यं शरीरं तस्मिंस्तत्त्वमसीति वाक्यश्रवणाद्विरोधप्रतिभासो न भवति तस्य त्वं पदानभिधेयतया तत्पदार्थेन सामानाधिकरण्यानङ्गीकारात्। **तद्धीने** इन्द्रियवर्गे चक्षुषा पश्यामि श्रोत्रेण शृणोमीत्येवं करणत्वेनानुभवादहं चक्षुः पश्यामीत्यननुभवाच्च। तस्याहं प्रत्ययाविषयत्वेनाहं प्रत्ययहीनत्वात्तस्मिन्नपि न विरोधप्रतिभासस्तेनापि सामानाधिकरण्यात्तदङ्गीकारात्तथा प्रत्यगात्मन्यप्यज्ञानसाक्षिणि न विरोधबुद्धिस्त्वं पदलक्ष्यस्य तस्य तत् पदलक्षणैकत्वाविरोधात्। तथा नापि दुःखिनि सुखदुःखादिधर्मवदन्तःकरणविशिष्टे तस्यापि त्वं शब्दवाच्यस्य तत्पदलक्षणैकत्वानङ्गीकारात्। एवं वाक्यतात्पर्याभिज्ञस्य चतुर्ष्वपि पदार्थेषु न विरोधस्तेन न प्रमाणान्तरविरोधादप्यत्र प्रतिपादकत्वं वाक्यस्येत्यर्थः।।५।।

तर्हि वाक्यस्य प्रमाणान्तरसंवादापेक्षाभावात्तद्विरोधाभावाच्च वाक्यश्रवणमात्रेण वाक्यार्थं सर्व एवं प्रतिपद्येरन्। न च तथा प्रतिपद्यत इत्याशङ्क्य तेषां वैराग्यमुमुक्षाद्यधिकारिविशेषणाभावात्, अधिकारिणः प्रमितिजनको वेद इति च न्यायात्। नायं दोष इत्युत्तरश्लोकद्वयेन प्रतिपादयति—**नाविरक्तस्येत्यादिना**। न

**न चामुमुक्षोरस्तीह गुरुपादोपसर्पणम्।**
**न विना गुरुसंबन्धं वाक्यस्य श्रवणं भवेत्।।७।।**
**तथा पदपदार्थौ च न स्तो वाक्यमृते क्वचित्।**
**अन्वयव्यतिरेकौ च तावृते स्तां किमाश्रयौ।।८।।**
**अन्वव्यतिरेकाभ्यां विना वाक्यार्थबोधनम्।**
**न स्यात्तेन विनाऽज्ञानप्रहाणं नोपपद्यते।।९।।**
**विनाऽज्ञानप्रहाणेन पुरुषार्थः सुदुर्लभः।**
**तस्माद्यथोक्तसिद्ध्यर्थं परो ग्रन्थोऽवतार्यते ।।१०।।**
**वर्चस्कं त्वन्नकार्यत्वाद्यथा नात्मेति गम्यते।**
**तद्भागः सेन्द्रियो देहस्तद्वत्किमिति नेक्ष्यते ।।११।।**
**आद्यन्तयोरनात्मत्वे प्रसिद्धे मध्येऽपि कः प्रतिबन्धः[1]–**

---

चानिवृत्ततृष्णस्येति संसारादनिवृत्सोरित्यर्थः।।६-९।।

अतोऽपेक्षितवाक्यार्थज्ञानसिद्ध्यर्थमन्वयव्यतिरेकाभ्यां त्वं पदार्थपरिशोधनाय उत्तरग्रन्थसन्दर्भारम्भ इत्युपसंहारव्याजेनाह—**तस्मादिति**।।१०।।

यत्पुनर्नाहं ग्राह्येन तद्धीन इति शरीरस्येन्द्रियवर्गस्य चानात्मत्वं सूचितम्। तत्प्रपञ्चनायाह—**वर्चस्कमिति**। वर्चस्कं पुरीषं तस्यान्नस्य भावः परिमाणरूपः (तस्य[2] यथाऽनात्मत्वं गम्यते तद्वत्तद्भागयोरन्नपरिणामयोर्देहेन्द्रिययोरनात्मत्वमनुमानवदवगन्तव्यमित्यर्थः)।।११।।

न केवलमन्नकार्यत्वादनात्मत्वम्। अन्नात्मत्वादप्यन्नवदेवानात्मत्वमनुमातव्यमित्याह—**आद्यन्तयोरिति**।[3] आगन्तुकत्वादप्यनात्मत्वमनुमेयमित्याह—**स्त्रगालेपन-**

---

१ मध्येऽपि कः प्रतिबन्धः —"आदावन्ते च यन्नास्तीति न्यायात्। (सारार्थः) तथाहि—
एष बन्ध्यासूतो याति खपुष्पकृतशेखरः।
मृगतृष्णाम्भसि स्नातः शशशृङ्गधनुर्धरः।। इत्यत्र बन्ध्यासुतादीनां त्रिषु कालेष्वभावः।
अत्र प्रकृतस्थले तु गौडपादाचार्योक्तिं स्मारयति—
आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा।
वितथैः सदृशाः सन्तोऽवितथा इव लक्षिताः।। (मा.का., २.६)

२ अंशोऽयं हस्तलिखितपुस्तके नास्ति।

३ आद्यन्तयोरोदनपुरीषयोरनिवारितानात्मत्वप्रतिपत्तिरुदीर्यमाणा मध्ये देहेन्द्रिययोः केन प्रतिवद्धेत्यर्थः। (चन्द्रिका)

**प्रागनात्मैव जग्धं सदात्मतामेत्यविद्यया।**
**स्त्रगालेपनवद्देहं तस्मात्पश्येद्विविक्तधीः।।१२।।**

**अथैवमपि मद्वचनं नाद्रियसे स्वयमेवेतस्माच्छरीरादशुचि-राशेर्निरासो भविष्यसि–**

**मन्यते तावदस्मीति यावदस्मान्न नीयसे।**
**श्वभिः क्रोडीकृते देहे नैवं त्वमभिमंस्यसे।।१३।।**

**शिर आक्रम्य पादेन भर्त्सयत्यपरान् शुनः।**
**दृष्टा साधारणं देहं कस्मात्सक्तोऽसि तत्र भोः।।१४।।**

**श्रुतिपरिप्रापितोऽयमर्थोऽनात्मा बुद्ध्यादिदेहान्त इतीदमाह–**

**बुसव्रीहिपलालांशैर्बीजमेकं त्रिधा यथा।**
**बुद्धिमांसपुरीषांशैरन्नं तद्वदवस्थितम्।।१५।।**

**यथोक्तार्थप्रतिपत्तौ सत्यां, न रागद्वेषाभ्यां विक्रियते विपश्चि-दित्यस्यार्थस्य प्रतिपत्तये दृष्टान्तः–**

**वर्चस्के संपरित्यक्ते दोषतश्चावधारिते।**
**यदि दोषं वदेत्तस्मै[1] किं तत्रोच्चरितुर्भवेत्।।१६।।**
**तद्वत्सूक्ष्मे तथा स्थूले देहे त्यक्ते विवेकतः[2]।**

---

**वदिति**।।१२।।

इदानीमपायित्वादप्यनात्मत्वमनुमेयमित्याह—**अथैवमपीत्यादिना**।।१३।।

शरीरे ममत्वमपि विशेषतो न कारणत्वं, शुनामपि साधारणत्वादित्याह—**शिर इति। भर्त्सयत्येक**श्चेति शेषः।।१४।।

यदुक्तं, "तद्भागस्येन्द्रियो देहः" इति तन्नासिद्धमिति शङ्कनीयं, श्रुतिसिद्धत्वा-दित्याह—**श्रुतीति**। "अन्नमशीतं त्रेधा विधीयते। तस्य यस्स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मांसः योऽणिष्ठस्तन्मन" इति श्रुतिः (छा. १०६-५-१) शरीरस्य मनसश्चान्नकार्यत्वं सूचयतीत्यर्थः।।१५।।

एवं स्थूलसूक्ष्मदेहद्वयव्यतिरिक्तात्मवेदनस्य दृष्टमेव फलं सर्वानर्थबीजभूत-

---

१ तस्मै – "तमुद्दिश्य" इति सारार्थः।
२ देहाभिमानत्याग इति भावः।

**यदि दोषं वदेत्ताभ्यां किं तत्र विदुषो भवेत्।।१७।।**

**एतावदेव ह्यहं ब्रह्मास्मीति वाक्यार्थाप्रतिपत्तौ कारणं यदुत बुद्ध्यादौ देहान्ते ह्यहं ममेति निस्सन्धिबन्धनो ग्रहः। तद्व्यतिरेके हि न कुतश्चिद्विभज्यत एकल[1] एव प्रत्यगात्मन्यवतिष्ठत इत्याह–**

**रिपौ बन्धौ स्वदेहे च समैकात्म्यं प्रपश्यतः।**
**विवेकीनः कुतः कोपः स्वदेहावयवेष्विव।।१८।।**

**इतश्चानात्मा देहादिः–**

**घटादिवच्च दृश्यत्वात्तैरेव करणैर्दृशेः।**
**स्वप्ने चानन्वयाज्ज्ञेयो देहोऽनात्मेति सूरिभिः।।१९।।**

**देहादिकार्यकरणसंघातव्यतिरेकाव्यतिरेकदर्शिनः प्रत्यक्षत एव विरुद्धं कार्यमुपलभ्यते–**

---

रागद्वेषयोर्निवृत्तिरिति सदृष्टान्तमाह—**यथोक्तेति**। उच्चरितुरुत्स्रष्टुरित्यर्थः।।१६-१७।।

वाक्यार्थप्रतिपत्तिप्रतिबन्धकादपि देहद्वयाभिमानो (नतो) विवेकतः परिहरणीय इति श्रोतृणां यत्नगौरवावधानाय **एतावदेवेति। निस्सन्धिबन्धन**[2] इति। बाधकप्रत्ययशून्य इत्यर्थः। विवेकस्य पुनः फलमाह—**तद्व्यतिरेक** इति। **समैकात्म्यं**[3] निर्विशेषतयैकात्मत्वम्।।१८।।

इदानीं दृश्यत्वादागमापायित्वाच्च देहस्यानात्मत्वं सूचयति—**इतश्चेति**। यैः करणैर्घटादयो दृश्यन्ते तैरेव करणैर्द्रष्टुरात्मनो देहस्य दृश्यत्वात् स्वप्ने च व्याघ्रादिशरीरेण व्यवहारतो जाग्रद्दृष्टदेहस्याहमित्यभिमानाभावेनान्वयाच्चानात्मत्वं वेदितव्यमित्यर्थः।।१९।।

वक्ष्यमाणे विवेकफले श्रद्धाजननाय मिथ्याज्ञानविवेकज्ञानयोरनुभवसिद्धः फलभेद इति दर्शयति—**देहादीति। चतुर्भिरिति।** स्वदेहः परदेहो वा वाहने स्थापयित्वा चतुर्भिरुह्यो भवति स एवाविदुषामहं बुद्धिपरिगृहीतः। तद्वदत्र (स्थू)तूलायत[4] इति प्रत्यक्षमेव विरुद्धं कार्यमित्यर्थः। यद्वा स्वभावतस्सुषुप्तादावशक्योद्वाहो देहो जागरिते अहन्धीमात्रेण सुखोद्वाहितामापाद्यमानश्शिबिकादिवत् स्वोद्वाहकमहं कर्तारमवगमयतीति

---

१ एकलः — अद्वितीयोऽनवयव इत्यर्थः। (छा. उप. शां. भा. ३-११-१)

२ निस्सन्दिग्धवन्धनेति हस्तलिखितपुस्तके दृश्यते।

३ शत्रुदेहे मित्रदेहे स्वदेहे च निर्विशेषैकात्म्यमनुसंदधानस्येति भावः।

४ तूलवदाचरतीति भावः।

चतुर्भिरुह्यते यत्तत्सर्वशक्त्या शरीरकम्।
तूलायते तदेवाहंधियाघ्रातमचेतसाम्।।२०।।

प्रसिद्धत्वात्प्रकरणार्थोपसंहारायाह–

स्थूलं युक्त्या निरस्यैवं नभसो नीलतामिव।
देहं सूक्ष्मं निराकुर्यादतो युक्तिभिरात्मनः।।२१।।

कथं देहं सूक्ष्मं निराकुर्यादिति[1]। उच्यते–

अहंममत्वयत्नेच्छा नात्मधर्माः कृशत्ववत्।
कर्मत्वेनोपलभ्यत्वादपायित्वाच्च वस्त्रवत्।।२२।।

वैधर्म्य दृष्टान्तः–

नोष्णिमानं दहत्यग्निः स्वरूपत्वाद्यथा ज्वलन्।
तथैवात्मात्मनो विद्यादहं नैवाविशेषतः।।२३।।

एकस्यात्मनः कर्मकर्तृभावः सर्वथा नोपपद्यत इति श्रुत्वा, मीमांसकः प्रत्यवतिष्ठते। अहंप्रत्ययग्राह्यत्वाद्ग्राहक[2] आत्मेति,

---

दर्शयति—**देहादिति**।।२०।।

लोकायतिकव्यतिरिक्तसर्ववादिनामात्मनो देहव्यतिरिक्तत्वे विवेकाभावान्न तत् प्रतिपादनायातीवाग्रहः क्रियत इत्याह—**प्रसिद्धत्वादिति**।।२१।।

उपलभ्यत्वादित्युक्ते प्रत्यगात्मनोऽप्यस्मत्प्रत्ययगोचरतयोपलभ्यत्वमस्ति तेन तद्व्यावर्त्तनाय विशिनष्टि-**कर्मत्वेनेति**। एवमिच्छादीनामनात्मधर्मत्वप्रतिपादनेन तद्धर्मवतोऽन्तःकरणस्य सूक्ष्मदेहस्यात्मत्वं साधितमिति द्रष्टव्यम्।।२२।।

विपक्षे बाधकधर्ममाह—**वैधर्म्येति**। ज्वलनेऽपीति शेषः। **अविशेषत** इति। स्वरूपत्वाविशेषादौष्ण्यस्य दहनदाहाविशेषावयवात् स्वरूपत्वे धर्मत्वे चाहमादे[3]-रात्मव्यापारविषयत्वं न स्यादित्यर्थः।।२३।।

---

१ न च सूक्ष्मदेहनिराकरणस्यैव प्रतिज्ञाविषयत्वेन अहंत्वेच्छादीनामनात्मधर्मत्वकथनं प्रकृतानुपयोगीति वाच्यम्। तेषामनात्मधर्मत्वसिद्धौ अन्तःकरणादेरनात्मत्वसिद्धेः। तेन च तद्घटितसूक्ष्मदेहस्याप्यनात्मत्वोपपत्तेरिति। (सारार्थः)

२ अहं प्रत्यग्राह्यत्वाद्ग्राहक आत्मा—विषयेऽस्मिन् सारार्थकाराः कथयन्ति— — "एकस्यैवात्मनोऽहं प्रत्ययग्राह्यत्वेऽपि मामहं जानामीतिप्रतीत्या ग्राहकत्वस्यापि सम्भवात्तादृशप्रतीतिगम्यज्ञानस्य मत्कर्मकत्व-मत्कर्तृकत्वरूपोभयधर्मवत्वादिति मीमांसा-वार्तिककृद्भिः भट्टपादैरात्मनोंऽशतो जडवोधात्मकत्वाभ्युपगमादित्यर्थः।।"

३ अहंकार-ममकारादेरिति भावः।

**तन्निवृत्त्यर्थमाह–**

**यत्कर्मको हि यो भावो नासौ तत्कर्तृको यतः।**
**घटप्रत्ययवत्तस्मान्नाहं स्याद्द्रष्टृकर्मकः।।२४।।**

**अत्राह[1]–प्रत्यक्षेणात्मनः कर्मकर्तृत्वाभ्युपगमे तत्पादोपजीविनाऽनुमानेन प्रत्यक्षोत्सारणयुक्तमिति चोद्यं, तन्निराकरणाय प्रत्यक्षोपन्यासः–**

**यत्र यो दृश्यते द्रष्ट्रा तस्यैवासौ गुणो न तु।[2]**
**द्रष्टृस्थं दृश्यतां यस्मान्नैवेयाद्द्रष्टृबोधवत्।।२५।।**

**प्रत्यक्षेणैव भवदभिमतस्य प्रत्यक्षस्याभासीकृतत्वात्सुस्थमेवानुमानम्। अतस्तदेव प्रक्रियते, तत्र च विकल्प्यदूषणाभिधानम्–**

**नात्मना न तदंशेन गुणः स्वस्थोऽवगम्यते।**
**अभिन्नत्वात्समत्वाच्च निरंशत्वादकर्मतः।।२६।।**

---

इदानीं भाट्टमतमाशङ्क्य निराकरोति—**एकस्येत्यादिना**। अहं प्रत्ययवदित्यनुमानमाह—**यत्कर्मक इति**।।२४।।

मामहं जानामीत्यात्मनोऽहम्प्रत्यय प्रमितिकर्तृत्वकर्मत्वयोरनुभवात्तत्कर्मत्वनिराकरणानुमानं कालात्ययापदिष्टमिति शङ्कते—**अत्राहेति**। अन्तःकरणस्य प्रत्यगात्मदृश्यत्वादहं प्रत्ययस्यापि तद्वतत्वेनोपलम्भमानस्य तद्धर्मत्वमेव युक्तं द्रष्टात्मगतत्वेन दृश्यत्वानुपपत्तेः। तस्मादन्तःकरणविशिष्टविषयत्वात् केवलात्मविषयत्वाभावादित्यभिप्रेत्य परिहरति—**तन्निराकरणाये[3]ति**।।२५।।

**अतस्तदेव प्रक्रियत इति**। आत्मनोपलभ्यास्याहंकारस्यात्मधर्मत्वमनुपपन्नमिति प्रकारान्तरेण पुनस्साध्यत इत्यर्थः। आत्मधर्मश्चेदहं प्रत्ययः किमयमात्मनाऽधिगम्य उत तदंशेनेति विकल्प्योभयथापि न सम्भवतीत्युच्यत इत्याह—**तत्र चेति**। स्वगतस्य गुणस्य स्वग्रहणमन्तरेण स्वगतत्वेन ग्रहणायोगात्, स्वस्य च स्वेनाभिन्नत्वादेव ग्रहणानुपपत्तेस्स्वांशेनापि तेन न गृह्यत इत्यर्थः।।२६।।

---

१ आहेत्यस्य चोद्यमित्यनेनान्वयः (सारार्थः)

२ न तु—न तु द्रष्टुर्गुणः। गुणः = "परिणामः" (सारार्थः)

३ यत्रान्तःकरणे योऽहं प्रत्ययो द्रष्ट्रा साक्षिणा दृश्यते। तस्यैवान्तःकरणस्याहं प्रत्ययो धर्मो भवति द्रष्टुर्दृश्यत्वाद् द्रष्टृस्थत्वे द्रष्टृदृश्यत्वायोगात्। तस्मादन्तःकरणधर्म एवासावहं प्रत्यय इत्यर्थः। (चन्द्रिका)

**न युगपन्नापि क्रमेणोभयथा चैकस्य धर्मिणो ग्राह्यग्राहकत्व-मुपपद्यत इति प्रतिपादनायाह–**

**द्रष्टृत्वेनोपयुक्तत्वात्तदैव स्यान्न दृश्यता।**
**कालान्तरे चेद्दृश्यत्वं न ह्यद्रष्टृकमिष्यते।।२७।।**

**सन्तु काममनात्मधर्मा ममत्वादयो यथोक्तन्यायबलादनात्म-तयैव च तेषु व्यवहारादहंरूपस्य तु प्रत्यगात्मसंबन्धितयैव प्रसिद्धेरहं ब्रह्मास्मीति श्रुतेश्चानात्मधर्मत्वमयुक्तमिति चेत्तन्न–**

**अहंधर्मस्त्वभिन्नश्चेदहं ब्रह्मेति वाक्यतः।**
**गौरोऽहमित्यनैकान्तो[1] वाक्यं तद्व्यपनेतृ तत्[2]।।२८।।**

**कथं "वाक्यं तद्व्यपनेमतृ" तदिति। उच्यते–**

**योऽयं स्थाणुः पुमानेष पुंधिया स्थाणुधीरिव[3]।**

---

ग्राहकस्य ग्राह्यत्वेऽपि युगपदेव ग्राह्यग्राहकभावः, किम्बा क्रमेण? नाद्यः, ग्राहकत्वेन परिसमाप्तस्य निरंशस्य तदैव ग्राह्यत्वेनावस्थानासम्भवात्। नापि क्रमेण, तदा ग्राहकाभावादेव ग्राह्यत्वानुपपत्तेरित्याह—**न युगपदिति**।।२७।।

ममत्वयत्नेच्छादीनामिव, अहं प्रत्ययस्यात्मधर्मत्वमध्यासात्[4]। तत्तु वास्तवमित्युपपन्नम्। अहं प्रत्ययस्यात्मधर्मत्वप्रसिद्धेरहं ब्रह्मास्मीति विद्यादशायामपि तस्यानुवर्तनादिति शङ्कामुत्थाप्य श्लोकेन परिहरति—**सन्तु काममित्यादिना**। गौरोऽहमिति सामानाधिकरण्येऽपि यथा गौरत्वेनात्मधर्मत्वं सिध्यति अहं ब्रह्मास्मीति तु सामानाधिकरण्यं बाधायां न पुनस्तदेकत्वविवक्षयेत्यर्थः।।२८।।

---

१ अनैकान्तः— अनैकान्तिकः सव्यभिचारः। (न्या.द., १.२.५)
अनैकान्तः हेतुरिति भावः। एकस्मिन्नन्ते विद्यते हेतुरिति ऐकान्तिकः। विपर्ययादनैकान्तिकः। उभयान्तव्यापकत्वादिति। (न्या.द.वा.भा.,१.२.५) अर्थात् सामानाधिकरण्यरूपो हेतुः साध्यमभिन्नत्वरूपं व्यभिचरतीति भावः।

२ "वाक्यं तद्व्यपनेतृ तत्"—अहंब्रह्मास्मीतिवाक्यं अहंबुद्धिबाधकं भवति इति भावः।

३ स्थाणुः पुरुष इति सामानाधिकरण्यं यथा स्थाणोर्बाधकं तथाहं ब्रह्मास्मीति सामानाधिकरण्यमहंकारस्य बाधकमित्यर्थः इदमापाततः। वस्तुतस्तु अहमर्थजीवबाधे मोक्षासिद्ध्या बाधा—सामानाधिकरण्यानुपगमाद्भेदभ्रमनिवर्तकमहावाक्यैक्यपरत्वेनाखण्डचैतन्यव्यक्ति-निर्विकल्पकज्ञानद्वारा सकार्याज्ञानव्यपनेतृत्वान्न धर्मधर्मिभावपरत्वं युज्यते इति हृदयम्।। (चन्द्रिका)

४ ममत्वयत्नेच्छादीनामनात्मधर्माणां यथा आत्मधर्मत्वेन प्रतीतिर्भवति तथैव अध्यासात् अहंप्रत्ययस्यापि आत्मधर्मत्वेन प्रतीतिः भवतीति भावः।

**ब्रह्मास्मीति धियाऽशेषा ह्यहंबुद्धिर्निवर्त्यते।।२९।।**

**अहंपरिच्छेदव्यावृत्तौ न किंचिदव्यावृत्तं द्वैतजातमवशिष्यते, द्वितीयसंबन्धस्य तन्मूलत्वात्। अत आह–**

**निवृत्तायामहंबुद्धौ ममधीः प्रविलीयते।**
**अहंबीजा हि सा सिध्येत्तमोऽभावे कुतः फणी ।।३०।।**

**विवक्षितदृष्टान्तांशज्ञापनाय दृष्टान्तव्याख्या–**

**तमोऽभिभूतचित्तो हि रज्ज्वां पश्यति रोषणम्।**
**भ्रान्त्या भ्रान्त्या विना तस्मान्नोरगं स्रजि वीक्षते ।।३१।।**

**अनन्वयाच्च नात्मधर्मोऽहंकारः–**

**आत्मनश्चेदहंधर्मो यायान्मुक्तिसुषुप्तयोः।**
**यतो नान्वेति तेनायमन्यदीयो भवेदहम्।।३२।।**

**आत्मधर्मत्वाभ्युपगमेऽपरिहार्यदोषप्रसक्तिश्च–**

**यद्यात्मधर्मोऽहंकारो नित्यत्वं तस्य बोधवत्।**
**नित्यत्वे मोक्षशास्त्राणां वैयर्थ्यं प्राप्नुयाद्ध्रुवम्।।३३।।**

**स्यात्परिहारः स्वाभाविकधर्मत्वाभ्युपगमेऽप्याम्रादिफलवदिति चेत्तन्न–**

---

उक्त एवार्थो दृष्टान्तेनोपपाद्यत इत्याह—**कथं तद्वाक्यमिति**।।२९।।

इत्थमहङ्कारस्यात्मधर्मत्वनिराकरणे प्रयोजनमाह—**अहं परिच्छेदेति**।।३०।।

**तमोऽभावे कुतः फणीति**। प्रसिद्धान्धकाराभावे फणिना त्रासस्याभावो[१] दृष्टान्तेनोपन्यस्त इति शङ्कानिरासाय दृष्टान्तो व्याख्यायत इत्याह—**विवक्षितेति**।।३१-३२।।

अस्तु तर्हि नित्यत्वमपीत्याह—**नित्यत्व** इति।।३३।।

यावद्द्रव्यभावित्वाभावेऽपि श्यामत्वादौ धर्मत्वं दृश्यत इति शङ्कामुत्थाप्य परिहरति—**स्यादित्यादिना**।।३४।।

---

१ प्रसिद्धान्धकारस्याभावे फणिनः सर्पस्याभाव इति चन्द्रिकायाम्।

**आम्रादेः परिणामित्वाद्गुणहानिर्गुणान्तरैः।**
**अविकारि तु तद्ब्रह्म न हि द्रष्टरिति श्रुतेः[१]।।३४।।**
**अहंकारस्य चागमापायित्वात्तद्धर्मिणश्चानित्यत्वं प्राप्नोति–**
**आगमापायिनिष्ठत्वादनित्यत्वमियाद्दृशिः।**
**उपपन्नपयन्धर्मो विकरोति हि धर्मिणम्[२]।।३५।।**
**अस्त्वनित्यत्वं कमुपालभेमहि प्रमाणोपपन्नत्वादिति चेत्तन्न–**
**सदाविलुप्तसाक्षित्वं स्वतसिद्धं न पार्यते।**
**अपह्नोतुं घटस्येव कुशाग्रीयधियात्मनः।।३६।।**
**एतस्माच्च हेतोरहंकारस्यानात्मधर्मत्वमवसीयताम्–**
**प्रमाणैश्चावगम्यत्वाद्घटादिवदहं दृशेः।**
**यतो राद्धिः प्रमाणानां स कथं तैः प्रसिद्ध्यति।।३७।।**
**धर्मधर्मिणोश्चेतरेतरविरुद्धात्मकत्वादसङ्गतिः–**
**धर्मिणश्च विरुद्धत्वान्न दृश्यगुणसङ्गतिः।**
**मारुतान्दोलितज्वालं शैत्यं नाग्निं सिसृप्सति।।३८।।**

---

पूर्वमहङ्कारस्यानित्यत्वान्नित्यात्मधर्मत्वमनुपपन्नमित्युक्तमिदानीमात्मनो नित्यत्वाद-नित्याहङ्कारधर्मत्वं तस्यानुपपन्नमित्याह—**अहङ्कारस्य चेति**। आगमापायिनोऽहङ्कारस्य निष्ठाऽन्वास्थितिर्यस्मिन्नसावागमापायिनिष्ठस्तस्य भावस्तत्त्वं तस्मात्।।३५।।

सौगतमतमाशङ्क्य निराकरोति—**अस्त्वित्यादिना**। सति देहे तावदात्मनः प्रत्यभिज्ञया स्थायित्वावगमादनित्यत्वे चाकृताभ्यागमकृतविप्रणाशादिदोषप्रसक्तेर्जाति-स्मरादिदर्शनात्, मुख्यार्थे बाधाभावात्, प्रत्यभिज्ञायास्सादृश्यादिनिबन्धनत्वकल्पनानुपपत्तेः नानित्यत्वमात्मनः इति भावः।।३६।।

प्रमाणैश्चेति अहङ्कारः प्रमेयत्वात् घटादिवद्दृशेरात्मनो धर्मो न भवतीत्यर्थः। नन्वात्मापि प्रमाणगम्येत्यत आह—**सत इति। राद्धिस्सिद्धिः**।।३७।।

प्रमाणानां सिद्धेः प्रागेव सिद्धतया आत्मनः प्रमानुसाधकत्वान्न तयोर्धर्मधर्मिभावो युक्त इत्याह—**धर्मधर्मिणोश्चेति**।।३८।।

---

१ "आत्मनो नित्यत्वात्तद्धर्मस्याहंकारस्यापि नित्यत्वमिति न सम्भवति आत्मनः निर्द्धर्मकत्वात्।
२ धर्मिणं विकरोति—विविधं करोति परिणामिनं करोतीत्यर्थः।

**तस्माद्विस्त्रब्धमुपगम्यताम्[1]–**

**दृष्टृत्वं दृश्यता चैव नैकस्मिन्नेकदा क्वचित्।**
**दृश्यदृश्यो न च द्रष्टा द्रष्टृादर्शी दृशिर्न च।।३९।।**

**सर्वसंव्यवहारलोपश्च प्राप्नोति। यस्मात्–**

**द्रष्टापि यदि दृश्याया आत्मेयात्कर्मतां धियः।**
**यौगपद्यमदृश्यत्वं वैयर्थ्यं चाप्नुयाच्छ्रुतिः।।४०।।**

**कुतः? यस्मात्–**

**नालुप्तदृष्टेदृश्यत्वं दृश्यत्वे द्रष्टृता कुतः।**
**स्याच्चेद्दृगेकं निर्दृश्यं जगद्वा स्यादसाक्षिकम्।।४१।।**

**उक्तयुक्तिं दृढीकर्तुमागमोदाहरणोपन्यासः–**

**आर्तमन्यद्दृशेः सर्वं 'नेति नेती' ति चासकृत्।**
**वदन्ती निर्गुणं ब्रह्म कथं श्रुतिरुपेक्ष्यते।।४२।।**

---

उक्तयुक्तिबलात् द्रष्टृदृश्यत्वे व्यवस्थिताधिकरण एवेत्युपसंहरति—**तस्मादिति।** एवं च सत्येतदपि सिद्धमित्याह—**दृश्य इति।** न च दृश्येन विज्ञानेन स्वयमात्मा दृश्यो भवति। तच्च विज्ञानं स्वद्रष्टारमात्मानं न विषयीकरोतीत्यर्थः।।३९।।

विपक्षे दोषमाह—**सर्वसंव्यवहारेति। यौगपद्यमिति** युगपदुभयोर्बुध्यात्मनोर्द्रष्टृत्वं स्यात्। तथा च सति द्रष्टृत्वादेवोभयोरदृश्यत्वं दृश्यत्वे चात्मनः कूटस्थद्रष्ट्रात्मविषयायाः स्तुतेर्वैयर्थ्यं च स्यादित्यर्थः।।४०।।

वैयर्थ्यमेवोपपादयितुमाह—**कुत इति।**[2] जानन्तं मां जानामीत्यनुभवाद्द्रष्टुरपि दृश्यत्वं दृश्यस्य द्रष्टृत्वमविरुद्धमित्याशङ्क्याह—**स्याच्चेदिति।** तर्हि दृश्यस्य द्रष्टृरूपत्वाविरोधाद्द्रष्टृस्वभावत्वा(पत्वा)पत्तौ दृश्यमेव सर्वमासीदिति द्रष्टृशून्यं जगदेवावशिष्येत इत्यर्थः।।४१।।

उक्तस्य न्यायस्य प्रशिथिलमूलत्वपरिहाराय मूलत्वप्रमाणं दर्शयति—**उक्तेति।** उदाहृयत इत्युदाहरणवाक्यम्। "नान्योऽतोऽस्ति द्रष्टे" त्युपक्रम्या"तोऽन्यदार्तमि"ति द्रष्ट्रात्मव्यतिरिक्तस्य सर्वस्य दृश्यजातस्य विभागित्वेन नित्यात्मधर्मित्वनिराकरणान्नेति नेतीति मूर्त्तामूर्त्तरूपद्वयनिषेधाच्च सर्वदृश्यासंस्पर्शित्वमात्मनश्श्रुत्या दर्शितमित्यर्थः।।४२।।

---

१ विस्त्रब्धं = "निःशङ्कं" (सारार्थः) उपगम्यतां = अभ्युपगम्यतामिति भावः।

२ लुप्तदृष्टेर्घटादेरेव दृश्यत्वनियमादात्मनोऽपि दृश्यत्वे दृष्टिलोपः स्यात्। तथाच "न हि द्रष्टुर्दृष्टेः" इत्यादिश्रुतेर्वैयर्थ्यं प्रसज्येतेति भावः।(लुप्तदृष्टेः ज्ञानानात्मकस्येति तात्पर्यः।)

'महाभूतान्यहंकार' इत्येतत्क्षेत्रमुच्यते।
न दृशेर्द्वैतयोगोऽस्ति विश्वेश्वरमतादपि।।४३।।

अधुना प्रकृतार्थोपसंहारः–

एवमेतद्धिरुग्ज्ञेयं[१] मिथ्यासिद्धमनात्मकम्।
मोहमूलं सुदुर्बोधं द्वैतं युक्तिभिरात्मनः।।४४।।

कुतो मिथ्यासिद्धत्वं द्वैतस्येति चेत्–

न पृथङ्नात्मना सिद्धिरात्मनोऽन्यस्य वस्तुनः।
आत्मवत्कल्पितस्तस्मादहंकारादिरात्मनि ।।४५।।

तस्मादज्ञानविजृम्भितमेतत्–

दृश्याः शब्दादयः क्लृप्ता द्रष्टृ च ब्रह्म निर्गुणम्।
अहं तदुभयं[२] विभ्रद्भ्रान्तिमात्मनि यच्छति।।४६।।

---

उक्तार्थे स्मृतिरपि प्रमाणमित्याह—**महाभूतानीति**[३]।।४३।।

तर्हि सांख्यानामिव द्वैतं भिन्नमपि पारमार्थिकं स्यादित्यत आह—**मिथ्यासिद्धमिति**। तथाऽप्यन्यथाख्यातिवादिप्रभृतीनां न मिथ्यात्वं स्यादित्याह—**अनात्मकमिति**। अनात्मकं सत्स्वभावरहितमित्यर्थः। सत्यात्मकार्यस्य कथमेवंविधत्वमित्यत आह—**मोहमूलमिति**। तदेव कथमित्यत आह—**सुदुर्बोधमिति**। प्रमाणयुक्तिभ्यां दुर्निरूपमित्यर्थः।।४४।।

एतदेवोत्तरश्लोकेनोपपाद्यत इत्याह—**कुत इति**। **न पृथगिति** सद्रूपज्ञानस्वभावादात्मनोऽन्यत्वादेव न पृथक् सत्ताप्रतीति (जन्य) सम्भवः। नापि प्रत्यगात्मरूपाभेदेन तत्सिद्धिः—**जडाजडयोः** वैयर्थ्ययोरभेदायोगादित्यर्थः।।४५।।

फलितमाह—**तस्मादिति**। दृश्यत्वेन द्रष्टृत्वेन सत्यत्वेनावृतत्वेन चात्यन्तविविक्तयोरात्मानात्मनोर्वस्तुतस्साङ्कर्याभावेप्यहंकारोपाधौ द्वयोः प्रतिबिम्बितत्वाद्दर्पणतले प्रतिबिम्बितयोर्लौहित्यमुखयोर्लौहिताविति परस्परसम्बन्धाध्यासवत् भ्रान्त्यैव कर्तृत्वादि सम्बन्धप्रतिभास इत्यर्थः।।४६।।

---

१ हिरुक् = पृथगिति भावः।

२ नन्वहमित्यस्य कथं भ्रान्तित्वम्। इदं रजतमित्यादि भ्रान्तिस्थले यथा अंशद्वयं दृश्यते तथाऽहमित्यात्रांशद्वयस्यादर्शनादिति चेत् तत्राह—अहमित्यत्रापि अंशद्वयम् वर्तते।

३ महाभूतादिधृत्यन्तं सर्वं क्षेत्रमेवेति भगवताप्युक्तत्वादात्मा समस्तप्रपञ्चशून्य इत्यवगम्यत इत्यर्थः। (चन्द्रिका)

**तत एवेयमभिन्नस्यात्मनो भेदबुद्धिः–**

**दृगेका सर्वभूतेषु भाति दृश्यैरनेकवत्।**
**जलभाजनभेदेन मयूखस्रग्विभेदवत्।।४७।।**

**यथोक्तार्थस्य प्रतिपत्तये दृष्टान्तः–**

**मित्रोदासीनशत्रुत्वं यथैकस्यान्यकल्पनात्।**
**अभिन्नस्य चितेस्तद्वद्भेदोऽन्तःकरणाश्रयः।।४८।।**

**अपहारो यथा भानोः सर्वतो जलपात्रकैः।**
**तत्क्रियाकृतिदेशाप्तिस्तथा बुद्धिभिरात्मनः ।।४९।।**

**न च विरुद्धधर्माणामेकत्रानुपपत्तिः। किं कारणम्–**

**कल्पितानामवस्तुत्वात्स्यादेकत्रापि संभवः।**
**कमनीयाऽशुचिः स्वाद्वीत्येकस्यामिव योषिति।।५०।।**

---

न केवलामात्मानात्मसम्बन्ध एवाहङ्कारनिबन्धनः किन्तु प्रतिदेहमात्मनो भेदेऽपि तन्निबन्धन एवेत्याह—**तत एवेति**। मयूखस्रग्वी रश्मिमाली।।४७।।

अन्तःकरणोपाधिनिबन्धनो भेद इत्यत्र दृष्टान्तान्तरमाह—**यथोक्तस्येति**। एतस्याप्यवयवद्वारा व्यवहारान्तरयोगित्वं स्यादित्यत आह—**अभिन्नस्येति**। अवयव्येव मित्रादिरूपेण कल्प्यते न तदवयवा इत्यर्थः। नायमर्थविवक्षया धातोरेव निर्देशोऽभिन्नस्य चित्तेरिति।।४८।।

अन्तःकरणोपाधिगतस्यात्मनस्तत्क्रियायास्तदाकृतेश्च स्वच्छत्वपरिच्छिन्नत्वा-देस्तद्देशस्य च हृदयप्रदेशादेस्सम्बन्धाध्यासं दृष्टान्तान्तरेणेत्याह—**अपहार इति**। अपहारस्स्वातन्त्र्यापादानम्।।४९।।

सर्वभूतेष्वेक एव चेदात्मा तर्हि तस्य युगपदेव परस्परविरुद्धसुखदुःखरागद्वेष-भ्रान्तिसम्यग्ज्ञानाद्याश्रयत्वं प्रसज्यते। तच्चानुपपन्नं तत्कथमुक्तं "दृगेकं सर्वभूतेष्वि"ति तत्राह—**न चेति**। एकस्यां योषिति कामुकपरिव्राजकशुनामिति[१] शेषः।।५०।।

---

१ एकस्मिन् योषिदर्थे कामुकस्य कमनीयता, परिव्राजकस्याशुचित्वम् शुनां कृते पुनः सुस्वादुभोजनमिति भावः।
अयं हि सर्वदर्शनसंग्रहे—
परिव्राट्-कामुक-शुनामेकस्यां प्रमदातनौ।
कुणपः कामिनी भक्ष्य इति तिस्रो विकल्पनाः।। (स.द.सं., बौद्ध-दर्शनम् - १२)
तथाचोक्तं पञ्चदश्याम्—

**न चायं क्रियाकारकफलात्मक आभास ईषदपि परमार्थवस्तु स्पृशति, तस्य मोहमात्रोपादानत्वात्–**

**अभूताभिनिवेशेन स्वात्मानं वञ्चयत्ययम्।**
**असत्यपि द्वितीयेऽर्थे सोमशर्मपिता यथा।।५१।।**

**वस्तुयाथात्म्यानवबोधपटलावनद्धाक्षः सन्–**

**सुभ्रूः सुनासा सुमुखी सुनेत्रा चारुहासिनी।**
**कल्पनामात्रसंमोहाद्रामेत्यालिङ्गतेऽशुचितम्।।५२।।**

**सर्वस्यानर्थजातस्य जिहासितस्य मूलमहङ्कार एव, तस्यात्मानात्मोपरागात्। न तु परमार्थत आत्मनोऽविद्यया तत्कार्येण वा संबन्धोऽभूदस्ति भविष्यति वा, तस्यापरिलुप्तदृष्टिस्वाभाव्यात्–**

---

कल्पिततत्वे सति तथा स्यात् तदेवासिद्धमिति। तत्राह—**न चायमिति। सोमशर्मपितेति।** यथा सन्तु कश्चिन्मनोरथकल्पितं सोमशर्मसंज्ञितं पुत्रमरक्षन्तीं भार्यां पदा प्रहरणेनात्मसर्वस्वं सक्तुकुम्भं वभञ्ज तथेत्यर्थः[१]।।५१।।

कल्पनाया अयथावस्तुव्यवहारहेतुत्वे दृष्टान्तान्तरमाह—**वस्तुयाथात्म्येति**।।५२।।

यदुक्तं "अहं तदुभयं विभ्रत् भ्रान्तिमात्मनि यच्छति" इति। तत्रप्रपञ्चयितुमाह—**सर्वस्येति**। दृश्यैः शब्दादिभिरनुरक्तं सम्बन्धं सत्तदन्तःकरणं स्वात्मनि प्रतिबिम्बितचैतन्याभासात् तेषां द्रष्टृ भवति। तदेव च द्रष्ट्रात्मचैतन्यानुरञ्जितं सत्तस्य चैतन्यस्य

---

भार्या स्नुषा ननान्दा च याता मातेत्यनेकधा।
प्रतियोगिधिया योषिद्भिद्यते न स्वरूपतः।। (पं.द., ४.२३)

१ दृष्टान्तरूपेण कश्चित्कथां स्मारयतिकश्चिदतिदरिद्रो ब्रह्मचारी बह्वाशी भिक्षमाणः कदाचिद्दुर्भिक्षकाले सक्तुमुष्टिं बद्ध्वा निर्वेदात् कश्मिश्चित्पर्वते वृक्षच्छायायां शयान एवं मनोरथयति स्म। "सक्तुमुष्टिबन्धनं मुक्त्वा तेन काश्चन गाः क्रीता वर्धयिष्यामि। ताश्च पञ्चषड्वत्सरादनेकानडुहः प्रसविष्यन्ति। ततो यथेष्टं कर्षयिष्यामि। ततो धनधान्यादिसमग्रं भविष्यति। ततो दासीदासादिबहुलं गृहं सम्पादयिष्यामि। ईदृशीं सम्पदं दृष्ट्वा योग्यतमः कश्चित्स्वकन्यां मह्यं प्रदास्यति। पश्चाद्यथा-विधानं गार्ह्यस्थ्यमनुभविष्यामि। ततो वंशकरं पुत्रमुत्पाद्य सोमशर्मेति नाम कृत्वा पश्चात्कुटुम्बसौख्यानुभवसमये रुदन्तं मातरमनुगतं सोमशर्माणं स्वकार्यपारवश्या-त्तमनादृत्य गच्छन्तीं स्वां भार्यां दृष्ट्वा पुत्रनिमित्तकोपेन स्वां भार्यामताडयत्। ततो भिक्षापात्रं करघाताद् द्विधाऽपतत्। सक्तवश्च वायुवेगादपसरन्। पश्चादहो कष्टं, नष्टोऽस्मि मन्दभाग्योऽहं सक्तवश्च समापागच्छन्किं करिष्यामीति प्रबुद्धः सन्पिता व्यलपत्।।" (चन्द्रिका)

दृश्यानुरक्तं तदद्रष्टृ दृश्यं द्रष्टनुरञ्जितम्।
अहंवृत्त्योभयं रक्तं तन्नाशेऽद्वैततात्मनः।।५३।।

इह केचिच्चोदयन्ति योऽयमन्वयव्यतिरेकाभ्यामनात्मतयोत्सारितोऽहङ्कारो वाक्यार्थप्रतिपत्तये सोऽयं विपरीतार्थः संवृत्तः, यस्मादहं ब्रह्मास्मीति ब्रह्माहंपदार्थयोः सामानाधिकरण्यश्रवणात् नात्मार्थेन सामानाधिकरण्यं प्राप्नोति। वक्तव्या च प्रत्यगात्मनि तस्य वृत्तिरिति सोच्यते प्रसिद्धलक्षणागुणवृत्तिभिः—

नाज्ञासिषमिति प्राह सुषुप्तादुत्थितोऽपि हि।
अयोदाहादिवत्तेन लक्षणं परमात्मनः।।५४।।
प्रत्यक्त्वादतिसूक्ष्मत्वादात्मदृष्ट्यनुशीलनात्।
अतो वृत्तीर्विहायान्या ह्यहंवृत्त्योपलक्ष्यते।।५५।।
आत्मना चाविनाभावमथवा विलयं व्रजेत्।[१]

---

दृश्यमवभास्यं भवति। तदेवमुक्तन्यायेनाहं वृत्योभयमपि द्रष्टा दृश्यं चेत्येतदनुरक्तमहमिदं जानामीति। तेनात्यन्तविविक्तयोस्सम्बन्धहेतुरहङ्कार एक एवेति, तन्निवृत्तावात्मनोऽद्वैतत्वं युक्तमित्यर्थः।।५३।।

अनात्मत्वेऽप्यहंकारस्याहं ब्रह्मास्मीत्यादौ तद्वाचकपदस्य प्रत्यगात्मनि वृत्तिमाक्षेपपूर्वकं दर्शयति—**इह केचिदित्यादिना**। लक्षणावृत्तिं तावद्दर्शयति—**नाज्ञासिषमिति**। सुषुप्तावस्थायामहङ्काराभावेऽपि नाहमज्ञासिषमिति केवलात्मन्यहं शब्दस्य प्रयोगायोगादयो दहन्तीत्यादावयश्शब्दस्य दाहके दहने लक्षणया वृत्तिवदात्मनि तस्य वृत्तिरूपपद्यत इत्यर्थः।।५४।।

इदानीमहं शब्दस्यात्मनि गुणवृत्तिमाह—**प्रसक्तत्वादिति**। स्वव्यतिरिक्तसकलानात्मापेक्षया आन्तरत्वादद्रव्यत्वे सति। स्पर्शादिरहितत्वात् सूक्ष्मत्वाच्चात्मसाधर्म्यमात्मदृष्ट्यनुशीलनादिति। आत्मनस्स्वरूपभूताया दृष्टिस्तया अनुशीलनात् तदाभासोदयेन निरन्तरसम्बन्धादित्यर्थः।।५५।।

इदानीमन्तःकरणविशिष्टेऽहंशब्दस्य मुख्यया वृत्त्या वृत्तिरस्तीत्याह—**आत्मनेति**। विद्यमानं सदात्मव्यतिरेकेण क्षणमपि न तिष्ठतीत्यर्थः। **अहंधिया** अहंधीहेतुना

---

१ अथवा विलयं व्रजेत—"कल्पितस्याधिष्ठानसत्तां विनाऽसम्भवात्" (सारार्थः) "अधिष्ठानावशेषो हि नाशः कल्पितवस्तुनः" इति स्मृतेः।

न तु पक्षान्तरं यायादतश्चाहंधियोच्यते।।५६।।

कीदृक्पुनर्वस्तु लक्ष्यम्–

नामादिभ्यः परो भूमा निष्कलोऽकारकोऽक्रियः।
स एवात्मवतामात्मा स्वतस्सिद्धः स एव नः।।५७।।

अज्ञानोत्थबुद्ध्यादिकर्तृत्वोपाधिमात्मानं परिगृह्यैवान्वय-व्यतिरेकाभ्यामहं सुखी दुःखी चेत्यहङ्कारादेरनात्मधर्मत्वमुक्तं, केवलात्माभ्युपगमेऽशक्यत्वात्फलाभावाच्च। अथेदानीमविद्या-परिकल्पितं साक्षित्वमाश्रित्य कर्तृत्वाद्यशेषपरिणामप्रतिषेधायाह–

एष सर्वधियां नृत्तमविलुप्तैकदर्शनः।
वीक्षतेऽवीक्षमाणोऽपि निमिषत्तद्ध्रुवोऽध्रुवम्।।५८।।

ननु सर्वसिद्धान्तानामपि स्वस्वदृष्ट्यपेक्षयोपपन्नत्वादितरेतर-

---

अहंशब्देनेति यावत्।।५६।।

एवमहंशब्दवाच्यं दर्शितम् इदानीं प्रश्नपूर्वकं लक्ष्यं दर्शयति—**कीदृगिति**। नामादिभ्यः प्राणान्तेभ्योऽन्यो "यत्र नान्यत्पश्यती"त्यारभ्य "स भूमे"त्युक्तलक्षणः क्रियाकारकतत्साध्यत्वशून्यत्वेऽपि स्वतस्सिद्धत्वेन प्रकाशमानो वेदान्तिनामभिमतस्स-र्वेषामात्मा लक्ष्यत इत्यर्थः।।५७।।

पूर्वं द्रष्टुः दृश्यान्वयव्यतिरेकौ दर्शितौ। सम्प्रति साक्षिसाक्ष्यान्वयव्यतिरेकौ प्रदर्श्येते इत्यत्राह—**अज्ञानोत्थेति**। अज्ञानोत्थो बुद्ध्यादिलक्षणः कर्तृत्वोपाधिर्यस्य तद्द्रष्टारमात्मानमादायेत्यर्थः। किमित्यविद्याध्यारोपितं रूपमङ्गीकृतमित्यत आह—**केवलेति**। द्रष्टृदृश्यादिलक्षणान्वयव्यतिरेकौ विना केवलात्मप्रतिपत्तेरशक्यत्वात् तत्प्रतिपत्तौ वा तत्प्रतिपत्त्यर्थान्वयव्यतिरेकप्रदर्शनस्य कृतकार्यतया वैयर्थ्याच्चेत्यर्थः। अथेदानीमपि परिणामिबुद्ध्युपाधिप्रयुक्तद्रष्टृत्वव्यतिरेकेणानाद्यविद्योपाधिप्रयुक्तं साक्षित्वमाश्रित्य कर्तृत्वादिप्रतिषेधः क्रियत इत्यर्थः। **एषः सर्वधियां वृत्तमिति**। एवमात्मा अविलुप्तैकदर्शन[१]स्स्वयं निमिषत् जडरूपं तथा स्वयं ध्रुवोऽध्रुवं वीक्षत इत्यन्वयः। वीक्षत इत्युक्तत्वात् परिणामित्वप्रसक्तावाह—**अवीक्षमाणोऽपीति**। कर्तृत्वशून्यः स्वात्मनोपरक्तं स्वरूपेणैवावभासयतीत्यर्थः।।५८।।

शङ्कापूर्वकमुत्तरश्लोकमवतारयति—**ननु सर्वेति**। तत्रैव हेतुः—**न चेति** प्राश्निकः।

---

१ दर्शनोऽपरिणाम्यद्वयचित्स्वभावः सर्वासां धियां नृत्तं निमिषदिति पाठः चन्द्रिकायाम्।

दृष्ट्यपेक्षया दुस्स्थितसिद्धिकत्वांन्नैकत्रापि विश्वासं पश्यामः, न च[1] सर्वतार्किकैरदूषितं समर्थितं, सर्वतार्किकोपद्रवापसर्पणाय वर्त्म संभावयामः। उच्यते। विस्रब्धैः[2] संभाव्यतामनुभवमात्रशरणत्वात् सर्वतार्किकप्रस्थानानाम्। तदभिधीयते–

इमं प्राश्निकमुद्दिश्य तर्कज्वरभृशातुराः।
त्वाच्छिरस्कवचोजालैर्मोहयन्तीतरेतरम् ।।५९।।

अत्रापि चोदयन्ति। अनुभवात्मनो, विक्रियाभ्युपगमेऽनभ्युपगमेऽपि दोष एव। यस्मादाह–

'वर्षातपाभ्यां हि व्योम्नश्चर्मण्येव तयोः फलम्।
चर्मोपमश्चेत्सोऽनित्यः खतुल्यश्चेदसत्समः'।।६०।।

बुद्धिजन्मनि पुंसश्च विकृतिर्यद्यनित्यता।[3]
अथाविकृतिरेवायं प्रमातेति न युज्यते।।६१।।

अस्य परिहारः–

ऊर्ध्वं गच्छति धूमे खं भिद्यते स्विन्न भिद्यते।

---

गुणदोषसाक्षिणं मध्यस्थमिति यावत्। अनुभवितर्यात्मस्वरूपे धर्मिमात्रे न कस्यापि वादिनो विवाद इत्यर्थः।।५९।।

अनुभवितृत्वेऽपि विवादमाशङ्कते—**अत्रापीति**। विकारहेतौ सति कार्यस्यैव विक्रिया दृश्यते। नापि कार्यस्य तथा सत्यात्मविकार्योऽविकार्यो वा उभयथापि दोष एवेति सौगतानामाक्षेपमाह—**वर्षातपाभ्यामिति**।।६०।।

एतदेव विस्पष्टयति—**बुद्धिजन्मनीति**।।६१।।

प्रतिवन्दीन्याये[4]नाक्षेपं परिहरति—**अस्येति**। स्थास्नुत्वं धूमस्य स्यान्नालोकादि-

---

१ "न चेति। सम्भावयाम इत्यत्र न चेत्यस्यान्वय" इति सारार्थः।

२ "सर्वेषां तार्किकादिप्रस्थानानामनुभवातिरिक्त एव विप्रतिपत्तेरात्मरूपानुभवांशे कस्याप्यविप्रतिपत्तेस्तत्र विस्रब्धैर्जिज्ञासुभिः सम्भाव्यतां स एवात्मेति विश्वासः क्रियतामित्याह विस्रब्धैरित्यादिना"। (सारार्थः)

३ वर्षातपाभ्यां चर्मविकारवद् बुद्धिविकारैरनुभवात्मनोऽपि चेत्क्षयोदयादिविकारस्तदा तस्यानित्यत्वम्। यद्याकाशवदात्मनो न विकारस्तदा निर्विकारत्वात्प्रमातृत्वासिद्धिरित्यात्मनो नानुभवरूपत्वमित्यर्थः।" (सारार्थः)

४ समानमुत्तरं (तुल्ययुक्तिः) **प्रतिवन्दी**। नोद्यपरिहारसाम्यमिति वा। अर्थात् यदि पुरुषत्वादयं चौरस्तदा एवं त्वमपि चौरः स्यात् इत्यापादानम्।

न भिद्यते चेत्स्थास्नुत्वं भिद्यते चेद्भिदास्य का।।६२।।

इत्येतत्प्रतिपत्त्यर्थमाह–

अविक्रियस्य भोक्तृत्वं स्यादहंबुद्धिविभ्रमात्।

नौयानविभ्रमाद्यद्वन्नगेषु[1] गतिकल्पनम्।।६३।।

यथोक्तार्थाविष्करणाय दृष्टान्तान्तरोपादानम्–

यथा जात्यमणेः शुभ्रा ज्वलन्ती निश्चला शिखा।

संनिध्यसंनिधानेषु घटादीनामविक्रिया।।६४।।

अयमत्रांशो विवक्षित इति ज्ञापनायाह–

यदवस्था व्यनक्तीति तदवस्थैव सा पुनः।

भण्यते न व्यनक्तीति घटादीनामसंनिधौ।।६५।।

तत्र च–

सर्वधीव्यञ्जकस्तद्वत्परमात्मा प्रदीपकः।

संनिध्यसंनिधानेषु धीवृत्तीनामविक्रियः।।६६।।

---

प्रतिमस्यैवेति शेषः। भेदादिविकारमन्तरेणैव धूमादेराकाशमवकाशस्वरूपेणैव दरीदृश्यत इत्यर्थः।।६२।।

एतावता किमुत्तरं भवतीत्यत आह—**इत्येतदिति**। अहंबुद्धिरहं प्रत्ययस्तन्निमित्तो विभ्रमोऽहं बुद्धिविभ्रमस्तस्मात्सुखदुःखादिपरिणामित्वेन भोक्ताऽन्तःकरणेनाभेदाध्यासात् भोक्तेति विभ्रमः। नौयाननिमित्तो विभ्रमो नौयानविभ्रमः गतिकल्पनं गच्छन्ति नगा इत्यध्यवसायः।।६३।।

न केवलं विभ्रम एवं दृष्टान्तः। किन्तु वास्तवोऽपीत्यत आह—**यथोक्तेति**। जातौ भवः जात्यः।।६४।।

तत्र शिखायास्स्वरूपेणाविक्रियत्वसम्प्रतिपन्नमित्यत आह—**अयमत्रेति**। अत्र दृष्टान्ते दार्ष्टान्तिकोपयोगिविवक्षितोंऽश इति ज्ञापनायेत्यर्थः। **यदवस्थेति**। यदवस्थावती व्यनक्तीति भण्यते। तदवस्थावत्येव न व्यनक्तीत्यपि भण्यते। घटादि सांनिध्यासंनिधानाभ्यामित्यर्थः।।६५।।

दृष्टान्तगतमर्थं दार्ष्टान्तिके समर्पयति—**तत्र चेति**[2]।।६६।।

---

१ नौस्थस्य प्रातिलोम्येन नगानां गमनं यथा (उ.सा. ५.३)

२ तथा चेति हस्तलिखितपुस्तके दृश्यते।

**न प्रकाशक्रिया काचिदस्य स्वात्मनि विद्यते।**
**उपचारात्क्रिया सास्य यः प्रकाश्यस्य संनिधिः ।।६७।।**
**मैवं शङ्किष्ठाः सांख्यराद्धान्तोऽयमिति। यतः–**
**यथा विशुद्ध आकाशे सहसैवाभ्रमण्डलम्।**
**भूत्वा विलीयते तद्वदात्मनीहाखिलं जगत् ।।६८।।**
**तस्मादेष कूटस्थो न द्वैतं मनागपि स्पृशति। यतः–**
**शब्दाद्याकारनिर्भासाः क्षणप्रध्वंसिनीर्दृशा।[1]**
**नित्योऽक्रमदृगात्मैको व्याप्नोतीव धियोऽनिशम्।।६९।।**
**एवं च सति बुद्धेः परिणामित्वं युक्तम्–**
**अतीतानागतेहत्यान्युगपत्सर्वगोचरान् ।**
**वेत्त्यात्मवन्न धीर्यस्मात्तेनेयं परिणामिनी।।७०।।**
**ततश्चैतत्सिद्धम्–**
**अपश्यन्[2] पश्यतीं बुद्धिमशृण्वन् शृण्वतीं तथा।**
**निर्यत्रोऽविक्रियोऽनिच्छन्निच्छन्तीं[3] चाप्यलुप्तदृक्।।७१।।**

---

'एतदेव प्रपञ्चयति—**न प्रकाशेति**। भेदस्य परमार्थत्वमङ्गीकुर्वद्भिरपि सांख्यैरात्मनोऽविक्रियत्वं।।६७।।

ततो वेदान्तराद्धान्तस्य को विशेष इत्याशङ्क्य विशेषं दर्शयितुमाह—**मैवमिति**।।६८।।

भूत्वा विलीयत इत्युक्तत्वात् प्राग्विलयानान्मातृसंस्पर्शोऽभ्युपगत इति शङ्कां परिहर्त्तुमाह—**तस्मादेव इति**।।६९।।

कस्तर्हि घटादिज्ञानाकारेण परिणमत इत्यत आह—**एवञ्चेति**।।७०।।

आत्मनः पुनर्दर्शनश्रवणादिविक्रियाविरहितस्य दर्शनश्रवणादिविक्रियावदशेषबुद्धिसाक्षित्वमपि सिद्धमित्याह—**ततश्चेति**।।७१।।

---

१ शब्दाद्याकारेणं निर्भासन्त इति शब्दाद्याकारनिर्भासाः तत्तद्विषयाकारा वृत्तीः। परिणामित्वादेव ताः क्षणप्रध्वंसिनीरनित्याः क्रमिकाश्च। (सारार्थः)

२ अपश्यन् चक्षुर्जन्यवृत्त्याकारपरिणामरहितः। पश्यतीं तज्जन्यवृत्त्याकारेण परिणताम्। एवमग्रे इति सारार्थः।

३ अनिच्छन्—स्वरूपातिरिक्तावाप्तव्याभावात्। (सारार्थः)

द्विषन्तीमद्विषन्नात्मा कुप्यन्तीं चाप्यकोपनः।
निर्दुःखो दुःखिनीं चैव निस्सुखः सुखिनामपि।।७२।।
अमुह्यमानो मुह्यन्तीं कल्पयन्तीमकल्पयन्।
स्मरन्तीमस्मरंश्चैव शयानामस्वपन्मुहुः।।७३।।
सर्वाकारां निराकारः स्वार्थोऽस्वार्थां[1] निरिङ्गनः।
निस्त्रिकालस्त्रिकालस्थां कूटस्थः क्षणभुङ्गुराम्।।७४।।
निरपेक्षश्च सापेक्षां पराचीं[2] प्रत्यगद्वयः।
सावधिं निर्गतियत्तः सर्वदेहेषु पश्यति।।७५।।

एतस्माच्च कारणादयमर्थो व्यवसीयताम्–

दुःखी यदि भवेदात्मा कस्साक्षी दुःखिनो भवेत्।
दुःखिनः साक्षिताऽयुक्ता साक्षिणो दुःखिता तथा।।७६।।

पूर्वस्यैव व्याख्यानार्थमाह–

नर्ते स्याद्विक्रियां दुःखी साक्षिता का विकारिणः।
धीविक्रियासहस्राणां साक्ष्यतोऽहमविक्रियः[3]।।७७।।

---

समक्षपरोक्षविषयभेदात् कोपद्वेषयोर्विशेषो द्रष्टव्यः।।७२-७३।।

निरङ्गिनः अपरिस्पन्दः।।७४-७५।।

दुःख्यादीनां साक्षित्वाच्चात्मनो दुःखाद्याकारपरिणामो न युक्त इत्याह—**एतस्माच्चेति**। ननु दुःख्येव साक्षी भवेदिति तत्राह—**दुःखिन इति**।।७६।।

दुःखिनस्साक्षित्वं कथमयुक्तमित्याकाङ्क्षायां तत्र हेतुरुच्यत इत्याह—**पूर्वस्येति**।।७७।।

---

१ स्वार्थः— "स्वमेवासाधारणः परिपूर्णानन्दाद्यात्मकः अर्थो यस्य सः" (सारार्थः)
अस्वार्था— "ममत्वादिनागृहीतः स्वातिरिक्तो भोगापवर्गादिलक्षणोऽर्थो यया सा"। (सारार्थः)

२ पराचीं – "बाह्यां शेषभूतां",
प्रत्यक् – "सर्वान्तरः सर्वशेषीत्यर्थः"
सावधिं – "परिच्छिन्नां"
निर्गतियत्तः – "अपरिच्छिन्नः" (इति सारार्थः)

३ सर्वविकारसाक्षी आत्मा अविक्रिय एव। स एवाहं ब्रह्मेत्यादावहमादिपदलक्ष्यार्थ इति भावः। अहं = अहंकारोपलक्षितः। दुःखित्वं नाम विकारित्वम्। विकारिणः साक्षित्वमनुपपन्नम्। आत्मैव तु समस्तबुद्धिवृत्तिसाक्षी। अतः निरस्तसमस्तपरिणाम इति भावः।

**एवं सर्वस्मिन् व्यभिचारिण्यात्मवस्त्वेवाव्यभिचारीत्यनुभवतो व्यवस्थापनायाह–**

**प्रमाणतन्निभेष्वस्या नोच्छित्तिर्मम संविदः[१]।**
**मत्तोऽन्यदूपमाभाति यत्तत्स्यात्क्षणभङ्गि[२] हि।।७८।।**
**उत्पत्तिस्थितिभङ्गेषु कुम्भस्य वियतो यथा।**
**नोत्पत्तिस्थितिनाशास्स्युर्बुद्धेरेवं ममापि च।।७९।।**

**सुखदुःखतत्संबन्धानां च प्रत्यक्षत्वान्न श्रद्धामात्रग्राह्यमेतत्–**

**सुखदुःखादिसंबद्ध यथा दण्डेन दण्डिनम्।**
**राधको वीक्षते बुद्धिं साक्षी तद्वदसंहतः।।८०।।**

**एतस्माच्च हेतोर्धियः परिणामित्वं युक्तम्–**

**येनैवास्या भवेद्योगः सुखकुम्भादिना धियः।**
**तं विदन्ती तदैवान्यं वेत्ति नातो विकारिणी।।८१।।**

**अस्याश्च क्षणभङ्गुरत्वे स्वयमेवात्मा साक्षी। न हि कूटस्थावबोधमन्तरेण बुद्धेरेवाविर्भावतिरोभावादिसिद्धिरस्ति–**

**परिणामिधियां वृत्तं नित्याक्रमदृगात्मना।**
**षड्भावविक्रियामेति व्याप्तं खेनांकुरो यथा।।८२।।**

**सत आत्मनश्चाविकारित्वे युक्तिः–**

**स्मृतिस्वप्नप्रबोधेषु न कश्चित्प्रत्ययो धियः।**
**दृशाऽव्याप्तोऽस्त्यतो नित्यमविकारी स्वयंदृशिः।।८३।।**

---

न केवलं युक्तिमात्रसिद्धमेव तत्, किन्तु विदुषामनुभवसिद्धं चैतदित्याह— **एवमिति।** तन्निभेषु प्रमाणाभासेषु।।७८-८२।।

उक्तमर्थं दृष्टान्तेनोपपादयति— **आत्मनश्चेति**।।८३।।

---

१ मम संविदः– "मदभिन्नसंविल्लक्षणकूटस्थनित्यसाक्षिस्वरूपचिदात्मनः" (सारार्थः)

२ क्षणभङ्गि = अनित्यम्। उक्तं हि वार्तिककारैः—
"प्रमाणमप्रमाणं च प्रमाभासं च यद्भवेत्।
चैतन्याकारमेवैतत्प्रथते सर्वमेव तत् ।।"
(बृ.उ.वा., पृ.१०५३, श्लो. १३४/आ.सं.सी.)

एवं तावत्पराभ्युपगतप्रक्रियाप्रस्थानेन निरस्ताशेषविकारैकात्म्यं प्रतिपादितमुपपत्तिभिः। अथाधुना श्रौतीं प्रक्रियामवलम्ब्योच्यते–

अस्तु वा परिणामोऽस्य दृशेः कूटस्थरूपतः।
कल्पितोऽपि मृषैवासौ दण्डस्येवाप्सु वक्रता[1]।।८४।।

षट्सु भावविकारेषु निषिद्धेष्वेवमात्मनि।
दोषः कश्चिदिहासक्तुं[2] न शक्यस्तार्किकश्वभिः।।८५।।

प्रकृतमेवोपादाय बुद्धेः परिणामित्वमात्मनश्च कूटस्थत्वं युक्तिभिरुच्यते–

प्रत्यर्थं तु विभिद्यन्ते बुद्धयो विषयोन्मुखाः[3]।
न भिदाऽवगतेस्तद्वत्सर्वास्ताश्चिन्निभा यतः।।८६।।

स्वसंबद्धार्थ एव–

सावशेषपरिच्छेदिन्यत एव न कृत्स्नवित्।
नो चेत्परिणमेद्बुद्धिः सर्वज्ञा साऽऽत्मवद्भवेत्।।८७।।

अतोऽवगतेरेकत्वात्–

[4]चण्डालबुद्धेर्यद्द्रष्टृ तदेव ब्रह्मबुद्धिदृक्।

---

इत्थं सांख्यसिद्धान्तमवलम्ब्य बुद्धिरेव परिणामिन्यात्मा कूटस्थ इति दर्शितम्। अधुनात्मनः परिणामाभ्युपगमेऽपि तस्य मायामयत्वेन कश्चिद्दोष इति सिद्धान्तमवलम्ब्याह—**एवं तावदिति**।।८४।।

कल्पितोऽप्यभ्युपगतेऽपि एवं षट्भावविकाररहितत्वप्रतिपादनेन कर्तृत्वभोक्तृत्वादिसर्वानर्थसम्बन्ध आत्मनो निराकृतो द्रष्टव्य इत्याह—**षट्स्विति**।।८५।।

**प्रकृतमेवोपपादयति—श्रौतमेव मतमबलम्ब्येति**। यावदवगतेर्घटपटादिबुद्ध्यु-

---

१ "आत्मनः परमार्थतो विकारो नास्तीत्येतावता साम्येन साङ्ख्यमताभ्युपगमः कृतः पूर्वस्मिन्ग्रन्थे। सिद्धान्ते तु साक्षिणि विकल्पितपरिणामोऽस्तीति कृत्वा श्रौतीं प्रक्रियामवलम्ब्योच्यते।" (नै.सि.वि.)

२ आसक्तुं = आसञ्जयितुमिति भावः।

३ विषयोन्मुखाः– "विषयाकाराः" (सारार्थः)

४ चाण्डालबुद्धेः– चाण्डालोऽयम् इत्यत्यन्ताशुद्धवस्तुगोचरबुद्धेर्यच्चैतन्यं द्रष्टृ साक्षिभूतं तदेव ब्रह्मबुद्धिदृक् हिरण्यगर्भबुद्धिसाक्षिभूतमपि ब्राह्मणबुद्धिसाक्षिभूतं वा। उभयोरपि ज्योतिः

**एकं तदुभयोर्ज्योतिर्भास्यभेदादनेकवत्।।८८।।**

**कस्मात्?**

**अवस्थादेशकालादिभेदो[१] नास्त्यनयोर्यतः।**

**तस्माज्जगद्धियां वृत्तं ज्योतिरेकं सदेक्षते।।८९।।**

**सर्वदेहेष्वात्मैकत्वे प्रतिबुद्धपरमार्थतत्त्वस्याप्यप्रतिबुद्ध-देहसंबन्धादशेषदुःखसंबन्ध इति चेत्तन्न–**

**बोधात्प्रागपि दुःखित्वं नान्यदेहोत्थमस्ति नः।**

**बोधादूर्ध्वं कुतस्तत्स्याद्यत्र स्वगतमप्यसत्।।९०।।**

**न चेयं स्वमनीषिकेति ग्राह्यम्। कुतः? श्रुत्यवष्टम्भात्–**

**शब्दाद्याकारनिर्भासा हानोपादानधर्मिणी।[२]**

**भास्येत्याह श्रुतिर्दृष्टिरात्मनोऽपरिणामिनः।।९१।।**

**का त्वसौ श्रुतिः–**

**दृष्टेर्द्रष्टारमात्मानं न पश्येर्दृश्यमानया।[४]**

**विज्ञातारमरे केन विजानीयाद्धियां पतिम्[५]।।९२।।**

---

पाधिभेदपरामर्शमन्तरेणाविभाव्यमानभेदस्यैव नभसः स्वत एकत्वमेवेत्यर्थः।।८६-८८।।

बुद्धेरपि परिणामित्वोपपादनायोत्तरश्लोक इत्याह—**कस्मादिति**। आदिशब्देन भेदगुणादयो गृह्यन्ते।।८९।।

ऐकात्म्यवादे दोषमाशङ्क्य परिहरति—**सर्वदेहेष्विति**।।९०।।

तार्किकैरिव न तर्कावष्टम्भादस्माभिरेव तदुपपाद्यत इत्याह—**न चेयमिति**[३]।।९१।।

एवमर्थमुपवर्ण्य तत्र श्रुतिमवतारयति—**कात्वसाविति**। "न दृष्टेर्द्रष्टारं पश्ये""विज्ञातारमरे केन विजानीयादि"ति च वाक्यद्वयमत्र प्रमाणमित्यर्थः।।९२।।

---

प्रकाशकं चैतन्यमेकमेव सत् उपाधिभूतभास्यवस्तुवशादनेकवद् विभाव्यते। अतः सर्वदेहेष्वपि साक्षी एक एवेति सिद्ध इत्यभिप्रायः। (क्लेशापहारिणी)

ब्रह्म – चतुर्म्मुखब्रह्म हिरण्यगर्भेति भावः।

१ अवस्थादेशकालादिभेदः— "अवस्थापदेन ह्रस्वत्वादिपरिमाणमुच्यते कालिकविशेषाङ्गीकारे कालपदेन पुनरुक्त्यापत्तेः।" (सारार्थः)

२ हानोपादानधर्मिणी– "उत्पत्तिविनाशादिमती" (सारार्थः)

३ न चैवमिति हस्तलिखितपुस्तके दृश्यते।

४ दृश्यमानया– "मनोवृत्त्या" (सारार्थः)

५ धियां पतिं– सकलबुद्धिवृत्तिप्रकाशकम् (सारार्थः)

यस्मात् सर्वप्रमाणोपपन्नोऽयमर्थस्तस्मात् अतोऽन्यथावादिनो जात्यन्धा इवानुकम्पनीया इत्याह—

तदेतदद्वयं ब्रह्म निर्विकारं कुबुद्धिभिः।
जात्यन्धगजदृष्ट्येव कोटिशः परिकल्प्यते।।९३।।

प्रमाणोपपन्नस्यार्थस्य असंभावनात्तदनुकम्पनीयत्वसिद्धिः। तदेतदाह—

यद्यद्विशेषणं दृष्टं नात्मनस्तदनन्वयात्।
खस्य कुम्भादिवत्तस्मादात्मा स्यान्निर्विशेषणः।।९४।।

अतश्चात्मनो भेदासंस्पर्शो भेदस्य मिथ्यास्वाभाव्यादत आह—

अवगत्यात्मनो यस्मादागमापायि कुम्भवत्।
साहंकारमिदं विश्वं तस्मात्तत्स्यात्कचादिवत्।।९५।।

सर्वस्यैवानुमानव्यापारस्य फलमियदेव यद्विवेकग्रहणम्। तदुच्यते—

बुद्धेरनात्मधर्मत्वमनुमानात्प्रसिद्ध्यति।
आत्मनोऽप्यद्वितीयत्वमात्मत्वादेव सिद्ध्यति।।९६।।

---

एवं श्रुतिस्मृतिसिद्धम् प्रत्यक्षानुमानादीनां प्रमाणानां सम्भवाद्वेदान्तसिद्धान्ते नाविश्वासः करणीय इत्यभिप्रेत्याह—**यस्मादिति**। यथा जात्यन्धास्स्वमाकलित-करिकरचरणदर्शनादिष्वयं गजोऽयं गज इति तत्र तत्रावयवे करिभावं कल्पयन्ति तथेत्यर्थः।।९३।।

एतदेव प्रपञ्चयति—**प्रमाणेति**।।९४।।

आत्मा सम्बन्धित्वेऽपि विशेषणानामन्यमतत्वेन स्वरूपेण सद्भावोङ्गीकृत इतिशङ्काव्यावृत्यर्थमाह—**एकस्यात्मन**[1] इति।।९५।।

तर्ह्यात्मनोऽन्वयव्यतिरेकलक्षणानुमानप्रमाणाधीनसिद्धिकत्वात् स्वयं प्रकाशत्वाभ्यु-पगमो भज्येतेत्यत आह—**सर्वस्यैवेति**। आत्मत्वादात्मनस्स्वभावबलात् स्वत एवेति यावत्।।९६।।

---

१ पाठोऽयं मुद्रितपुस्तके नास्ति। मुद्रितपुस्तके तु "अतश्चात्मनो" इति वर्तते। अत्रस्थपाठे "आत्मनः" इति एकवचनबलात् एकस्येति अन्यथा आत्मानमिति बहुवचनतापत्तिः।

यद्यप्ययं ग्रहीतृग्रहणग्राह्यगृहीतितत्फलात्मक आब्रह्मस्तम्ब-पर्यन्तः संसारोऽन्वयव्यतिरेकाभ्यामनात्मतया निर्माल्यवद[1]पविद्धः तथापि तु नैवासौ स्वतस्सिद्धात्मव्यतिरिक्तनात्मप्रकृतिपदार्थ-व्यपाश्रयः सांख्यानामिव, किं तर्हि? स्वतस्सिद्धानुदितानस्तमित-कूटस्थात्मप्रज्ञानमात्रशरीरप्रतिबिम्बिताविचारितसिद्धात्मानव-बोधाश्रय एव तदुपादानत्वात्तस्येतीममर्थं निर्वक्तुकाम आह–

ऋते ज्ञानं न सन्त्यर्था अस्ति ज्ञानमृतेऽपि तान्।
एवं धियो हिरुग्ज्योतिर्विविच्यादनुमानतः ॥९७॥

यस्मात्प्रमाणप्रमेयव्यवहार आत्मानवबोधाश्रय एव तस्मात्सि-द्धमात्मनोऽप्रमेयत्वम्। नैव हि कार्यं स्वकारणमतिलङ्घ्यान्यत्रा-कारक आस्पदमुपनिबध्नाति। अत आह–

व्यवधीयन्त एवामी बुद्धिदेहघटादयः।
आत्मत्वादात्मनः केन व्यवधानं मनागपि॥९८॥

स्वयमनवगमात्मकत्वात्, अनवगमात्मकत्वं च मोह-मात्रोपादानत्वात्–

प्रमाणमन्तरेणैषां बुद्ध्यादीनामसिद्धता।

---

सांख्यादयो बुद्ध्यादिव्यतिरिक्तमात्मानमसंसारिणमभ्युपगम्य बुद्ध्यादीनां प्रधान-कार्यत्वेन तदाश्रयत्वं सत्यत्वञ्चाभ्युपगच्छन्ति। तथा नास्मत्सिद्धान्तः, किन्तु सदसद्भ्याम-निर्वचनीयानाद्यविद्याविजृम्भिततया तदाश्रया बुद्ध्यादयः प्रत्यगात्मनि परिकल्पिता इतीममर्थमाह—यद्यपीति॥९७॥

एतेनात्मनोऽप्रमेयत्वमपि साधितं भवतीत्याह—**यस्मादिति**। आत्माननबोधा-श्रयत्वमेव साधयति—**नहीति**। व्यवधीयन्त इति। आत्मनश्चैतन्याभासोदयापेक्षत्वात्। बुद्धिसिद्धेःतदनपेक्षस्स्वतस्सिद्धात्मस्वभावापेक्षयाबुद्धेर्व्यवधानं, देहस्य पुनर्बुद्ध्य-पेक्षत्वादिन्द्रियापेक्षत्वाच्च ततोऽपि व्यवधानम्। घटादीनां पुनर्देशकालादिसंनिधानापेक्षत्वात् बुद्ध्याद्यपेक्षत्वाच्च देहादपि व्यवधानमात्मन इत्यर्थः॥९८॥

उक्तार्थे स्वयमेव हेतुमाह—**स्वयमिति**। अनुभूतिफलार्थत्वादिति। अनुभूतिरेव फलं अनुभूतिफलं तदर्थित्वात् स्वतस्तद्रहितबुद्ध्यादीनां व्यवधानमित्यर्थः॥९९॥

---

१ निर्माल्यवत्— "गतसारवस्तुवत्" इति भावः।

**अनुभूतिफलार्थत्वादात्मा ज्ञः[1] किमपेक्षते।।९९।।**

**वक्ष्यमाणेतरेतराध्याससिद्ध्यर्थमुक्तव्यतिरेकानुवादः–**

**घटबुद्धेर्घटाच्चार्थाद्द्रष्टुर्यद्वद्विभिन्नता ।**

**अहंबुद्धेरहंगम्याद्दुःखिनश्च तथा दृशेः।।१००।।**

**एवमेतयोरात्मानात्मनोः स्वतः परतः सिद्धयोर्लौकिकरज्जु-सर्पाध्यारोपवदविद्योपाश्रय एवेतरेतराध्यारोप इत्येतदाह–**

**अभ्रयानं[2] यथा मोहाच्छशभृत्यध्यवस्यति।**

**सुखित्वादीन्धियो धर्मांस्तद्वदात्मनि मन्यते।।१०१।।**

**दग्धृत्वं च यथा वह्नेरयसो मन्यते कुधीः।**

**चैतन्यं तद्वदात्मीय मोहात्कर्तरि मन्यते।।१०२।।**

**सर्व एवायमात्मानात्मविभागः प्रत्यक्षादिप्रमाणवर्त्यनन्यनु-पतितोऽविद्योत्सङ्गवर्त्येव न परमात्मव्यपाश्रयः। अस्याश्चाविद्यायाः**

---

आत्मानात्मनोरुक्तन्यायेनात्यन्तविशिष्टविविक्तस्वभावयोस्संयोगसमवायतादात्म्यादि सम्बन्धासम्भवादन्तरेण च सम्बन्धं प्रकाश्यप्रकाशकभावायोगादाध्यासिक (दध्यासित) एव सम्बन्धो वक्तव्यः। तस्य चाध्यासस्य विद्यमानभेदयोस्तदग्रहपूर्वकत्वादुक्तो व्यतिरेको विवक्षिताध्याससिद्धयेऽनुद्यत इत्याह—**वक्ष्यमाणेति**। यथा द्रष्टृदृश्ययोर्व्यतिरेकस्तथा साक्षिसाक्ष्ययोरपि व्यतिरेकस्साधित इत्यर्थः।।१००।।

इदानीं व्यतिरेकं दर्शयित्वा तदग्रहनिबन्धनोऽध्यासः प्रदर्श्यत इत्याह—**एवमेतयोरिति**।।१०१।।

एवमात्मन्यनात्मधर्मारोपं सदृष्टान्तमाह—**दग्धृत्वमिति**।।१०२।।

ननु सर्वस्य भेदजातस्यात्मन्यध्यस्तत्वमनुपपन्नं प्रत्यक्षादिप्रमाणसिद्धत्वात् बाधाभावाच्चेत्याशङ्क्य प्रत्यक्षादीनां तत्त्वात् (अवगन्तृत्व) लक्षणप्रामाण्याभावा-द्देहात्मप्रत्ययवद् व्यवहारसमर्थत्वलक्षणमेव प्रामाण्यम्।[3] अपरोक्षभ्रमस्य च परोक्षज्ञानेन यौक्तिकेन प्रतिभासनिवृत्तिपर्यन्तबाधाभावे द्वैतसाक्षात्कारज्ञानेन वेदान्तवाक्यजनितेन बाधोऽपि सम्भवतीत्यभिप्रेत्य परिहरति—**सर्व एवायमित्यादिना**। अद्वैतसाक्षात्कारस्य

---

१ ज्ञः = स्वप्रकाश इत्यर्थः।

२ अभ्रयानं—"मेघाश्रितं चलनम्" (सारार्थः)

३ भवतीति शेषः।

सर्वानर्थहेतोः कुतो निवृत्तिरिति चेत्तदाह–

दुःखराशेर्विचित्रस्य सेयं भ्रान्तिश्चिरन्तनी।
मूलं संसारवृक्षस्य तद्बाधस्तत्त्वदर्शनात्।।१०३।।

तद्बाधस्तत्त्वदर्शनादिति कुतः संभाव्यत इति चेत्, अत आह आगोपालाविपालपण्डितमियमेव प्रसिद्धिः–

अप्रमोत्थं प्रमोत्थेन ज्ञानं ज्ञानेन बाध्यते।
अहिरज्ज्वादिवद्बाधो देहाद्यात्ममतेस्तथा।।१०४।।

लौकिकप्रमेयवैलक्षण्यादात्मनो नेहानधिगताधिगमः प्रमाणफलम्–

अविद्यानाशमात्रं तु फलमित्युपचर्यते।
नाज्ञातज्ञापनं न्याय्यमवगत्येकरूपतः।।१०५।।

यस्मादात्मानवबोधमात्रोपादानाः प्रमात्रादयस्तस्मात्–

न विदन्त्यात्मनः सत्तां द्रष्टृदर्शनगोचरः।
न चान्योन्यमतोऽमीषां ज्ञेयत्वं भिन्नसाधनम्।।१०६।।

द्रष्ट्रादेरसाधारणरूपज्ञापनायाह–

बाह्य आकारवान् ग्राह्यो ग्रहणं निश्चयादिमत्।
अन्वय्यहमिति ज्ञेयः साक्षी त्वात्मा ध्रुवः सदा।।१०७।।

---

बाधकत्वं क्वापि न दृश्यत इत्याशङ्क्याधिष्ठानसाक्षात्कारस्याध्यस्तबाधकत्वस्य लोके दृष्टत्वादत्राप्यनुमेयमित्याह—**तद्बाधस्तत्त्वदर्शनादिति**।।१०३।।

**कुत** इत्यादिना। तत्त्वदर्शनादित्युक्तमात्मनोऽभ्युपमतं ततश्च स्वतस्सिद्धत्वहानिरित्याशङ्क्य परिहरति—**लौकिकेति**।।१०४-१०५।।

आत्मव्यतिरिक्तस्य नात्माध्यक्षत्वादपि न तदधीनाधिगम आत्मेत्याह—**यस्मादिति**। अन्योन्यवदेकत्वमपि किं न स्यादिति। तत्राह—**न चेति**।।१०६।।

द्रष्टादिव्यतिरिक्त आत्मा नास्माकं प्रसिद्ध इति परमतमाशङ्क्य लक्षणतस्तस्योपपादनायाह—**द्रष्ट्रादेरिति**। बाह्यः पराग्भूतः आकारवान् पृथुबुध्नोदरत्वादिधर्मवान् अन्वय्यहमिति अहं पश्याम्यहं शृणोम्यहं स्मरामीति च दर्शनाच्च श्रवणादिषु व्यभिचारिषु यः प्रत्यभिज्ञया एकत्वेनानुसन्धीयते सोऽयं सदैव साक्षी पुनरेषां त्रयाणां भावाभाव-

सर्वकारकक्रियाफलविभागात्मकसंसारशून्य आत्मेति, कारकक्रियाफलविभागसाक्षित्वादात्मनस्तदाह–

ग्राहकग्रहणग्राह्यविभागे योऽविभागवान्।
हानोपादानयोस्साक्षी हानोपादानवर्जितः।।१०८।।

ग्राहकादिनिष्ठैव ग्राहकादिभावाभावविभागसिद्धिः कस्मान्नेति चेत्तदाह–

स्वसाधनं स्वयं नष्टो न नाशं वेत्त्यभावतः।
अत एव न चान्येषामतोऽसौ भिन्नसाक्षिकः।।१०९।।

ग्राहकादेरन्यसाक्षिपूर्वकत्वसिद्धेः स्वसाक्षिणोऽप्यन्यसाक्षिपूर्वकत्वादनवस्थेति चेत्तन्न, साक्षिणो व्यतिरिक्तहेत्वनपेक्षत्वादत आह–

धीवन्नापेक्षते सिद्धिमात्माऽन्यस्मादविक्रियः।
निरपेक्षमपेक्ष्यैव सिद्ध्यन्त्यन्ये न तु स्वयम्।।११०।।

यतो ग्राहकादिष्वात्मभावोऽविद्यानिबन्धन एव, तस्मात् अन्वयव्यतिरेकाभ्यां विभज्यानात्मनः स्वयम्।

---

साधकस्सुषुप्तकैवल्यादिष्वन्वयी कूटस्थ नित्यः परैरपि बलादभ्युपेयोऽन्यथा द्रष्ट्रादेरसिद्धिरिति भावः।।१०७।।

साक्षित्वेनासंसारित्वमात्मनः प्रसाधितमित्याह—**सर्वकारकेति**। इतिशब्दः इत्थं कारकक्रियाफलविभागसाक्षित्वादित्युत्तरेण सम्बध्यते।।१०८।।

अविभागवत् कस्मान्न सिध्येदित्याशङ्क्योत्तरमाह—**ग्राहकादीति**। ग्राहकादीनामन्यतमः स्वनाशं स्वसाधनं यथा भवति तथा स्वयं न वेत्ति स्वस्याभावात्। अत एवान्येषामपि ग्रहणादीनां नाशं न वेत्ति। प्रतीयते चासौ तस्मात् ग्राहकादिव्यतिरिक्तात्मसाक्षिक एवासावित्यर्थः।।१०९।।

ग्राहकस्यापि ग्राह्यत्वे साक्षिणोऽपि ग्राह्यत्वं ततश्चानवस्था स्यादिति चेत्, मैवं तस्याजडत्वेन स्वसिद्धावन्यानपेक्षत्वादित्याह—**ग्राहकादेरिति**। अन्येषामात्मग्रहणत्वेन तद्ग्राहकत्वायोगाच्च नान्यग्राह्यत्वमात्मनस्तु निरपेक्षमिति।।११०।।

इदानीं पूर्वप्रसाधितेतरेतराध्यासफलमुपसंहरति—**यत इति**। जगत उत्पत्तिस्थितिनाशेषु यो ईश्वरोऽविकारायवगतिस्वरूपेण वर्तते तमहमस्मीत्यवेहि न

**उत्पत्तिस्थितिनाशेषु योऽवगत्यैव वर्तते।[१]**
**जगतोऽविकारयाऽवेहि तमस्मीति न नश्वरम् ।।१११।।**

**स्वतस्सिद्धात्मचैतन्यप्रतिबिम्बिताविचारितसिद्धिकात्मानवबोधोत्थेतरेतरस्वभावापेक्षसिद्धत्वात्स्वतश्चासिद्धेरनात्मनो द्वैतेन्द्रजालस्य–**

**न स्वयं स्वस्य नानात्वं[२] नावगत्यात्मना यतः।**
**नोभाभ्यामप्यतस्सिद्धमद्वैतं द्वैतबाधया।।११२।।**

**यथोक्तार्थप्रतिपत्तिद्रढिम्ने श्रुत्युदाहरणोपन्यासः–**

**नित्यावगतिरूपत्वाकारकादिर्न चात्मनः।**
**अस्थूलं नेति नेतीति न जायत इति श्रुतिः।।११३।।**

**सर्वस्यास्य ग्राहकादेर्द्वैतप्रपञ्चस्यात्मानवबोधमात्रोपादानस्य स्वयं सेद्धुमशक्यत्वादात्मसिद्धेश्चानुपादेयत्वात् –**

**आत्मनश्चेन्निवार्यन्ते[४] बुद्धिदेहघटादयः।**

---

तु नश्वरं प्रमात्रादिरूपमित्यर्थः।।१११।।

"तमहमस्मीत्येव हि न नश्वरमि"त्युक्तत्वादात्मव्यतिरिक्तमपि वस्त्वङ्गीकृतमित्याशङ्क्य तस्य स्वतः परतश्चासिद्धेः प्रत्यगात्माश्रयानिर्वाच्यानाद्यविद्याविजृम्भितत्वान्नैवमित्याह—**स्वतस्सिद्धेति।** चैतन्ये प्रतिबिम्बितं स्फुरितमितरेतरापेक्षसिद्धत्वादिति प्रतियोगिनो भेदेन सिद्धेस्तत्र तत्सिद्धौ च प्रतियोगिनो भेदसिद्धिरिति परस्पराश्रयत्वादित्यर्थः। **स्वस्यवेति** स्वस्य इन्द्रजालस्य स्वयमेव नानात्वं न सिद्धं, जडत्वान्नाप्यवगतिरूपेण जडाजडयोरैक्यायोगान्नोभाभ्यामपि संयोगसमवायादिसम्बन्धासम्भवादतो[३] दुर्निरूपसिद्धिकत्वाद् द्वैतस्याऽद्वैतमेव परमार्थमित्यर्थः।।११२-११३।।

मिथ्यादेर्द्वैतप्रपञ्चस्यात्मव्यतिरिक्तस्य त्वसाधनम् तस्य जडस्य स्वतोऽसिद्धेरात्मचैतन्यस्य जडे प्रतिसङ्क्रमयितुं शक्यत्वान्मिथ्यात्वं बलादापततीत्याह—**सर्वस्येति।**

---

१ अविकारया अवगत्यैव वर्तते– "इत्थम्भावे तृतीया। अवगतिस्वरूप एव वर्तत इत्यर्थः। (सारार्थः)

२ "अद्वैतात्मन एव परमार्थत्वं द्वैतस्य च मिथ्यात्वं स्पष्टयत्यनेन श्लोकेन" नानात्वम् = वस्त्वन्तरत्वमिति भावः।

३ दृग्दृश्ययोरिति शेषः।

४ आत्मनश्चेन्निवार्यन्ते– यद्यात्मनः सकाशाद् बुद्धिदेहघटादयः शुक्त्यादे रजतादिवत्पृथक्क्रियन्ते। (सारार्थः)

षष्ठगोचरकल्पास्ते विज्ञेयाः परमार्थतः।।११४।।

कुतो न्यायबलादेवं निश्चितं प्रतीयते। यस्मात्–

नित्यां संविदमाश्रित्य स्वतसिद्धामविक्रियाम्।
[1]सिद्धायन्ते धियो बोधास्तांश्चाश्रित्य घटादयः।।११५।।

यस्मान्न कयाचिदपि युक्त्याऽऽत्मनः कारकत्वं क्रियात्वं फलत्वं चोपपद्यते तस्मादात्मवस्तुयाथात्म्यानवबोधमात्रोपादानत्वान्नभसीव रजोधूमतुषारनीहारनीलत्वाद्यध्यासो यथोक्तात्मनि सर्वोऽयं क्रियाकारकफलात्मकसंसारोऽहंममत्वयत्नेच्छादिमिथ्याध्यास एवेति सिद्धम्। इममर्थमाह–

अहंमिथ्याभिशापेन दुःख्यात्मा तद्बुभुत्सया।
इतः श्रुतिं तया नेतीत्युक्तः कैवल्यमास्थितः।।११६।।

तस्यास्य मुमुक्षोः श्रौताद्वचसः स्वप्ननिमित्तोत्सारितनिद्रस्येवेयं निश्चितार्था प्रमा जायते–

नाहं न च ममात्मत्वात्सर्वदाऽनात्मवर्जितः।

---

निवार्यन्ते तत्स्वरूपत्वेन तदीयत्वेन निषिध्यन्ते चेदिति यावत्।।११४।।

ननु बुद्ध्यादेर्द्वैतप्रपञ्चस्यापरोक्षतया प्रतिभासमानस्य कथं षष्ठगोचरकत्वमित्याक्षिपति—**कुत इति**। परिहरति—**यस्मादित्यादिना**। अपरोक्षतया स्वत:प्रकाशमानसंविदैक्याध्यासात् धियामापरोक्ष्यं तत्र प्रतिबिम्बितत्वाच्च घटादीनामापरोक्ष्यप्रतिभासो, न तु वास्तव इत्यर्थः।।११५।।

प्रपञ्चस्य मिथ्यात्वमुपपादितमित्युपसंहरति—**यस्मादित्यादिना। अहं मिथ्याभिशापेनेति।** अविद्यमानाहंकारात्मत्वाध्यारोपापवादे नात्मा दुःखी, संशोधनेच्छया मातृकल्पां श्रुतिमुपगतस्तया च **नेति** नेत्यात्मना अगृह्यो न गृह्यत इत्यादिलक्षणया निराकृतापवादोऽध्यारोपिताहङ्कारादिकं विहाय स्वस्थः **कैवल्यमास्थित** इत्यर्थः।।११६।।

तर्हि श्रुत्याचार्यादिप्रपञ्चस्य वास्तवत्वमभ्युपेयं मिथ्यात्वे बाष्पधूमादिवत् प्रमाजनकत्वानुपपत्तेरात्मनश्चाहंकाराद्यध्यारोपे तन्निवृत्तौ च सविशेषत्वान्निर्विशेषत्वाभ्युपगम-

---

१ सिद्धायन्ते धियो बोधाः:– बौद्धप्रत्यया बोधपरिणामिन्यो वा सिद्धायन्ते चिदभिव्यञ्जकत्वयोग्यतां प्राप्नुवन्ति प्रमाणभावं लभन्त इति यावत्।" (सारार्थः)

**भानाविव तमोध्यासोऽपह्नवश्च तथा मयि।।११७।।**

**सोऽयमेवं प्रतिपन्नस्वभावमात्मानं प्रतिपन्नोऽनुक्रोशति–**

**यत्र त्वस्येति साटोपं कृत्स्नद्वैतनिषेधिनीम्।**
**प्रोत्सारयन्तीं संसारमप्यश्रौषं न किं श्रुतिम्।।११८।।**

**इत्योमित्यवबुद्धात्मा निष्कलोऽकारकोऽक्रियः।**
**विरक्त इव बुद्ध्यादेरेकाकित्वमुपेयिवान्।।११९।।**

**इति श्रीमच्छङ्करभगवत्पूज्यपादशिष्यसुरेश्वराचार्यकृतौ नैष्कर्म्यसिद्धौ द्वितीयोऽध्यायः।।**

---

हानिरित्याशङ्क्याह—**तस्यास्येति**।।११७।।

एवं श्रुतिवचनाकर्णमात्रनिरस्येऽपि संसारे वैषयिकसुखलवलुब्धचेतस्तया इयन्तं कालं प्रमत्तोऽहमासमहो कष्टमिति विदुषोऽनुक्रोशं दर्शयति मुमुक्षूणां प्रयोजनाय **सोऽयमिति**।।११८।।

इदानीं विद्याफलं दर्शयन्नध्यायमुपसंहरति—**इत्योमिति** "ओमिति श्रुत्याचार्योक्त-मर्थमनुभवन्नभ्यनुज्ञामभिनयति। अर्थादोङ्कारस्य ब्रह्मप्रतिपत्तिसाधनत्वमपि दर्शितमिति द्रष्टव्यम्।।११९।।

**हरिः ओमिति**

**श्रीमत्परमहंसपरिव्राजकाचार्यज्ञानोत्तमपूज्यपादशिष्यश्रीचित्सुखमुनिरचितायां नैष्कर्म्यसिद्धिभावतत्त्वप्रकाशिकायां आत्मज्ञानप्रतिबन्धापनयनात्मकः द्वितीयोऽध्यायः।**

# तृतीयोऽध्यायः

**सर्वोऽयं प्रमितिप्रमाणप्रमेयप्रमातृलक्षण आब्रह्मस्तम्बपर्यन्तो मिथ्याध्यास एवेति बहुश उपपत्तिभिरतिष्ठिपम्[१]। आत्मा च जन्मादिषड्भावविकारवर्जितः कूटस्थबोध एवेति स्फुटीकृतम्। तयोश्च मिथ्याध्यासकूटस्थात्मनोर्नान्तरेणाज्ञानं संबन्धोऽन्यत्र चोदनापरिप्रापितात् यथा 'इयमेवर्गग्निः साम' इति। तच्चाज्ञानं स्वात्ममात्रनिमित्तं न संभवतीति कस्यचित्कस्मिंश्चिद्विषये भवतीत्यभ्युपगन्तव्यम्। इह च पदार्थद्वयं निर्द्धारितमात्माऽनात्मा च।**

---

वृत्तं सङ्कीर्त्तयति, वर्तिष्यमाणस्याध्यायस्य सङ्गतिं दर्शयितुं—**सर्वोऽयमिति**। पदार्थपरिशोधनार्थविचारनान्तरीयकतया सर्वस्य प्रपञ्चस्य मिथ्यात्वं दर्शितमित्यर्थः। साक्षात्प्रतिपादितमर्थान्तरं दर्शयति—**आत्मा चेति**। तर्हि पदार्थपरिशोधनस्य सम्यङ्निष्पादितत्वात् विदितपदपदार्थस्य च स्वयमेव वाक्यार्थज्ञानोत्पत्तेः किमर्थः तृतीयाध्यायारम्भ इत्याह—**तयोश्चेति**। अध्यस्यमानाधिष्ठानयोः शुक्तिरूप्ययोरिवाधिष्ठानविषयाज्ञानव्यतिरेकेण सम्बन्धासम्भवादज्ञानं तावदहं इदं ममेदमिति प्रतीयमानात्मानमसम्बन्धं घटकमभ्युपेयम्। तस्य चाज्ञानस्य निवृत्तिव्यतिरेकेण पुरुषार्थापरिसमाप्तेस्तन्निवृत्तेश्च वक्षमाणन्यायेन वाक्याधीनत्वाद्वाक्यव्याख्यानायाध्यायारम्भो घटत इति भावः। अधिष्ठानाध्यस्यमानयोरज्ञानव्यतिरेकेणापि सम्बन्धो दृश्यत इत्याशङ्क्याह—**अन्यथेति**[२]। निवर्त्याज्ञानस्य निवर्तकाज्ञानेन समाश्रयविषयत्वनियमस्येदं रजतमियं शुक्तिरित्यादौ दर्शनात्। इहापि ब्रह्मविज्ञानेनात्माज्ञानस्य समानाश्रयविषयत्वं दर्शयति—**इयमिति**। तत्साधनायोपक्रमते—**तच्चेति**। अज्ञानं स्वसत्ताप्रतीत्योः स्वयमेव प्रयोजकं न भवति नित्यपरतन्त्रत्वात्ततस्तस्याश्रयविषयौ निरूप्यमाणौ ज्ञानेन समानावेव भवत इति भावः। तावता कथमेकाश्रयविषयत्वमित्यत आह—**इह चेति**। इह वेदान्तशास्त्र इति सम्बन्धः। अस्त्वेवं तथापि कथं सम्यक् ज्ञानेनैकाश्रयविषयविषयत्वमिति परिशेषादित्याह—**तत्रेति**। **अभिसम्बन्ध** आश्रयाश्रयित्वलक्षणः। अत्र हेतुस्तस्य हीति। तथापि को विरोध इत्यत आह—**न हीति**।

---

१ उपपत्तिभिरभिहितमिति केचित्।

२ अन्यत्रेति चन्द्रिकापाठः। मुद्रितपुस्तके मूलेऽपि तथैवास्ति।

**तत्रानात्मनस्तावन्न अज्ञानेनाभिसंबन्धः। तस्य हि स्वरूपमेवाज्ञानं, न हि स्वतोऽज्ञानस्य अज्ञानं घटते। संभवदप्यज्ञानस्वभावेऽज्ञानं कमतिशयं जनयेत्। न च तत्र ज्ञानप्राप्तिरस्ति येन तत्प्रतिषेधात्मकज्ञानं स्यात्। अनात्मनश्चाज्ञानप्रसूतत्वात्। न हि पूर्वसिद्धं सत्ततो लब्धात्मलाभस्य सेत्स्यत आश्रयस्याश्रयि संभवति। तदनपेक्षस्य च, तस्य निस्स्वभावत्वात्। एतेभ्य एव हेतुभ्यो नानात्मविषयमज्ञानं संभवतीति ग्राह्यम्। एवं तावन्नानात्मनोऽज्ञानित्वं नापि तद्विषयमज्ञानम्। पारिशेष्यादात्मन एवास्त्वज्ञानं तस्याज्ञोऽस्मीत्यनुभवदर्शनात्। 'सोऽहंभगवो मन्त्रविदेवास्मि नात्मवित्'**

---

अज्ञानात्मकमज्ञानाश्रयो भवति। अज्ञानान्तरादिवच्छुक्तिरूप्यादिवच्चेति भावः। अज्ञानाश्रयत्वप्रयुक्तसंशयविपर्यासाश्रयत्वादर्शनादप्यनात्मनो घटादिवन्नाज्ञानाश्रयत्वमित्याह—**सम्भवदपीति**। अज्ञानसम्यग्ज्ञानानधिकरणस्यानात्मनो ज्ञानाधिकरणत्वसम्भव इत्याह—**न च तत्रेति**। अज्ञानकार्यत्वादप्यनात्मनो न तदाश्रयत्वमित्याह—**अनात्मनश्चेति**। अज्ञानस्य स्वभावालोचनायामपि न तस्याहङ्काराद्यनात्माश्रयत्वं युक्तमित्याह—**न हीति**। कारणतया पूर्वसिद्धमज्ञानत एवाज्ञानाल्लब्धात्मकस्याहङ्कारादेस्तदेवाज्ञानमाश्रित्य सेत्स्यतस्स्वाश्रयत्वेनाभिमतस्याश्रयितेनाश्रयेणाश्रयवन्न भवितुमर्हति कार्योदयात् प्रागेव तस्य स्वाश्रयतयैव सिद्धत्वादित्यर्थः। यद्वा पूर्वोक्तमेव प्रपञ्चयति—**न हीति**। कारणतयापूर्वसिद्धस्याज्ञानस्य ततः सेत्स्यदनात्माख्यकार्याश्रयत्वमनुपपन्नमिति। किं चाधेयाकारनिरपेक्षाकारान्तरेणाधारस्याधारता दृष्टा, न चेहाज्ञानापेक्षस्यानात्मन आकारान्तरमस्तीत्याह—**तदनपेक्षस्येति**। मा भूदज्ञानस्यानात्माश्रयो विषयस्तु किं न स्यादित्यत आह—**एतेभ्य इति**। विषयस्याप्याश्रयवदज्ञानस्वरूपघटकत्वादज्ञानात्मकस्य चानात्मनो ज्ञानवत्तद्विषयत्वेन घटत्वायोगात्तमसीव तमोऽन्तरस्य तत्रातिशयाभावादज्ञानं विनापि तदा भासकज्ञानानुदयादेव तदनवभाससिद्धेरज्ञानकार्यत्वादेव रूप्यादिवत्तस्याज्ञाननिवर्तकसम्यग्ज्ञानविषयत्वायोगात् पूर्वमेवाश्रयविषयघटिततया सिद्धादज्ञनात्सेत्स्यतः पूर्वसिद्धविषयाभावायोगात् सम्यग्ज्ञाननिरसनीयाकारातिरिक्ताज्ञानविषयत्वयोगाकारान्तरासम्भवाच्च नानात्मविषयमज्ञानं सम्भवतीत्यर्थः। परिशेषादात्माश्रयमात्मविषयञ्च तज्ज्ञानमित्युपसंहरति—**एवं तावदिति**। अनुभवसिद्धं चैतदित्याह—**तस्येति**। आगमोऽप्यत्र प्रमाणमित्याह—**सोऽहमिति**। अनात्मनो ज्ञानाश्रयत्वयोरभिहित-

**इति श्रुतेः। न चात्मनोऽज्ञानस्वरूपता तस्य चैतन्यमात्रस्वाभाव्यात्। अतिशयश्च संभवति ज्ञानविपरिलोपः ज्ञानप्राप्तेश्च संभवस्तस्य ज्ञानकारित्वात्। न चाज्ञानकार्यत्वं कूटस्थात्मस्वाभाव्यात्। अज्ञानानपेक्षस्य चात्मनः स्वत एव स्वरूपसिद्धेर्युक्तमात्मन एवाज्ञत्वम्। किं विषयं पुनस्तदात्मनोऽज्ञानम्? आत्मविषयमिति ब्रूमः। नन्वात्मनोऽपि ज्ञानस्वरूपत्वादनन्यत्वाच्च ज्ञानप्रकृतित्वादिभ्यश्च हेतुभ्यो नैवाज्ञानं घटते। घटत एव। कथम्? अज्ञान-**

---

दोषाणामात्मन्यसम्भवादप्येवमभ्युपेयमित्याह—**न चेति**। ज्ञानविपरीतरूप इति। स्वयंप्रकाशत्वान्नित्यशुद्धबुद्धाद्वितीयाकारेण प्राप्तप्रकाशस्याद्वितीयप्रकाशं तद्विपरीतस्फुरणमतिशय इत्यर्थः। तथापि तस्य कूटस्थत्वादागन्तुकाज्ञाननिवर्तकं सम्यग्ज्ञानं नोपपद्यत इत्यत आह—**ज्ञानेति**। अविद्या तत्कार्यान्तःकरणादिवृत्तिषु प्रमाणाप्रमाणरूपचैतन्याभ्यासोदयहेतुत्वेन तस्य ज्ञानकारित्वादित्यर्थः। अनात्मन इवाज्ञानकार्यत्वलक्षणोऽपि न दोष इत्याह—**न चेति**। तस्याकार्यत्वमुभयवादिसंमतमिति भावः। यच्चोक्तं तदनपेक्षस्य तस्य निस्स्वभावत्वादिति तदप्यस्ति नास्तीत्याह—**अज्ञानेति**। अज्ञानस्य जड़त्वात् तत्साधको जडबोधस्वभाव आत्मा तदन्तर्गताकारनिरपेक्षाकारस्सिद्ध इत्यर्थः। भवत्वेवमात्मनोऽज्ञानाश्रयत्वं विषयत्वं तु न युक्तम्, ज्ञानेच्छादीनां लोके भिन्नाश्रयविषयत्वदर्शनात्। प्रतीयमानाकारेणाज्ञानं प्रत्याश्रयत्वमप्रतीयमानाकारेण विषयत्वमित्याकारभेदस्य तस्मिन्नेकरसे वस्तुन्यसम्भवाच्चेत्याक्षिपति—**किं विषयमिति**। समाधत्ते—**आत्मविषयमिति**। मामहं जानामि मामहं न जानामीति च ज्ञानाज्ञानयोरेकाश्रयविषयत्वस्यापि लोके दर्शनादहमितिसाधारणाकारेण प्रतीयमानस्याप्यात्मनोऽद्वितीयानन्ताकारेणाप्रतीयमानत्वस्यानुभवसिद्धत्वादहं मनुष्य इति विभ्रमेऽहमिति साधारणाकारेण प्रतीयमानस्य देहव्यतिरिक्तासाधारणस्वभावेनाप्रतीयमानत्वस्य परैरभ्युपेतत्वादज्ञानस्यैकाश्रयविषयत्वेन कश्चिद्दोष इति भावः। उक्तमेवार्थं हेत्वन्तरावष्टम्भेनाक्षिपति—**नन्विति**। ज्ञानाज्ञानयोस्तमःप्रकाशयोरिव परस्परविरुद्धस्वभावत्वाद्विज्ञानस्वभावस्यात्मनो नाज्ञानाश्रयत्वं तदाश्रयत्वे तन्निवर्तकत्वायोगात्। यथाश्रयाश्रयिभावस्यान्यत्वव्याप्तत्वादद्वितीये चात्मनि तदयोगादज्ञाननिवर्त्तकप्रमाणज्ञानकारणत्वाच्चात्मनस्तन्निवर्त्तकपुष्कलकारणवतः सवितुरिवान्धकाराश्रयत्वस्यासम्भवादसङ्गत्वनित्यमुक्तत्वादिभिश्च हेतुभ्यो नाज्ञानाश्रयत्वसम्भव इत्यर्थः। समाधत्ते—**घटत इति**। पूर्वोक्तहेतुषु जीवत्सु समाधानं दुर्घटमित्याक्षिपति—**कथमिति**। यदुक्तं "ज्ञानस्वभाव-

**मात्रनिमित्तत्वाद्विभागस्य सर्पात्मतेव रज्ज्वाः। तस्मात्तदपनुत्तौ**

---

त्वादात्मनोऽज्ञानं नोपपद्यते विरोधात्'' इति। तत्किं प्रमाणज्ञानस्वभावत्वमुतानादिनिधन-साक्षिचैतन्यस्वरूपत्वान्नाद्यः, तस्य प्रमातृप्रमेयप्रमितिलक्षणविभागघटितस्वभावस्याज्ञान-मात्रनिमित्ततयाऽनादिसिद्धात्मस्वभावत्वासम्भवान्न हि कल्पितमकल्पितस्य स्वभावः सर्पात्मतेव रज्वाः। नापि द्वितीयः। साक्षिचैतन्यस्याज्ञानस्य च तदवभास्यत्वायोगात् भांस्यभासकभावेनाविरोधात् साक्षिण्यध्यासलक्षण[१]सम्बन्धमन्तरेण चाज्ञानस्य च तदवभासत्वायोगात् भास्यभासकविभागस्योक्तन्यायेनात्मसम्बन्धज्ञानमात्रनिमित्तत्वा-ल्लोकेऽपि यद्यदधीनसत्ताप्रतीतिकं तत्तस्मिन्नेवाध्यस्तदृष्टं यथा रज्वास्सर्पात्मता रज्वामेवाध्यस्ता। न च तर्ह्यविरोधादज्ञानं कदाचिदपि न निवर्त्येति शङ्कनीयम्। स्वरूपेणानिवर्त्तकस्याप्यात्मनो वेदान्तवाक्यजनितप्रमाणभूतस्वाकारान्तःकरण-वृत्तिफलकारूढस्य दारुगतस्येव वह्नेर्मथनादभिव्यक्तस्य तन्निवर्तकत्वोपपत्तेः। यदुक्तं "आश्रयाश्रयिभावस्य भेदगतत्वाददद्वितीये ब्रह्मणि नायमुपपन्नः'' इति। तच्च न, परमार्थतोऽद्वितीयत्वेऽपि स्वस्मिन्नध्यस्ताज्ञानमात्रनिमित्तत्वादाश्रयाश्रयिविभागस्य रज्वास्सर्पात्मतापक्षस्याज्ञानाश्रयत्वाविरोधादहमज्ञ इति च चेतनाश्रयत्वस्य युक्तिमात्रेणा-पह्नोतुमशक्यत्वान्नित्यपरतन्त्रस्य चाज्ञानस्य स्वाश्रयत्वस्वकार्याश्रयत्वयोरसम्भवे परिशेषादात्माश्रयत्वस्यानुभवबलादेवाभ्युपेयत्वात्प्रतीयमानस्य च दुर्घटताया अविद्यात्वोप-पादकत्वादविद्यावदेवाश्रयाश्रयिभावादेरपि ज्ञाननिवर्त्यस्य दुर्निरूपत्वात्। यदुक्तं "ज्ञानप्रकृतित्वादसङ्गत्वान्नित्यमुक्तत्वाच्चात्मनोऽज्ञानमनुपपन्नम्'' इति। तदपि न, रज्जुसर्पयोः प्रकृतिविकारविभागस्येव ज्ञानात्मनोः प्रकृतिविकारविभागस्याज्ञानमात्र-निमित्तत्वात्। ज्ञानप्रकृतित्वेनैव तदाश्रयाज्ञानस्यावश्यकल्पनीयत्वात्। निरवयवस्या-परिणामस्य निष्क्रियात्मस्वरूपेणैव ज्ञानप्रकृतित्वानुपपत्तेरज्ञाननिवृत्तिपुष्कलकारणस्य च तत्त्वमस्यादिवाक्यजन्यस्य प्रमाणज्ञानस्य श्रवणादिपराधीनतया ततः प्रागसिद्धेस्त-दुदयात् पूर्वमज्ञानाश्रयत्वोपपत्तेरसङ्गस्य नित्यमुक्तत्वादेश्च वास्तवस्वभावस्याज्ञानमात्र-परिकल्पितप्रतिभासमात्रशरीरेण सम्बन्धादिना (विभागेन) विरोधाभावात् घटत एवात्मनोऽज्ञानमिति भावः। एवमात्मनोऽज्ञानविषयत्वपक्षेऽपि पूर्वोत्तरपक्षौ[२] तदभाव-परिहारग्रन्थौ[३] योजनीयौ यत् एवं सर्वविभागानर्थनिदानमतस्तन्निवृत्तये तृतीयाध्यायारम्भ उपपन्न इत्यभिप्रेत्योपसंहरति—**तस्मादिति**। भवत्वेवं तथापि द्वितीयाध्यायोक्तयुक्तिभिरेव

---

१ अध्यासलक्षणम्—"स्मृतिरूपपरत्रपूर्वदृष्टावभासः'' (ब्र.सू., अध्यासभाष्यम्)

२ "यवोर्णावाक्षे'' इति हस्तलिखितपुस्तकपाठः।

३ स्वभावपरिहारग्रन्थाविति हस्तलिखितपुस्तकेऽस्ति। (जी.ओ.एम.एल. मद्रास)

**द्वैतानर्थाभावः। तदपनोदश्च वाक्यादेव तत्पदपदार्थाभिज्ञस्य।**

---

द्वैतस्य मिथ्यात्वावधारणादात्मनस्तदधिष्ठानस्य सत्यतयाऽधिगतत्वात्तत एव द्वैतानर्थस्य निवृत्त्युपपत्तेः। किं व्याख्यानेनेति तत्राह—**तदपनोदश्चेति**। युक्तीनां प्रमाणानुग्राहकतया स्वातन्त्र्येणानिश्चयकत्वाद्वाक्यादेव सम्यग्ज्ञानद्वारेण तदपनोद इति भावः। तर्ह्ययमेवाध्याय आरभ्यतां किमतीतेन द्वितीयाध्यायेनेति। अत आह—**तत्पदेति**। यस्मिन् वाक्ये यानि पदानि ये च पदार्थास्तान् प्रसिद्धलक्षणागुणवृत्तिभिश्चतुर्विधान्वयव्यतिरेकाभ्यां[1]

---

१ चतुर्विधान्वयव्यतिरेकाभ्याम्—

क) अन्वयसहचारः, तथाहि—तत्सत्त्वे तत्सत्त्वम्। कार्यसत्त्वे कारणस्यापि सत्त्वमिति भावः। धूमसत्त्वे वह्निसत्त्वम्, यथा – महानसादौ।

ख) अन्वयव्यभिचारः। तथाहि–यत्सत्त्वे यदभावः। कारणसत्त्वे कार्याभावः = वह्निसत्त्वे धूमाभावः। कादम्वर्यादौ सत्त्वेऽपि मङ्गले ग्रन्थसमाप्तिः ग्रन्थकारैर्न जाता अनन्तरं वाणभट्टपुत्रेण तत्समाप्तिः कृता। अतः प्रणेतृपुरुषकृतमङ्गलसत्त्वेऽपि समाप्त्यभावसत्त्वादन्वयव्यभिचारः।

ग) व्यतिरेकसहचारः, तथाहि–तदभावे तदभावः
कारणाभावे कार्याभावः वह्न्यभावे धूमाभावः। यथा – जलह्रदः।

घ) व्यतिरेकव्यभिचारः, तथाहि – यदभावे यत्सत्त्वम्। कारणाभावे कार्यसत्त्वम् = वह्न्यभावे धूमसत्त्वम् एवं न दृश्यते, यत्र दृश्यते तत्र व्यभिचारः। मङ्गलाचरणरूप कारणाभावेऽपि शिशुपालवधादौ वौद्धानां ग्रन्थे च समाप्तिरूपकार्यसत्त्वेन व्यतिरेकव्यभिचारः।

प्रकृतस्थले अन्वयव्यतिरेकशब्दाभ्यामनुवृत्तिर्व्यावृत्तिः गृह्येत इति केचित्। तथाहि—

ग्राहकः— ग्रहणम् ग्राह्यश्चेतिरूपेणाऽहमिति अन्वयव्यपदेश एतेभ्योऽतिरिक्तः साक्षी एवाहमिति व्यतिरेकः। वस्तुतस्तु अन्वयव्यतिरेकयोश्चातुर्विध्यम् यथा मधुसुदनसरस्वतीपादैरालोचितं तदेवात्र युक्तमिति भाति। तथाहि— "दृग्दृश्यान्वयव्यतिरेकः, साक्षिसाक्ष्यान्वयव्यतिरेकः, आगमापायितदवध्यन्वयव्यतिरेकः, दुःखिपरमप्रेमास्पदान्वयव्यतिरेक इति समन्वयाध्यायाविरोधाध्यायसाधनाध्यायफलाध्यायाः। अनुवृत्तव्यावृत्तान्वयव्यतिरेकः पञ्चमः।" सिद्धान्त विन्दौ अष्टमश्लोकव्याख्यायां

पृ. ३३८,म.अ.के.,वाराणसी

अत्र पुनः ब्रह्मानन्दपादाः—

दृशि दृश्यानां तादात्म्यमन्वयः। तस्य च निरूपणासम्भवात् दृशि दृश्यानि कल्पितानीति दृशि दृश्यानामन्वयेनैव व्यतिरेकस्सिध्यतीत्यर्थः। "स्वप्रकाशदृशस्तादात्म्येन सिद्धं जडं यदि सत्यं स्यात्, तदा जडत्वादिना स्वप्रकाशादत्यन्तविलक्षणं न स्यादि"

**अतो वाक्यव्याख्यानायाध्याय आरभ्यते। तत्र यथोक्तेन प्रकारेण तत्त्वमस्यादिवाक्योपनिविष्टपदपदार्थयोः कृतान्वयव्यतिरेकः[१]–**

**यदा ना तत्त्वमस्यादेर्ब्रह्मास्मीत्यवगच्छति।**
**प्रध्वस्ताहंममो नैति तदा गीर्मनसोः सृतिम्।।१।।**

---

चाभिजानत एव भवति। अतस्तत्प्रतिपादको द्वितीयाध्यायोऽध्यायस्य हेतुः अतो हेतोरनन्तरं हेतुमतोऽस्यारम्भ उपपन्न इति भावः। यद्वाक्यादेव चेत्तदपनोदः वाक्यमेवोच्यताम्। किं तत्र पदपदार्थनिरुपणेन वक्ष्यमाणेनेति। अत आह—**तत्पदेति।** एवं प्रयोजनत्वादगतार्थत्वाच्चाध्यायारम्भमुपपादितुमुपसंहरति—**अत इति।** चिकीर्षितवाक्यव्याख्यानप्रदर्शनपरमुत्तरश्लोकमधिकारिविशेषाकाङ्क्षां पूरयन्नवतारयति—**तत्रेति।**।१।।

---

ति तर्को बोध्यः। एवमग्रेऽपि "निर्विकारसाक्षितादात्म्येन सिद्धं जडं यदि सत्यं स्यात्, तदा विकारवत् न स्यात्"। "एवमागमापायशून्यात्मतादात्म्येन सिद्धं दृश्यं यदि सत्यं स्यात्, तदा आगमापायित्वरूपकादाचित्कत्ववन्न स्यात्, परमप्रेमास्पदात्मतादात्म्येन प्रतीयमानं यदि सत्यं स्यात् तदा दुःखसाधनं न स्यात् "सद्वस्तुतादात्म्येन प्रतीयमानं पटादिकं यदि सत्यं स्यात् तदा मिथोव्यावृत्तं मिथ्याभूतं न स्यादि" ति बोध्यम्। एवं साक्षिणो निर्विकारत्वात् साक्ष्याणां च विकारित्वात् साक्षिणि साक्ष्यस्यान्वयेन व्यतिरेकः सिद्ध्यतीत्यर्थः। एवमागमापायितया उत्पत्तिविनाशवत्त्वरूपया कादाचित्कत्वेन मिथ्यात्वात् सर्वकादाचित्कानामधिष्ठानमात्मा। स हि तेषामवधिः, आगमापायशून्यत्वात्। यथा वृष्टिमतां देशानां वृष्टिशून्या गङ्गाऽवधिरुच्यते, तथा च तेषां तत्र तादात्म्येनानुपपन्नेन व्यतिरेकः। एवं दुःखित्वेनोपलभ्यमानस्याहङ्कारादेः परमप्रेमास्पदात्मभिन्नत्वात् तयोस्तादात्म्यरूपान्वयेनानुपपद्यमाने नात्मन्यहङ्कारादि कल्पितम्। एवं सर्वेषु दृश्येषु मिथो व्यावृत्तेषु भिन्नेषु सद्रूपेणानुवृत्त आत्मा, तस्मात्तत्र तेषामन्वयेन तादात्म्यरूपेण व्यतिरेकस्सिध्यति। तत् येषु व्यावृत्तेषु तादात्म्येनान्वितं तत्र तानि कल्पितानि। यथा रज्जौ मालासर्पादि यथा वा जातौ व्यक्तय इति भावः।

पदपदार्थयोः कृतान्वयव्यतिरेकः— "पदार्थस्यान्वयव्यतिरेकौ नाम—आत्मपदार्थो द्रष्टा साक्षी न कदापि दृश्यः साक्ष्यो वा भवति तस्यालुप्तप्रकाशसन्मात्रतया स्वतःसिद्धत्वात्। अतोऽनन्याश्रयत्वान्न कदापि विशेषणमात्मा। तथा यादृशं साक्ष्यं चाहंकारादिविषयान्तं तदन्याधीनप्रकाशसत्ताकतयान्याश्रयं सत्सदा विशेषणभावं न व्यभिचरति। तस्मादनागमापायिदृगात्मरूपं सत्यं शुक्त्यादिवत्। तद्विपरीतमसत्यं रजतादिवदित्यनृतजडपरिच्छिन्नपराधीनपरागर्थव्यावृत्तः सत्यज्ञानानन्तप्रत्यगानन्दरूप आत्मेति विवेचनम्। पदस्यान्वय-

**यदैव तदर्थं त्वमर्थेऽवैति तदैवावाक्यार्थातां प्रतिपद्यते[1] गीर्मनसोः सृतिं न प्रतिपद्यत इति। कुत एतदध्यवसीयते? यस्मात्–**

**तत्पदं प्रकृतार्थं स्यात्त्वंपदं प्रत्यगात्मनि।**
**नीलोत्पलवदेताभ्यां दुःख्यनात्मत्ववारणे।।२।।**

**एवं कृतान्वयव्यतिरेको वाक्यादेवावाक्यार्थं प्रतिपद्यत इत्युक्तमतद्व्याख्यानाय सूत्रोपन्यासः–**

**सामानाधिकरण्यं च विशेषणविशेष्यता।[2]**
**लक्ष्यलक्षणसंबन्धः पदार्थप्रत्यगात्मनाम्।। ३ ।।**

---

उक्तमर्थं कीर्तयंस्तद्धेतुत्वेनोत्तरं श्लोकमवतारयति—**यदैवेति**। यस्मिन्नेव क्षणे तदर्थं तत्पदस्यार्थमद्वितीयानन्दं ब्रह्मत्वं पदस्यार्थे बुद्ध्यादिसाक्षिणि परिशोधिते अवैति एकत्वेन प्रतिपाद्यत इति यावत्। तदैव तस्मिन्नेव क्षणे देशकालसाधनान्तरनिरपेक्ष-वाक्यार्थतां भेदसंसर्गवाक्यार्थविलक्षणाखण्डैकरसतां प्रतिपाद्य सर्वव्यवहारातीतो भवतीत्यत्र को हेतुरित्यर्थः। तत्त्वमसिवाक्ये तत्पदं विधित्सितप्रकृताद्वितीयब्रह्मपरत्वं पदं चोद्दिश्यमाने प्रत्यगात्मनि वर्तते। ततश्चैताभ्यां पदाभ्यामन्योन्यनियम्यनियामकावस्थिताभ्यां विधित्सित-ब्रह्मभावादेव प्रत्यगात्मनि दुःखित्वात्मोपाधित्वाच्च ब्रह्मणो नात्मव्यावर्त्यते। यथा नीलमुत्पलमित्युक्ते उत्पलस्यानीलत्वं नीलस्य चानुत्पलत्वं प्रतिपद्यते। तत्र देशकाल-साधनान्तराद्यपेक्षा तथेहापीत्याह—**तत्पदमिति**।।२।।

लोके गामानय दण्डेनेति भिन्नविभक्तिनिर्दिष्टानां (अन्वयलक्षण) संसर्गात्मकश्च वाक्यार्थो द्विविध एव दृश्यते। न तदतिरिक्तोऽखण्डैकरसतालक्षणस्तत्कथं तदभिप्रायेण

---

व्यतिरेकौ नाम— 'आत्मा' 'चैतन्यं' 'प्रज्ञानं' 'ब्रह्म' 'सत्' इत्यादिपदानि कर्तेत्याद्युपपद-विधुराणि केवलस्यैवात्मनः समर्पकाणि न विशेषणतद्विशिष्टविषयाण्यसामर्थ्यात्। 'कर्ता' 'भोक्ता' 'वक्ता' 'गन्ता' 'कृशः' 'स्थूलः' इत्यादीनि तु न केवलपूर्णात्मविषयाणि अन्याधीनक्रियाद्युपरागदशायामेव प्रयुज्यमानत्वादिति विवेचनम्।।'' (उपदेशसाहस्री, रामतीर्थ टीका, १८.९६)

१ अवाक्यार्थतां प्रतिपद्यते— 'अवाक्यार्थनामप्रमेयध्रुवसच्चिद्व्यक्तिमात्रतां प्रतिपद्यते अनुभवति'। (सारार्थः)

२ ''इयं प्रक्रिया। प्रथमं समानविभक्तिपदयोः सामानाधिकरण्येनान्वयः। ततस्तदर्थयो-र्विशिष्टभेदज्ञानम्। ततो विरोधप्रतीतिः। ततो लक्षणया शुद्धयोरुपस्थितिः। ततस्तयो-रैक्यव्यक्तिमात्रनिर्विकल्पकम्। ततोऽज्ञाननिवृत्तिः स्वरूपप्रतिपत्तिश्चेति भावः।

**अस्मिन् सूत्र उपन्यस्ते कश्चिच्चोदयति योऽयं वाक्यार्थप्रतिपत्तौ पूर्वाध्यायेनान्वयव्यतिरेकलक्षणो न्यायः सर्वकर्मसंन्यासपूर्वकोऽभिहितः किमयं विधिपरिप्रापितः किं वा स्वरसत एवात्र पुमान्प्रवर्तत इति। किंचातः। शृणु। यद्यात्मवस्तुसाक्षात्करणाय विधिप्रापिताऽयं न्यायः तदाऽवश्यमात्मवस्तुसाक्षात्करणाय**

---

वाक्यार्थतां प्रतिपद्यत इत्युच्यते। इत्याशङ्क्य प्रतिपादयितुं प्रतिपत्तिसौकर्याय प्रथमं तावदुत्तरश्लोकस्सूत्रस्थानीय उपन्यस्यत इत्याह—**एवमिति। सामानाधिकरण्यं चेति।** तत्त्वमस्यादिमहावाक्यस्थपदधर्मस्सामानाधिकरण्यं च।[१] सति च तस्मिन्वाच्यपदार्थयोः परस्परं विशेषणविशेष्यता सत्यां च तस्यां विरोधस्फूर्तौ वाच्यार्थयोर्वाच्यतात्पर्यविषयस्य च प्रत्यगात्मनो लक्ष्यलक्षणसम्बन्धः एवं यथाक्रमेण पदतदर्थप्रत्यगात्मनां सामानाधिकरण्यं विशेष्यविशेषणता लक्ष्यलक्षणसम्बन्धश्च भवतीत्यर्थः।।३।।

नन्वज्ञाननिवृत्तेर्दृष्टफलत्वात् तत्साधनस्य ज्ञानस्याविधेयत्वात् ज्ञानं प्रति च श्रवणादेरन्वयव्यतिरेकसिद्धसाधनत्वात् ज्ञानार्थितामात्रेण यस्य कस्यचिद्विधिं विनापि प्रकृत्युपपत्तेश्शास्त्रीयस्य विशिष्टाधिकारिणोऽभावादधिकारिणः प्रमितिजनको वेद इति च न्यायात्तत्त्वमस्यादिवाक्यस्य न प्रमितिजनकत्वम्। अतस्तद्व्याख्यानाय सूत्रोपन्यासोऽपि व्यर्थ इत्याशयवान् कश्चित् प्रत्यवतिष्ठत इत्याह—**अस्मिन्निति।** उक्तपूर्वपक्षनिरासाय श्लोकमवतारयति—**विधिपरिप्रापित इति।** "शान्तो दान्त[२] उपरतस्तितिक्षुस्समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येदि"त्यादिवाक्ये ज्ञानस्याविधेयत्वात् यत्पश्येत्तच्छान्त्यादि-

---

१ प्रथमं भवतीति ज्ञानोत्तम मिश्रः।

२ उपलक्षणेनात्र शमादिषट्साधनानिविवृणोति। शान्तोदान्त इत्यादिशब्दैः यथाक्रमम् शम-दम-उपरति-तितिक्षा-समाधान-श्रद्धा-मुमुक्षुत्वानि इति ज्ञेयम्। शान्तः = शमयुक्तः शमः — श्रवणादिव्यतिरिक्तपदार्थेभ्यः मनसो निग्रहः।
दान्तः = दमसम्पन्नः दमः—बाह्येन्द्रियाणां तद्व्यतिरिक्तविषयेभ्यो निवर्तनम्।
उपरतः = उपरतियुक्तः, उपरति — निवर्तितानामिन्द्रियाणां तद्व्यतिरिक्तविषयेभ्य उपरमणम्। अथवा विहितानां कर्मणां विधिना परित्यागः, संन्यास इत्यर्थः।
तितिक्षुः = तितिक्षासम्पन्नः, तितिक्षा—शीतोष्णादिद्वन्द्वसहिष्णुता, आदिशब्देन सुखदुःखे समभावः, मानापमानरहितत्वमितिभावः।
समाहितः (समाधानयुक्तः)—निगृहीतस्य मनसः श्रवणादौ तदनुगुणविषये च समाधिः।
श्रद्धा—गुरुवेदान्तवाक्येषु विश्वासः।
मुमुक्षुत्वम् — मोक्षेच्छा इति।

**व्यावृत्तशुभाशुभकर्मराशिरेकाग्रमना अन्वयव्यतिरेकाभ्यां यथोक्ता-भ्यामात्मदर्शनं करोति। अपरिसमाप्यात्मदर्शनं ततः प्रच्यवमान आरूढपतितो भवति। यदि पुनर्यदृच्छातः प्रवर्तते तदा न कश्चिद्दोष इति। विधिपरिप्रापित इति ब्रूमो यत आह—**

**शमादिसाधनः पश्येदात्मन्यात्मानमञ्जसा।**
**अन्वयव्यतिरेकाभ्यां त्यक्त्वा युष्मदशेषतः।।४।।**
**युष्मदर्थे परित्यक्तं पूर्वोक्तैर्हेतुभिः श्रुतिः।**
**वीक्षापन्नस्य कोऽस्मीति तत्त्वमित्याह सौहृदात्।।५।।**

**अत्रापि चोदयन्ति सांख्याः। शरीरेन्द्रियमनोबुद्धिष्वनात्म-स्वात्मेति निस्सन्धिबन्धनं[1] मिथ्याज्ञानमज्ञानं तन्निबन्धनो ह्यात्मनोऽ-**

---

गुणयुक्तो भूत्वेति ज्ञानसाधने विधेः "पर्यवसानाच्छ्रोतव्यो मन्तव्य" इति वचनात्। श्रवणादेर्दृष्टोपायत्वेऽपि नियमादृष्टविशिष्टतया ज्ञानसाधनस्याभ्युपेयत्वादेवं विशिष्टाधि-कारिणस्सद्भावान्नोक्तदोष इत्यर्थः। केनोपायेनेत्यत आह—**अन्वयव्यतिरेकाभ्या-मिति**।।४।।

किमन्वयव्यतिरेकाभ्यामेव वाक्यनिरपेक्षाभ्यामात्मदर्शनमिति नैत्याह—**युष्मदिति**। युष्मद्यहं[2] कर्तुरिदमंशप्रमुखे देहेन्द्रियादिपर्यन्ते पूर्वाध्यायोक्तहेतुभिरनात्मतया परित्यक्ते सत्यप्यद्वितीयपरमानन्दस्वरूपस्यात्मनो नान्यज्ञानव्यवहितत्वात् कोऽहमित्यनिर्धारिता-साधारणात्मस्वभावतया पर्यालोचनासमाकुलस्याधिकारिणो मातृकल्पा श्रुतिस्त्वं तदेवासीदिति सौहृदादज्ञाननिरासनायाहेत्यर्थः।।५।।

आत्मानात्मविवेके सत्यप्यज्ञाननिवृत्तये वाक्यं प्रवर्तत इत्युक्तम्। अस्मिन्नर्थे सांख्याश्चोद्यमुद्भावयन्ति—**अत्रेति**। **निस्सन्धिबन्धनमिति**। अहमित्येकप्राति-

---

१ निःसंधिबन्धनं—"वाधकप्रत्ययरहितम्।" (सारार्थः)

तन्निबन्धनो ह्यात्मनोऽनेकार्थसंबन्धः—"अनर्थहेतुरपीदमेवाज्ञानमित्याह तन्निबन्धन इति। "विपर्ययादिष्यिते बन्धः (सां.का.४४) इत्युक्तेः। (सारार्थः)

श्लोकतात्पर्यः सारार्थदृष्ट्या—

"भेदविषकमेव ज्ञानं। तदविद्याकार्यं भ्रमात्मकमेवेत्यर्थः।...वचः वाक्यं तात्पर्यविषयी-भूतब्रह्मात्माकारवृत्तिज्ञानात्मना आत्माज्ञानं त्याजयेत् ऐक्योपलक्षितात्मज्ञानद्वारा नाशयेदित्यर्थः।"

२ युष्मदर्थे इति पाठ।

**नेकानर्थसंबन्धस्तस्य चान्वयव्यतिरेकाभ्यामेव निरस्तत्वान्निर्विषयं तत्त्वमस्यादिवाक्यं प्राप्तम्। तस्माद्वाक्यस्य चैव महिमा योऽयमात्मानात्मनोर्विभाग इति। तन्निराकरणायेदमुच्यते–**

**भेदसंविदिदं ज्ञानं भेदाभावश्च साक्षिणी।**
**कार्यमेतदविद्याया ज्ञात्मना त्याजयेद्वचः।।६।।**

**ज्ञात्मना त्याजयेद्वच इत्युपश्रुत्याह कश्चित्। मिथ्याज्ञानव्यतिरेकेणात्मानवबोधस्याभावात्किं वाक्येन निवर्त्यते। अज्ञानं हि नाम ज्ञानाभावस्तस्य चावस्तुस्वाभाव्यात्कुतः संसारकारणत्वं? न ह्यसतः सज्जन्मेष्यते 'कुतस्तु खलु सोम्यैवं स्यात्' इति, 'कथमसतः सज्जायेत' इति श्रुतेरिति। अत्रोच्यते–**

---

पदिकार्थत्वेन ज्ञानं तदेव मिथ्याविषयत्वं मिथ्याज्ञानं तदेव चाज्ञानं नान्यदनाद्यर्थहेतुतया प्रसिद्धगामीत्याह—**तन्निबन्धन इति**। अतो नित्यत्वपरिहारायान्वयव्यतिरेकाभ्यां सहितस्य मिथ्याज्ञाननिरासनेनात्मानात्मविवेककरणं वाक्यस्य कृत्यं नानाद्यज्ञाननिरसनमित्याह—**तस्मादिति**। इदानीमेतदुत्तरत्वेन श्लोकमवतारयति—**तन्निराकरणायेति**। यदिदमात्मानात्मविवेकविज्ञानं तद् **भेदसम्बिद्** भेदस्संवेद्यते प्रकाश्यते अनेनेति। स च भेदस्साक्षिणि वाक्यतात्पर्यविषये नास्ति तस्याद्वितीयत्वात्तस्मादिदं विवेकविज्ञानं वाक्यार्थावगतिसाधनमप्यनाद्यविद्याकार्यमभेदगोचरत्वादागन्तुकत्वाच्च तस्मिन्निवर्तिततत्वादविद्याया वाक्यमेव ज्ञानात्मना द्वितीयबोधाकारवृत्तिद्वारेण ज्ञानं तावन्मात्रतया वा एतत्कार्यमज्ञानं[१] त्याजयेन्निवर्तयतीत्येतदाह—**भेदसम्बिदिति**।।६।।

अनाद्यग्रहव्यतिरेकेण[२] भावरूपाविद्या न विद्यत इति चोद्यान्तरमुत्थाप्य तदुत्तरत्वेन श्लोकमवतारयति—**ज्ञानात्मनेति**।[३] अनर्थहेतुतया निवर्तनीयत्वमप्यज्ञानस्य न सिद्धमित्याह—**तस्य चेति। अज्ञात एवेति**। अयमर्थः—बुद्धिजन्मतः प्राक् सुषुप्त्यवस्थायां सर्वोऽयमज्ञातः ज्ञानप्रागभावातिरिक्तेन भावरूपेणाज्ञानेनावृतः न

---

१ सकार्यमेतदज्ञानमिति ज्ञानोत्तममिश्रः।

२ ग्रहः = ज्ञानम् तद् विरोधि अज्ञानमिति भावः।

३ ज्ञात्मनेति मुद्रितपुस्तके दृश्यते। पूर्वश्लोकानुरोधेन "ज्ञात्मना" इति, एतदेव साधुः इति भाति।

## अज्ञात एव सर्वोऽर्थः प्राग्यतो बुद्धिजन्मनः।

किञ्चिदवेदिषमित्युत्थितस्य परामर्शदर्शनादननुभूते च तदयोगाद्धर्मिप्रतियोगिज्ञानं विना सुषुप्तौ ज्ञानाभावस्यानुभवितुमशक्यत्वात्, सत्सद्भावे च सुषुप्तिव्याघाततया चानुभूयमानस्य षष्ठप्रमाणगोचरत्वानुपपत्तेरुत्थितस्य च सुषुप्तिदशायां ज्ञानाभावानुमानस्य लिङ्गाभावादसिद्धेः स्मरणाभावस्यानैकान्तिकत्वेनालिङ्गत्वात्तदात्मतदज्ञानसामर्थ्यस्य च ज्ञानाभावेन समानयोगक्षेमतया प्रत्येतुमशक्यत्वेन ज्ञानाभावानुमापकत्वायोगात् ज्ञानाभावेनैव तदनुमाने परस्पराश्रयप्रसङ्गात् प्रत्यक्षेणैव भावरूपाज्ञानसिद्धेरनुमानेनापि—विवादाध्यासित आत्मा एवं तन्निष्ठाग्रहणातिरिक्तानाद्यज्ञानाश्रयस्संसारित्वात् सम्प्रतिपन्नात्मान्तरवदिति भावरूपाज्ञानसिद्धेः। अनुमानेनापि विवादाध्यासितस्य अहं ममेदमित्यात्मन्यहङ्कराध्यासस्य प्रतीतत्वे सति बाध्यत्वादनिर्वचनीयस्य सदसदुपादानानुपपत्त्याऽनाद्यनिर्वचनीयोपादानतया अवश्यकल्पनीयत्वात्।

"नासदासीन्नोसदासीत्तम आसीन्मायां तु प्रकृतिं विद्यान्नीहारेण प्रावृता" अज्ञानेनावृत्तं ज्ञानमासीदिदं तमोभूतमित्याद्यागमतश्च तत्प्रसिद्धेः तर्हि सर्वार्थविषयत्वाङ्गीकारादज्ञानस्यात्मैकविषयत्वं पूर्वोक्तमनवगतमित्यत आह—**एकेनेति**। अयं हि नामरूपकर्मात्मकः सर्वप्रपञ्चलक्षणोऽर्थः प्रलयश्च सुषुप्तावज्ञाने सन्मात्रात्मावशेषं विलीयते। अतश्च प्रबोधसमये पुनरुद्भवतीति हि वेदान्तराद्धान्तः, स्वापप्रबोधयोः प्रलयप्रभवश्रवणात्। "यदा सुषुप्तस्स्वप्नवन्न कञ्चन पश्यति"। "अथास्मिन्प्राण एवैकधा भवति" "अथ तदैवं वाक् सर्वैर्नामभिस्सहाप्येतीत्यारभ्य स यदा प्रबुध्यते" यथाग्नेर्ज्वलनस्सर्वादिशो विस्फुलिङ्गाविप्रतिष्ठेरन्नेवमेवैतस्मादात्मनस्सर्वे प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोका" इति।

युक्तेश्च कल्पितस्य द्वैतस्य शुक्तिरजतादेरिव प्रतिभासमात्रशरीरस्य विषयः ततोऽन्यस्य तत्कल्पितस्य कल्पितत्त्वानुपपत्तेरस्त्यर्थस्यैव[१] च परमार्थस्य प्रमाणगम्यत्वात् प्रमाणस्य चानधिगतार्थगन्तृत्वात् सन्नेवाज्ञात[२] इति।

यद्वा जाग्रद्दशायामपि सर्वोऽर्थो घटपटादिलक्षणस्स्वबुद्धिजन्मनः प्रागज्ञातः पूर्वोक्तयुक्तिभिरेकेनैव सता संश्च तयैव च रीत्या सन्नेवाज्ञानत इति।

अथवा संसारदशायां नामरूपादिलक्षणस्सर्वोऽर्थः प्रागात्मविद्योदयात्तत्त्वतोऽपरिज्ञानात्। अतएव तथैकेनैव स्वानुगतेन सता[३]सतश्च प्रत्येकं नियमेन तदनुविद्ध-

१ अधिष्ठानस्यैवेति भावः।
"अधिष्ठानावशेषो हि नाशः कल्पितवस्तुनः" इति स्मरणात्।
२ सद् ब्रह्मैवाज्ञात इति भावः। ब्रह्मैवाज्ञानस्याप्यधिष्ठानत्वात्।
३ बोध्यते इति शेषः।

**एकेनैव सता संश्च सन्नज्ञातो भवेत्ततः।।७।।**

**सन्नज्ञातो भवेत्तत इत्युक्तमधस्तनेन श्लोकेन। कोऽसौ सन्नज्ञात इत्यपेक्षायां तत्स्वरूपप्रतिपादनायाह–**

**प्रमित्सायां य आभाति स्वयं मातृप्रमाणयोः।**

**स्वमहिम्ना च यस्सिद्धः सोऽज्ञातार्थोऽवसीयताम्[1]।।८।।**

**अत्र केचिदाहुः– यत्किंचिदिह वाक्यं लौकिकं वैदिकं वा तत्सर्वं संसर्गात्मकमेव[2] वाक्यार्थं गमयति। अतस्तत्त्वमस्यादिवाक्येभ्यः संसर्गात्मकमहं ब्रह्मेति विज्ञाय, तावन्निदिध्यासीत यावदवाक्यार्थात्मकः प्रत्यगात्मविषयोऽवबोधोऽहं ब्रह्मेति समभिजायते तस्मादेव विज्ञानात्कैवल्यमाप्नोतीति तन्निराकरणायेदमुच्यते–**

---

बुद्धिबोध्यत्वात्। तथा च तदधिष्ठानभूतः सदेव **अज्ञात** इति।।७।।

भवत्वेवम्भूतमज्ञानं तस्य कथं प्रतीतिरित्यत आह—**प्रमित्सायामिति**। पदार्थानां प्रमित्सादशायां प्रमातरि प्रमाणे च स्फुरणात्मना स्वयमेव योऽवभासते स्फुरति प्रमाता स्फुरति प्रमाणमिति तदभावे च तदभावसाक्षितया सुषुप्त्यादौ स्वभावादेव यः स्फुरति सोऽयमज्ञातोर्थस्तेन स्वतस्सिद्धसाक्षिचैतन्यसिद्धमज्ञानं प्रमाणनिवर्त्यस्य प्रमाणसिद्धतानुपपत्तेरित्यर्थः।।८।।

तत्त्वमस्यादिवाक्यादवाक्यार्थतां प्रतिपद्यत इति। यदुक्तं उपायान्तरादवाक्यार्थप्रतिपत्तेरित्याक्षिपति—**अत्रेति**। कुतस्तर्ह्यवाक्यार्थप्रतिपत्तिरित्यत आह—**अत इति**। वाक्यजं विज्ञानं मोक्षसाधनमपि न भवतीत्याह—**तस्मादिति। सामानाधिकरण्यादे-**रित्ययमर्थः। यद्यपि नीलं सुगन्धिमहदुत्पलमित्यादौ पदानां सामानाधिकरण्यं पदार्थानां चान्योन्यविशेषणविशेष्यभावस्संसर्गात्मवाक्यार्थपर्यवसायी दृष्टस्तथापि घटाकाशो महाकाश इत्यादौ पदसामानाधिकरण्यात् पदार्थानां विशेषणविशेष्यभावः। पदार्थवाक्यार्थयोर्लक्ष्यलक्षणभावेनाखण्डार्थपर्यवसायी दृष्टः। तथाहि घटविशिष्टाकाशतदवच्छिन्नाकाशयोः परस्परसंसर्गे विरोधादविरोधाय घटाकाशे परिच्छिन्नत्वं महाकाशे

---

१ सोऽज्ञातार्थः— "स एवात्मा प्रमाणजन्मज्ञाननिवर्त्यावरणाज्ञानविषयत्वादज्ञातार्थः" (सारार्थः)

२ संसर्गात्मकमेव— "सामानाधिकरण्यस्य प्रसक्तत्वात्सर्वं संसर्गात्मकमेवेत्युच्यते। 'एष त आत्मा' इत्यादौ तु विशिष्टो वाक्यार्थः"। (विद्यासुरभिः)

**सामानाधिकरण्यादेर्घटेतरखयोरिव ।**
**व्यावृत्तेः स्यादवाक्यार्थः साक्षान्नस्तत्त्वमर्थयोः।।९।।**

**कुतोऽवाक्यार्थोऽवसीयत इति चेत्तत्प्रतीपत्त्यर्थं विशेषण-विशेष्यः सामर्थ्योक्तिः[१]–**

**निर्दुःखित्वं त्वमर्थस्य तदर्थेन विशेषणात्।**
**प्रत्यक्ता च तदर्थस्य त्वंपदेनास्य संनिधेः।।१०।।**

**उक्तं सामानाधिकरण्यं विशेषणविशेष्यभावश्च संक्षेपतः।**

---

च महत्त्वधर्मं व्यावर्त्य लक्षणयाकाशस्वरूपमात्रपर्यवसायित्वं तत्र पदानां दृष्टम्। एवं तत्त्वमस्यादिवाक्यगतपदसामानाधिकरण्यात् तत्त्वमर्थयोर्विशेषणविशेष्यभावात् संसर्गप्राप्तौ विरोधात् त्वमर्थगतदुःखित्वस्य तदर्थगतपारोक्ष्यस्य च व्यावृत्तेरखण्डैकरसस्य वस्तुनो वाक्यप्रतिपिपादयिषितस्य पदार्थाभ्यां लक्षणया वाक्यादेवावाक्यार्थप्रतिपत्तेर्न तत्प्रतिपत्तौ निदिध्यासनापेक्षेति एकपदवाक्यस्याभावात् बहूनां पदानामेकार्थत्वपौनरुक्त्य-प्रसङ्गात्।।९।।

अपुनरुक्तार्थानां कथमखण्डार्थपर्यवसायित्वमित्याक्षिपति—**कुत इति**। अन्य-व्यावृत्तिमुखेन एकार्थपर्यवसायिनां पदानां लक्ष्यार्थभेदेऽपि व्यवच्छेद्य भेदादपुनरुक्तार्थत्व-सम्भवात् सम्भवत्येव वाक्यार्थप्रतिपत्तिरिति दर्शयति उत्तरश्लोकेनेत्याह—**तत्प्रति-पत्त्यर्थमिति**। त्वमर्थस्य चेतनस्य प्रसिद्धत्वादुद्दिश्यमानस्य विधीयमानतत्पदार्थेन विशेषणात्तद्विरुद्धं दुःखित्वं निरस्यते। तद्वत् परोक्षत्वेन प्रतीयमानस्य तत्पदार्थस्य विशेष्यवाचिना त्वं पदार्थेन संनिधेः पारोक्षव्यावृत्त्या प्रसक्ता भवति तत्र कुतः पौनरुक्त्यं कुतश्चाखण्डार्थप्रतिपत्तिरित्यर्थः।।१०।।

उत्तरश्लोकगतार्थपरत्वात्कथमनेनावतारयति—**उक्तमिति**। उत्तरत्रापि सामाना-धिकरण्या[२]दौ विशेष्या व्याख्यातव्या इत्यभिप्रेत्य **सङ्क्षेपत** इति व्याख्यातम्। गिरिशृङ्गवन्निश्चलतया तिष्ठतीति कूटस्थः[३] कूटस्थश्चासौ बोधश्चेति **कूटस्थबोधः**।

---

१ विशेषणविशेष्ययोः सामर्थ्योक्तिः— "विशेष्यविशेषणवाचकपदयोरखण्डार्थप्रति-पादनसामर्थ्यं यथा तथोच्यत इति भावः (सारार्थः)।

२ आदि शब्देन विशेषणविशेष्ययोर्ग्रहणम्।

३ कूटस्थ निरूपणे पञ्चदशीकारोऽपि—
"अधिष्ठानतया देहद्वयावच्छिन्नचेतनः।
कूटवन्निर्विकारेण स्थितः कूटस्थ उच्यते।।" प.द., ६.२
तत्रैव श्रीरामकृष्णः—

**अथ लक्ष्यलक्षणव्याख्यानायाह–**

**कूटस्थबोधप्रत्यक्त्वमनिमित्तं सदात्मनः।**
**बोद्धृताहंतयोर्हेतुस्ताभ्यां तेनोपलक्ष्यते।।११।।**

**बुद्धेः कूटस्थबोधप्रत्यक्त्वनिमित्ते बोद्धृताप्रत्यक्त्वे ये त्वसाधारणे तयोर्विशेषवचनम्–**

**बोद्धृता कर्तृता बुद्धेः कर्मता स्यादहंतया।**
**तयोरैक्यं यथा बुद्धौ पूर्वयोरेवमात्मनि।।१२।।**

---

स चासौ प्रत्यक्चेति कूटस्थबोधप्रत्यक् तस्य भावस्तत्त्वम्, तदिदं कूटस्थबोधत्वं प्रत्यक्त्वं चात्मनो लक्षस्य[1]निमित्तं निर्हेतुकं स्वाभाविकमिति यावत्। अत एतदात्मनस्सदास्ति। यद्वा सदात्मनः परमार्थस्य भवत्वेवमेतावता प्रकृतलक्षणव्याख्याने किमायातमित्यत आह—**बोद्धृतेति**। प्रकृतायाबुद्धेस्स्वभावतो जड़त्वादेव बोधशून्यायाः कूटस्थबोधोबोद्धृता हेतुर्बह्विरिवायसो दग्धृतायास्तथात्मनः प्रत्यक्षत्वं पराचीनाया बुद्धेरहन्तायाः पराग्व्यावृत्तरूपतया हेतुस्तेन हेतुहेतुमल्लक्षणसम्बन्धेन बुद्धिगत-बोद्धृताहन्ताभ्यामात्मोपलक्ष्यते। उपलक्षकत्वं च पुंसोऽहङ्कारेण साक्षिणो लक्षणादशाया-महङ्कारस्य साक्षिबुद्धावनन्वयात्तदेवं बुद्धिविशिष्टस्य त्वं पदवाच्यस्य लक्षकत्वं केवलस्य लक्ष्यत्वमुपपन्नमित्यर्थः।।११।।

यदि बुद्धेर्बोद्धृता प्रत्यक्त्वे प्रत्यक्चैतन्ये गतबोद्धृता प्रत्यक्त्वनिमित्ते तर्हि तयोर्विशेषो वक्तव्यः। अन्यथा हेतुहेतुमद्भावायोगादित्याशङ्क्याह—**बुद्धेरिति**। बुद्धेर्बोद्धृतानाम विषयाकारविज्ञानपरिणामाश्रयत्वं न तत्त्वात्मवत् कूटस्थरूपबोधरूपात्मता। तस्याहन्तया प्रत्यक्तया कर्मता स्यात्। आत्मन्यध्यस्तत्वेनात्मनावभास्यत्वमेव स्यात्। न त्वात्मन इवाशेषविषयव्यावृत्तनिरूपचरितप्रत्यक्त्वं कतिपयदेहेन्द्रियविषयापेक्षया तस्याः प्रत्यक्त्वात्तर्हि बोद्धृताप्रत्यक्तयोरत्यन्तं भेद एवात्मनीति नेत्याह—**तयोरिति**। बुद्धेरपि बोद्धृतैव प्रत्यक्ताप्रतियोगिनो बोध्याकारबाह्याकारयोर्भेदात् भिन्नबुद्ध्यपदिश्यते तद्वदात्मन्यपि कूटस्थबोधप्रत्यक्तयोर्न वास्तवो भेद इत्यर्थः।।१२।।

---

पञ्चीकृताऽपञ्चीकृतभूतकार्यत्वेन स्थूल-सूक्ष्मरूपस्य देहद्वयस्याविद्याकल्पितस्याधारतया वर्तमानत्वेन ताभ्यामवच्छिन्न आत्मा कूटस्थ इत्युच्यते। "कालव्यापी स कूटस्थ" इत्यमरः (३.१.७३)

१ "लक्ष्यम्" इति चन्द्रिकाकारः।

**यथा बुद्धौ पूर्वयोरेवमात्मनीत्यतिदेशेन बुद्धिसाधर्म्य-विधानान्नानात्वप्रसक्तौ तदपवादार्थमाह–**

**धर्मधर्मित्वभेदोऽस्याः सोऽपि नैवात्मनो यतः।**
**प्रत्यग्ज्योतिरतोऽभिन्नं भेदहेतोरसंभवात्।।१३।।**

**भेदहेत्वसंभवं दर्शयन्नाह–**

**न कस्यांचिदवस्थायां बोधप्रत्यक्त्वयोर्भिदा।**
**व्यभिचारोऽथवा दृष्टो यथाहंतद्विदोस्सदा।।१४।।**

**यस्मादज्ञानोपादानाया एव बुद्धेर्भेदो नात्मनस्तस्मादेतत्सिद्धम्–**

**कूटस्थबोधतोऽद्वैतं साक्षात्त्वं प्रत्यगात्मनः।**
**कूटस्थबोधाद्बोद्ध्री धीः स्वतो हीयं विनश्वरी।।१५।।**

**अथाधुना प्रकृतस्यैव परिणामिनः कूटस्थस्य च लक्षण-मुच्यते–**

---

यथा बुद्धेर्बोद्धृता प्रत्यक्त्वे एवं पूर्वयोर्बो[1]धप्रत्यक्त्वयोः परस्परमैक्यमित्यति-देशादात्मधर्मी ते च धर्मा इति भेदाशङ्कायां तन्निरासाय उत्तरश्लोकं इत्याह— **यथेति। सोऽपीति।** सिद्धान्तैकदेशिभिरभ्युपगतत्वेन सम्भावितोऽपीत्यर्थः[2]।।१३।।

**यथाहं तद्विदोरिति** वैधर्म्यदृष्टान्तः। अहङ्कारतत्साक्षिणोर्भास्यभासकभावेन यथा भेदो यथा वा सुप्तादौ व्यभिचारो न तथेत्यर्थः।।१४।।

प्रत्यगात्मनस्साक्षात्त्वमपरोक्षत्वमद्वैतशून्यत्वं कूटस्थबोधत्वेन द्वैतसम्बन्धायोग्यत्वात् बोद्धृत्वेऽपि बुद्धिवदात्मनो द्वैतसम्बन्धः किं न स्यादित्याशङ्क्य मैवं, तस्याः स्वतो बोद्धृत्वाभावादित्याह—**कूटस्थबोधादिति**। कुत एतदिति। तदाह—**स्वतो हीति।** अनित्यत्वान्न नित्यबोधात्मकत्वमित्यर्थः।।१५।।

एवं परिणामिनाऽहङ्कारेण कूटस्थ आत्मा लक्ष्यत इत्युक्तम्। तयोर्लक्षणजिज्ञासायां तदिदानीमुच्यत इत्याह—**अथेति।** घटं जानामि पटं जानाम्यहं सुख्यहं दुःखीति विशेषत्वेऽपि[3] य एवाहं दुःखी स एवाहमिदानीं सुखीति प्रत्यभिज्ञाय यदेकत्वेन

---

१ कूटस्थबोधेति भावः।
२ यतः अविद्यस्य आत्मनः सिद्धान्तैकदेशिभिरभ्युपगतत्वेन सम्भावितोऽपि स भेदो न सम्भवतीत्यभिप्रायः।
३ विशेषवत्तेऽपि इति ज्ञानोत्तममिश्रः।

**विशेषं कंचिदाश्रित्य यत्स्वरूपं प्रतीयते।**
**प्रत्यभिज्ञाप्रमाणेन परिणामी स देहवत्।।१६।।**
**सामान्याच्च विशेषाच्च स्वमहिम्नैव यो भवेत्।**
**व्युत्थायाप्यविकारी स्यात्कुम्भाकाशादिवत्तु सः।।१७।।**

**आत्मनो बुद्धेश्च बोधप्रत्यगात्मत्वमभिहितं तयोरसाधारण लक्षणाभिधानार्थमाह–**

**बुद्धेर्यत्प्रत्यगात्मत्वं तत्स्याद्देहाद्युपाश्रयात्।**
**आत्मनस्तु स्वरूपं तन्नभसः सुषिता[1] यथा।।१८।।**
**बोद्धृत्वं तद्वदेवास्याः प्रत्ययोत्पत्तिहेतुतः।**
**आत्मनस्तु स्वरूपं तत्तिष्ठन्तीव महीभृतः ।। १९ ।।**

**तयोः कूटस्थपरिणामिनोरात्मानवबोध एव संबन्धहेतुर्न पुनर्वास्तवः कश्चिदपि संबन्ध उपपद्यत इत्याह–**

---

प्रतीयते। बाल्ययौवनाद्यवस्थाभेदेऽपि तदनुगतदेहवत् स **परिणामीति**।।१६।।

यः पुनरशेषजडसामान्यविशेषसाक्षित्वात्तेभ्यस्स्वमहिम्ना स्वभावबलाद्व्युत्थायावस्थितः **कुम्भाकाशादिवत्** कुम्भाद्यवच्छिन्नतयाऽवभासमानोऽप्याकाशो यथा तेभ्यस्स्वभावबलाद्युत्थितस्तद्वत सोऽ**विकारी** कूटस्थ स्यादित्यर्थः ।।१७।।

एवं लक्ष्यलक्षणयोर्बुद्ध्यात्मनोर्लक्षणमभिहितमधुना तयोरसाधारणे ये रूपे उपदिष्टे बोधप्रत्यगात्मत्वे तयोर्विशेषतो लक्षणाभिधानायोत्तरश्लोक इत्याह—**आत्मन** इति। तत्र तावद्बुद्ध्यात्मनोः प्रत्यक्त्वे विशेषमाह—**बुद्धेरिति**। बुद्धेः प्रत्यक्त्वं देहाद्यपेक्षं "य आत्मा सर्वान्तरः" इति श्रुतेरात्मनः प्रत्यक्त्वं स्वाभाविकमाकाशस्य सुषिरत्ववदित्यर्थः।।१८।।

इदानीं तयोर्बोद्धृत्वे विशेषमाह—**बोद्धृत्वमिति**। बुन्द्रेर्बोद्धृत्वं बोधकर्तृत्वोपाधिकम्। आत्मनस्तु स्वभाव एवं नान्योपाधिकमित्यर्थः। अत्र दृष्टान्तः तिष्ठन्तीव महीभृत इति। जङ्गमेषु प्राप्तगतिनिवृत्त्यपेक्षया तिष्ठतेः प्रयोगो न तथा तिष्ठन्ति महीभृत इति किन्तु स्वभावसिद्धाचलत्वविवक्षया तद्वदित्यर्थः।।१९।।

एवं लक्ष्यलक्षणयोर्बुध्यात्मनोस्सम्बन्धोऽस्ति वा न वा न चेत् न विशेषत्वमात्मनः

---

१ सुषिता— "आवरणाभावात्मकता अवकाशस्वरूपतेति" (सारार्थः)

**सम्यक्संशयमिथ्यात्वैर्धीरेवेयं विभज्यते।**
**हानोपादानताऽमीषां मोहादध्यस्यते दृशौ ।। २० ।।**
**कुतः कूटस्थात्मसिद्धिरिति चेद्यतः–**
**न हानं हानमात्रेण नोदयोऽपीयता यतः।**
**तत्सिद्धिः स्यात्तु तद्धीने हानादानविधर्मके ।। २१ ।।**
**एवम्–**
**आगमापायिहेतुभ्यां धूत्वा सर्वाननात्मनः।**
**ततस्तत्त्वमसीत्येतद्धन्त्यस्मदि निजं तमः ।। २२ ।।**
**इत्यादि पुनः पुनरुच्यते ग्रन्थलाघवाद्बुद्धिलाघवं प्रयोजक-**

---

नास्ति चेन्न, लक्ष्यलक्षणभाव इति चेत्, मैवम्, आध्यासिकसम्बन्धाभ्युपगमे न दोषद्वयपरिहारादित्याह—**तयोरिति।** सम्यग्धीस्संशयधीर्मिथ्याधीरित्येवमादिभिर्धर्मैर्बुद्धिरेव विशेष्यते। एषां पुनर्हानोपादानस्सदसत्वं तत्साक्षिण्यात्मनि मोहादनाद्यज्ञानवशादारोप्यते। तेन वस्तुतः सविशेषत्वं नापि सम्बन्धाभावेनात्मनो लक्ष्यत्वाभाव इत्यर्थः।।२०।।

बुद्ध्युपाधिसम्बन्धमन्तरेणात्मनोऽपि बोद्धृत्वाद्यदर्शनात् कूटस्थत्वं न सिद्ध्यतीति शङ्कोत्तरत्वेनोत्तरश्लोकमवतारयति—**कुत इति।** तद्वृत्तीनां हानमभावो न तन्मात्रेण सिध्यति तदुदयस्तत्सद्भावोऽपि यतस्सद्भावरूपतामात्रेण न सिध्यति। यतस्ततस्तयोस्सिद्धिस्तद्धीने बुद्धि तद्वृत्तिविरहिते हानादान[1]धर्मशून्ये साक्षिणि तस्मिन्नध्यस्ततया तच्चैतन्याभासोदयात्तद्गतविकारमन्तरेण भवति। तेन कूटस्थत्वं न व्याहतिरित्यर्थः।।२१।।

ततो वाक्यमेवान्वयव्यतिरेकसहकृतमज्ञाननिवर्तकं न त्वन्वयव्यतिरेकावेवेत्युक्तमर्थमुपसंहरति—**एवमिति**।।२२।।

ननु 'यदा तु[2] तत्त्वमस्यादेः'[3]'र्ज्ञात्मना त्याजयेद्वच''[4] इत्यादिना पूर्वमप्यनेकधा एतदुक्तमित्यत आह—**इत्यादीति।** भवत्वेवमुत्तरग्रन्थेन किं क्रियत इत्यत आह—**तत्रेति।** यद्यपि तत्त्वंपदाभ्यां वाच्ययोरर्थयोविशिष्टता प्रतीयते तथापि नासौ विवक्षिता प्रतिपिपादयिषितार्थविरोधात्तत्प्रतिपादने पुरुषार्थाभावात् प्रमाणान्तरादपि तत्सिद्धेरित्युत्तर-

---

१ हानोपादानधर्मशून्य इत्यर्थः।

२ "यदा ना इति मुद्रितपुस्तके मूलः पाठः, "यदासौ" इति पाठान्तरम् (जी.ओ.एम.एल. मद्रास)

३ नैष्कर्म्यसिद्धिः (३-१)

४ नैष्कर्म्यसिद्धिः (३.६) ज्ञात्मना इति मूले चन्द्रिकायाञ्च पाठः।

**मिति। तत्र यद्यपि तत्त्वमस्यादिवाक्यादुपादित्सिताद्वितीयात्मार्थ-वत्पारोक्ष्यसद्वितीयार्थः प्रतीयते। तथापि तु नैवासावर्थः श्रुत्या तात्पर्येण प्रतिपिपादयिषितः प्रागप्येतस्य प्रतीतत्वादितीममर्थमाह–**

**तदित्येतत्पदं लोके बह्वर्थप्रतिपादकम्।**
**अपरित्यज्य पारोक्ष्यमभिधानोत्थमेव[1] तत्।।२३।।**
**त्वमित्यपि पदं तद्वत्साक्षान्मात्रार्थवाचि तु।**
**संसारितामसंत्यज्य सापि स्यादभिधानजा।।२४।।**

**विरुद्धोद्देशनत्वाच्च पारोक्ष्यदुःखित्वयोरविवक्षितत्वमित्याह–**

**उद्दिश्यमानं वाक्यस्थं नोद्देशनगुणान्वितम्।**
**आकाङ्क्षितपदार्थेन संसर्गं प्रतिपद्यते।।२५।।**

---

श्लोकाभ्यामुच्यत इत्यर्थः। **तदित्येतत्पदं** पारोक्ष्यमपरित्यज्यानुगतसामान्यादेरभावात् बहूनामर्थानां परोक्षतया प्रतिपत्त्युपाधौ प्रतिपादकम्, तस्मात् तत्पारोक्ष्यमभिधानोत्थमेव शब्दादापाततः प्रतीयते न वस्तुसंस्पर्शिनापि प्रतिपिपादयिषितम्।।२३।।

तथा तत्पदवत्त्वमित्यपि पदं स्वप्रवृत्तेः प्रागेव सिद्धां संसारितामसन्त्यज्य साक्षान्मात्रार्थवाच्यव्यवहितं तया नित्याऽपरोक्षे श्रोतरि बुद्धिमुत्पादयति। अतस्सापि संसार तदभिधानजा आपाततश्शब्दोत्थानवस्तुसंस्पर्शिनी नापि शब्दप्रतिपाद्या तत्प्रवृत्तेः प्रागेव सिद्धत्वात् तत्प्रतिपादने पुरुषार्थाभावात् प्रतिपिपादयिषितवाक्यार्थविरोधा-च्चेत्यर्थः।।२४।।

इतोऽपि पारोक्ष्यसंसारित्वयोरविवक्षितत्वमित्याह—**विरुद्धेति**। उद्देशनं प्रसिद्धरूपकथनं विरुद्धमुद्देशनमनयोरपि विरुद्धोद्देशनौ तयोर्भावस्तत्त्वं, तस्मादपि तद्गतयोर्विरुद्धरूपयोरविवक्षितत्वमुत्तरश्लोकेनोच्यत इत्यर्थः। तत्त्वमसि वाक्यगत-मुद्दिश्यमानं त्वं पदार्थात्मकं वस्तूद्देशनदशायां प्रतीयमानसंसारित्वगुणेनान्वितं विशिष्टमाकाङ्क्षितपदार्थेन विधित्सितेन तत्पदार्थेन सकलसंसारधर्मविरहितेन संसर्गमन्वयन्त्र प्रतिपद्यते। एवं तत्पदार्थोऽप्युद्दिश्यमानपरोक्षादिविरुद्धगुणान्वितो नित्यापरोक्षेण प्रत्यगात्मना त्वंपदार्थेनान्वयं न प्रतिपद्यते। तेनोभयत्रापि विरुद्धयोरविवक्षितत्वमिति श्लोकार्थः।।२५।।

---

१ अभिधानोत्थमेव— "अभिधानं शब्दः। शक्त्या तत्पदोपस्थाप्यमेव। एवकारेण तत्र तात्पर्यविषयताराहित्यमुक्तमिति "।। (सारार्थः)

**यत एतदेवम्, अतोऽनुपादित्सितयोरपि तत्त्वमर्थयोर्विशेषण-विशेष्यभावो भेदसंसर्गरहितवाक्यार्थलक्षणायैवेत्युपसंहारः-**

**तदो विशेषणार्थत्वं विशेष्यत्वं त्वमस्तथा।**
**लक्ष्यलक्षणसंबन्धस्तयोः स्यात्प्रत्यगात्मना।।२६।।**

**कथं पुनरविवक्षितविरुद्धनिरस्यमानस्य लक्षणार्थत्वम्?**

**लक्षणं सर्पवद्रज्ज्वाः प्रतीचः स्यादहं तथा।**
**तद्बाधेनैव वाक्यार्थं वेत्ति सोऽपि तदाश्रयात्।।२७।।**

**इयं चावाक्यार्थप्रतिपत्तिरन्वयव्यतिरेकाभिज्ञस्यैव। यस्मात्-**

**यावद्यावन्निरस्यायं देहादीन्प्रत्यगञ्चति।**

---

नीलमुत्पलमित्यादौ विशेषणविशेष्यभावस्य विशिष्टार्थपरत्वदृष्टेरिहापि तथाभ्यु-पगन्तव्यमित्याशङ्क्य प्रतिपिपादयिषितार्थविरोधान्मञ्चाःक्रोशन्तीत्यादौ लक्षणपरत्वस्यापि दर्शनात्। इहापि तथाऽभ्युपेयमित्याह—**यत एतदेवमिति**। भवतु तथा निर्विशेषणं किम्वा विशेष्यमिति तत्राह—**तद इति**। ततस्तत्पदार्थस्य विशेषणार्थत्वं तथात्वं पदार्थस्य विशेष्यत्वम्। त्वं पदार्थस्याहमिति सामान्यतः प्रसिद्धत्वाद्देहेन्द्रियादिविशेषेषु च विप्रतिपत्तेः। अद्वितीयस्यात्मनावगम एवं पुरुषार्थपर्यवसानात् जिज्ञासानिवृत्तेस्त्वं पदार्थस्तत्पदार्थो न विशिष्यते। अत्र च विरोधस्फूर्तौ पदार्थाभ्यामखण्डैकरसः प्रत्यगात्मा लभ्यत इत्यर्थः।।२६।।

गङ्गायां घोषः प्रतिवसतीत्यादौ गङ्गाशब्दस्य तीरलक्षकत्वे तद्वाच्यस्य जलप्रवाहस्य नाविवक्षितत्त्वं विशिष्टतीरावगति प्रयोजकत्वात्। नाविरुद्धता अविनाभावसम्बन्धात्। अतएव न लक्ष्यबुध्या निरस्यमानता। इहाहङ्कारस्य लक्षकत्वे त्रितयमपि नास्ति तत्कथमस्य लक्षणत्वमित्याक्षिपति—**कथमिति**। तत्रोत्तरं लक्षणामिति योऽयं सर्पस्सा रज्जुरिति प्रयोगे सर्प उपलक्षणस्वाधिष्ठानभूतायाः रज्वास्स्वरूपेण विवक्षारहितोऽ-ध्यस्तत्वादेव परमार्थसम्बन्धशून्यो रज्जुबुद्ध्या निरस्यमानोऽपि प्रतिभासमानसर्पाकारानुवादं विनाऽनवभासमानरज्वाकारस्याप्तवाक्यादवगमानुपपत्तेस्तद्वदनवभासमानाद्वितीय-प्रत्यगात्मनोऽहङ्कारोऽपि तस्मिन्नध्यस्तो लक्षणमहमिति विपर्यासगृहीतस्य प्रत्यगात्मनस्त-दनुवादव्यतिरेकेण वाक्यात्तत्त्वतः प्रतिपादनायोगात्तेन सोऽपि प्रत्यगात्माहङ्कारबाधेन स्वयाथात्म्यं वेति अध्यस्ताऽहङ्काराश्रयं विना अद्वितीयात्मनो याथात्म्यप्रतिपत्त्य-योगादित्यर्थः।।२७।।

एवं वाक्यादवाक्यार्थप्रतिपत्तिर्भवतीत्युक्तं तर्हि कथं केचिच्छ्रुतवाक्या अपि तथा न प्रतिपद्यन्त इत्याह—**इयञ्चेति**। देहेन्द्रियप्राणमनोबुद्ध्यव्याकृतान्ताननात्मन

तावत्तावत्तदार्थोऽपि त्वमर्थं प्रविविक्षति।।२८।।

कस्मात्पुनः कारणाद्देहाद्यनात्मत्वप्रतिपत्तावेवात्मा तदर्थमात्मत्वेनाभिलिङ्गते न विपर्यय इति। उच्यते। प्रत्यगात्मानवबोधस्यानात्मस्वाभाव्यात् तदभिनिर्वृत्तश्चायं बुद्ध्यादिदेहान्तस्तस्मिन्नात्मत्वमविद्याकृतमेवात्मत्वमिवानात्मत्वमपि साविद्यास्यैव। यतो निरविद्यो विद्वानवाक्यार्थरूप एव केवलोऽवशिष्यते तस्मादुच्यते–

देहादिव्यवधानत्वात्तदर्थं स्वयमप्यतः।
पारोक्ष्येणैव जानाति साक्षात्त्वं तदनात्मनः।।२९।।

यथोक्तार्थप्रतिपत्तिसौकर्याय दृष्टान्तोपादानम्–

---

आत्मत्वेन परिगृहीतान्वयव्यतिरेकाभ्यां अयं मुमुक्षुस्स्थूलदेहादारभ्य यथा यथा निरस्यति तथा तथा तत्पदार्थोऽपि त्वं पदार्थभेदादवगत्यनुसारितया प्रतीयते तद्विरोधिनः परिच्छेदाभिमानस्य निरस्यमानत्वादितीममर्थमाह—**यावद्यावदिति**।।२८।।

आरोपितस्सर्पादिनिवृत्तौ तदधिष्ठानरज्जुतत्त्वप्रतीतिरेव लोके दृष्टा न रज्वादेरर्थान्तरात्मता प्रतिपत्तिस्तत्कथमिह देहादेरात्मभावनिवृत्तौ तदधिष्ठानस्य त्वमर्थस्य तदर्थता प्रतिपत्तिः प्रतिपत्तौ वा ब्रह्मकार्यतया देहादेः ब्रह्मात्मकत्वाद्देहाद्यात्मकत्वप्रतिपत्तावेव ब्रह्मत्वप्रतिपत्तिः किं न स्यादित्याक्षिपति—**कस्मादिति**। उच्यत इत्यादिना समाधत्ते आत्माविद्यायास्तावत् जडस्वभावत्वाद्दृश्यत्वाज्ञाननिवर्त्यत्वाच्चानात्मत्वं स्वाभाविकं तत्कार्यत्वाच्च देहादेरनात्मत्वं केवलकूटस्थब्रह्मात्मकार्यत्त्वानुपपत्तेः। तथात्मनश्च चिद्रूपत्वात् स्वयंप्रकाशत्वाच्च ब्रह्मत्वं स्वाभाविकं तेन तस्य देहादावात्मत्वप्रतिपत्तिरेव ब्रह्मभावप्रच्युतिस्तन्निवृत्तौ तु स्वाभाविकब्रह्मरूपतामेवासौ प्रतिपद्यत इत्यर्थः। तथाप्यनात्मनां स्वरूपेणावस्थितत्वाद् "द्वितीयाद्वै भयं भवतीति" श्रुतेर्नात्यन्तिकानर्थनिवृत्तिस्स्यादिति। अतआह—**आत्मत्वमिवेति**। देहादीनामात्मभाववत् स्वरूपमप्यविद्यावत् एव भवति। रजतादिवत्तेषां स्वरूपेण संसृष्टरूपेण चात्मन्यध्यस्तत्वात्तस्माद्वाक्यार्थप्रतिपत्तेरविद्यानिवृत्तौ सर्वानर्थनिवृत्तिरित्यर्थः। उक्तेऽर्थे श्लोकमवतारयति—**तस्मादिति**। यस्माद्देहाद्यभिमानलक्षणव्यवधानात् स्वयं स्वात्मभूतमपि तत्पदार्थं ब्रह्म पारोक्ष्येणैव जानाति व्यवहितात्मभूतमिव प्रतिपद्यते। अतस्तेषामन्वयव्यतिरेकाभ्यामवगते नात्मत्वे साक्षात्तत्त्वंपदार्थस्यापरोक्षप्रत्यगात्मता भवतीत्यर्थः।।२९।।

ननु कथं स्वात्मभूतस्य स्वात्मनि प्रकाशमाने परोक्षतया प्रतिभासत इति। तत्राह—**यथोक्तेति**। अहमित्यभिमानशरीरैकदेशसमुद्भूतपित्तस्य पुंसस्तद्गतपीतता

प्रत्यगुद्भूतपित्तस्य यथा बाह्यार्थपीतता।
चैतन्यं प्रत्यगात्मीयं बहिर्वद्दृश्यते तथा।।३०।।

यस्मादेवमतो विशुद्धमवसीयताम्–

पदान्युद्धृत्य वाक्येभ्यो ह्यन्वयव्यतिरेकतः।
पदार्थाल्लोकतो बुद्ध्वा वेत्ति वाक्यार्थमञ्जसा।।३१।।

कुतः पुनः सामान्यमात्रवृत्तेः पदस्य वाक्यार्थप्रतिपत्तिहेतुत्वमिति? बाढम्–

सामान्यं हि पदं ब्रूते विशेषो वाक्यकर्तृकः।[१]
श्रुत्यादिप्रतिबद्धं सद्विशेषार्थं भवेत्पदम्।।३२।।

अन्वयव्यतिरेकपुरस्सरं वाक्यमेव सामानाधिकरण्यादिनाविद्यापटलप्रध्वंसद्वारेण मुमुक्षुं स्वाराज्येऽभिषेचयति न त्वन्वयव्यतिरेकमात्रसाध्योऽयमर्थ इत्याह–

---

यथा बाह्यार्थोपरक्ततया बहिरवभासते शङ्खः पीत इति। एवं प्रत्यगात्मनोऽपि तदर्थस्य बाह्यव्याकृताद्युपाध्युपरागात् बहिर्वदवभासत इति।।३०।।

यत उक्तन्यायेन तत्त्वमस्यादिवाक्यस्याखण्डार्थपर्यवसानमविरुद्धं तस्माद्वाक्यान्निराशङ्कं यथोक्तार्थो निश्चीयतामित्युपसंहरति—**यस्मादिति**।[२] पदानां वाक्येभ्यस्समुद्धारो नाम प्रयोगभेदेषु पदानामावापोद्वापाभ्यां ततस्तत्पदार्थेषु शक्यावधारणं पदार्थश्च लोकतो बृद्धव्यवहारतोऽन्वयव्यतिरेकाभ्यां च पदशक्तिप्रतियोगिनो बुध्वा वाक्यतात्पर्यानुसारेण वाक्यार्थः प्रतिपद्यत इति।।३१।।

कथं पुनस्सामान्यतो गृहीतसम्बन्धस्य पदस्य विशिष्टार्थबोधकत्वमित्याक्षिप्य समाधत्ते—**कुत** इत्यादिना। **वाक्यवक्तृगः** वाक्यतात्पर्यविषय इति यावत्। पदसमुदायात्मकत्वाद्वाक्यस्य च पदानां च सामान्यमात्रविषयत्वाद्वाक्यमपि कथं विशिष्टार्थविषयं स्यादित्यत आह—**श्रुत्यादीति**। यद्यपि स्वतस्सामान्यविषयपदं तथापि श्रुतिस्मृतिलिङ्गवाक्यादिभिर्नियन्त्रितं सदन्विताभिधानसमये विशिष्टार्थे तात्पर्यतो वर्तते। अन्यथा विशिष्टार्थसिद्धेरित्यर्थः।।३२।।

चतुर्विधान्वयव्यतिरेकाभ्यां शोधितपदार्थस्य स्वयमेवाखण्डार्थप्रतीतिसिद्धेर्वाक्य-

---

१ "पदस्य सामान्यवृत्तिकत्वेऽपि वाक्यवृत्त्या वाक्यार्थबोधो न विरुध्यते।" (सारार्थः)

२ तस्मादिति हस्तलिखितपुस्तके।

बुद्ध्यादीनामनात्मत्वं लिङ्गादपि च सिध्यति।
निवृत्तिस्तावता नेतीत्यतो वाक्यं समाश्रयेत्।।३३।।

न केवलमनुमानमात्रशरणोऽभिलषितमर्थं न प्राप्नोतीत्यनर्थं चाप्नोतीत्याह–

अनादृत्य श्रुतिं मोहादतो बौद्धास्तमस्विनः।
आपेदिरे निरात्मत्वमनुमानैकचक्षुषः।।३४।।

न चानादरे कारणमस्ति। यस्मात्सर्वत्रैवानादरनिमित्तं प्रमाणस्य प्रमाणान्तरप्रतिपन्नप्रतिपादनं वा विपरीतप्रतिपादनं वा संशयित-प्रतिपादनं वा न वा प्रतिपादनमिति। न चैतेषामन्यतमदपि कारण-मस्ति। यत आह–

मानान्तरानवष्टब्ध्यं निर्दुःख्यात्मानमञ्जसा।
बोधयन्ती श्रुतिः केन न प्रमाणमितीर्यते।।३५।।

न च संशयितव्यमवगमयति। यतः–

सर्वसंशयहेतौ हि निरस्ते कथमात्मनि।
जायेत संशयो वाक्यादनुमानेन युष्मदि।।३६।।

अपिच–

---

मनर्थकमित्याशङ्क्य प्रमाणान्तरेण युक्तिमात्रादज्ञानस्यानिवृत्तेस्तन्निवृत्तये वाक्यमेवा-श्रयणीयमित्युक्तमर्थं निगमयति—**अन्वयव्यतिरेकेति**।।३३-३४।।

प्रमाणभूतस्य वाक्यस्य लोके मूलप्रमाणापेक्षादर्शनाद्वेदस्यापौरुषेयत्वेन तदसम्भवात्तत्प्रतिपादितेऽर्थे नास्माकमादर इति सुगतमतमाशङ्क्य प्रत्यक्षादिषु मूलप्रमाणाभावेऽपि प्रामाण्यदर्शनादनधिगतार्थगन्तृत्वात् प्रमाणानां मैवमित्याह—**न चेति**। मानान्तरमवष्टब्धमित्यग्निर्हिमस्य भेषजमित्यादिवदनुवादलक्षणमप्रामाण्यं निराचष्टे—**मानान्तरानधिगतत्वे हेतुर्निदुःखीति**। अहं दुःखीति यत्संसारातीतस्य मानान्तरानधिगतत्वात् विपरीतप्रतिपादनलक्षणमप्यप्रामाण्यं नाशङ्कनीयमित्याह—**आत्मानमञ्जसेति**।।३५।।

आत्मनस्स्वरूपेणाबाध्यत्वात्सर्वेति। सर्वसंशयानां हेतौ युष्मद्यहङ्कारप्रमुखेनात्मनि चतुर्विधान्वयव्यतिरेकलक्षणानुमानेन निरस्ते वाक्यादात्मनि कथं संशयो जायेतेत्यर्थः।।३६।।

पूर्वं प्रमाणस्वभावालोचनया संशयो न भवतीत्युक्तम्। इदानीं प्रमेयस्वभावा-

**यत्र स्यात्संशयो नासौ ज्ञेय आत्मेति पण्डितैः।**
**न यतः संशयप्राप्तिरात्मनोऽवगतित्वतः।।३७।।**

**अनवबोधकत्वं तु दूरोत्सारितमेव। यत आह–**

**बोधेऽप्यनुभवो यस्य न कथंचन जायते।**
**तं कथं बोधयेच्छास्त्रं लोष्टं नरसमाकृतिम्।।३८।।**

**अन्वयव्यतिरेकपुरस्सरं वाक्यमेवावाक्यार्थरूपमात्मानं प्रतिपादयतीत्यस्य पक्षस्य द्रढिम्ने श्रुत्युदाहरणमुपन्यस्यति–**

**जिघ्राणीममहं गन्धमिति यो वेत्त्यविक्रियः।**
**स आत्मा तत्परं ज्योतिः शिरसीदं वचः श्रुतेः।।३९।।**

**यथा 'तत्सत्यं स आत्मा तत्त्वमसि' इत्यस्य शेषत्वेनान्वयव्यतिरेकश्रुतिर्यथा 'स एषोऽक्षिणि पुरुषो दृश्यते' इत्याद्या 'अथ**

---

लोचनयापि न संशय इत्याह—**अपि च। तत्रेति।** आत्मनो निस्सामान्यविशेषस्य स्वयंप्रकाशत्वेन नित्यापरोक्षतया संशयायोग्यत्वदारोपितदृश्यप्रपञ्चस्य संशयालम्बनत्वेऽपि विशिष्टरूपस्य तस्य अनात्मत्वात् स्वरूपतावन्मात्रे संशयो नास्तीत्यर्थः।।३७।।

अधिकारिणः प्रमिति जनको वेद इति न्यायात् प्रतिपत्तियोग्यमपि विषयं गाढमूढतया[१] अप्रतिपद्यमानस्यानधिकारित्वान्न प्रतिपत्तिलक्षणमित्यप्रामाण्यमित्याह—**बोधेऽपीति**[२]।।३८।।

अन्वयव्यतिरेकलक्षणतर्कस्य पदार्थशोधनद्वारेण वाक्यार्थप्रतीतिहेतुत्वमुक्तम्। तत्र विशेषणं पुरुषोत्प्रेक्षारूपाणां तर्काणां तद्धेतुत्वप्रसक्तौ वाक्यार्थप्रतिपत्तेरनियमनमाशङ्क्य प्रतिवेदान्तं सृष्टिस्थितिनियमनप्रवेशार्थत्वादसूचितानामेव तर्काणां तद्धेतुत्वमिति दर्शयति—**अन्वयव्यतिरेकाभ्यामित्यादिना। जिघ्राणीति।** अहमिदं गन्धं जिघ्राणीति व्यवस्थितं प्रमातारं यो वेत्तीति व्यभिचारिणां गन्धादिवृत्तीनां तदाश्रयस्य च साक्षिणमव्यभिचारिणं त्वं पदार्थमन्वयव्यतिरेकाभ्यां विविच्य "परं ज्योतिरूपसम्पद्य स्वेनरूपेणाभिनिष्पद्यते स उत्तमः पुरुषः" इति तत्पदार्थरूपतामाचष्ट इत्यर्थः।।३९।।

यथा छन्दोगानां तत्त्वमसीति महावाक्यशेषत्वेनावस्थात्रय साक्षिणोऽन्वयव्यति-

---

१ गाढमूढचेतस्त्वेनेति भावः।
२ बोध्येऽपि इति केचित्।

**यो वेदेदं जिघ्राणि' इत्यन्ता। तथा 'अहं ब्रह्मास्मि' इत्यस्य शेषः–**

**अहमः प्रत्यगात्मार्थो निरस्ताशेषयुष्मदः।**
**वम्भणीति श्रुतिर्न्याय्या योऽयमित्यादिनाऽसकृत्।।४०।।**

**कथं पुनरयमर्थोऽवसीयते अहंव्याजेनात्रात्मार्थो बुबोधयिषित इति। यतः–**

**एष आत्मा स्वयंज्योती रविसोमाग्निवाक्षु सः।**
**इतेष्वस्तं दृगेवास्ते भासयंश्चित्तचेष्टितम्।।४१।।**
**निर्णेनेक्ति च पृष्टो मुनिः–**

---

रेकश्रुतिः एवमहंब्रह्मास्मीति महावाक्यशेषत्वेन वाजिनामपि[1] "योऽयं विज्ञानमयः प्राणेष्वि"त्यादिका दृश्यते तथा प्रतिवेदान्तमित्थमन्वयव्यतिरेकश्रुतयो द्रष्टव्याः, तेन न शुष्कतर्काणा[2]मिहानुप्रवेश इत्यभिप्रेत्याह—**यथेति। अहम्** इत्यस्यायमर्थः। **अहमोऽहं** ब्रह्मास्मीति वाक्यगताहं पदस्य विलक्षयिषितवाक्यार्थानुरोधेन निरस्ताशेषयुष्मदो व्यावर्तिताशेषहङ्कारप्रमुखानात्मजातस्य प्रत्यगात्मालक्ष्योऽर्थ इति "योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुष" इति श्रुतिश्चतुर्विधा[3]न्वयव्यतिरेकलक्षणन्यायोपेता तात्पर्येणाचष्टे इति।।४०।।

तया पुनरनुपपत्त्याऽहं शब्दो वाच्यार्थं परित्यज्य लक्षणया कूटस्थात्मनि वर्तत इत्यपेक्षायां वाक्यशेषवशादित्युत्तरश्लोकेनोच्यत इत्याह—**कथमित्यादिना।** एष आत्मेत्ययमर्थः "किं ज्योतिरयं पुरुष" इत्युपक्रम्यादित्यादिबाह्याभ्यन्तरज्योतिषामुपरमे "आत्मैवास्य ज्योतिरात्मनैवायं ज्योतिषास्त" इति बुद्ध्यादिसाक्षिणः कूटस्थज्योतिरूपेणाहंशब्दस्य प्रतिपादितत्वादिति।।४१।।

कतम आत्मेति जनकेन पृष्टो याज्ञवल्क्यो मुनिः "योऽयं विज्ञानमयः प्राणेषु

---

१ वाजसनेयिनामिति भावः।

२ तर्काप्रतिष्ठानादप्यन्यथाऽनुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः (ब्र.सू., २.१.११) इति सूत्रे शुष्कतर्काणां (श्रुतिविरुद्धतर्काणामिति भावः) निराकृतत्वात् सूत्रभाष्यकाराभ्याम्। "नैषा तर्केण मतिरापनेया" (कठ., १.२.९) इति च श्रुतेः। तर्केण शुष्कतर्केणेति भावः।

३ अन्वयव्यतिरेकयोश्चातुर्विध्यम्, विस्तारेण नैष्कर्म्यसिद्धौ तृतीयाध्याये १-६ इति श्लोकाङ्गतटीप्पण्याम् प्रदर्शितम्।

आत्मनैवेत्युपश्रुत्य कोऽयमात्मेत्युदीरिते।
बुद्धेः परं स्वतो मुक्तमात्मानं मुनिरभ्यधात्।।४२।।

यस्माच्चात्माहंव्याजेन प्रत्यङ्मात्रो जिग्राहयिषितस्तस्मादहंवृत्तिः स्वरूपस्य विलयेनैव वाक्यार्थावगमाय कारणत्वं प्रतिपद्यत इतीममर्थमाह–

अहंवृत्त्यैव तद्ब्रह्म यस्मादेषोऽवगच्छति।
तत्स्वरूपलयेनातः कारणं स्यादहंकृतिः।।४३।।

अत एव च यः प्रतिज्ञातोऽर्थो 'नाहंग्राह्यो न तद्धीने' इत्यादिः स युक्तिभिरुपपादित इति कृत्वोपसंह्रियते–

गृहीताहंपदार्थश्चेत्कस्माज्ज्ञो न प्रपद्यते।
प्रत्यक्षादिविरोधाच्चेत्प्रतीच्युक्तिर्न युष्मदि।।४४।।

पूर्वस्यैव श्लोकार्थस्य विस्पष्टार्थमाह–

पराञ्च्येव तु सर्वाणि प्रत्यक्षादीनि नात्मनि।
प्रतीच्येव प्रवृत्तं तत्सदसीति वचोऽञ्जसा।।४५।।

---

हृद्यन्तर्ज्योतिः पुरुष'' इति। देहेन्द्रियबुद्धितद्वृत्ति तत्कारणाव्याकृतेभ्यः परं प्रत्यगात्मानमहं शब्दार्थं यतो निश्चित्य दर्शयति। अतोऽप्युक्तार्थोऽवसीयत इत्याह—**निर्णेनेति चेदित्यादिना**[१]।।४२।।

नन्वहङ्कारस्य लक्षणत्वेन सम्भवाल्लक्ष्यस्याद्वितीयत्वासिद्धिरित्याशङ्क्य लक्ष्यस्वरूपानुरोधेन तद्बुद्ध्युत्पादनसमय एव तस्य तत्रारोपितस्य विलयान्नोक्तदोष इति दर्शयति—**यस्माच्चेति**।।४३।।

तत्त्वमस्यादिमहावाक्यार्थे प्रत्यक्षादिविरोधो नास्तीति द्वितीयाध्याये यत्प्रतिज्ञातं तदित्यनुपपादितमिदानीमुपसंह्रियत इत्याह—**अत एवेति**। पूर्ववादिनो मतमुत्थापयति—**प्रत्यक्षादीति**। उत्तरमाह—**प्रतीचीति**। सुखदुःखादिविशिष्टस्य बुद्ध्युपाधिकस्यैव प्रत्यक्षादिविषयत्वं च वाक्यं न भवति। यत्परं पुनर्वाक्यं स तु प्रत्यगात्मा न प्रत्यक्षादिविषयः अतो न मानान्तरविरोध इत्यर्थः।।४४।।

प्रतीचीत्युक्तिर्न युष्मदीति श्लोकविभागः प्रत्यक्ष्यत इत्याह—**पूर्वस्येति**।।४५।।

---

१ निर्णेनेति चेति ग्रन्थपाठः।

**तस्मात्प्रमातृप्रमाणप्रमेयेभ्यो हीयमानोपादीयमानेभ्यो- ऽन्वयव्यतिरेकाभ्यां मुञ्जेषीकावदशेषबुद्धिविक्रियासाक्षितयात्मानं निष्कृष्य तत्त्वमस्यादिवाक्येभ्योऽपूर्वादिलक्षणमात्मानं विजानीयात्। तदेतदाह–**

**अहं दुःखी सुखी चेति येनायं प्रत्ययोऽध्रुवः।**
**अवगत्यन्त आभाति स म आत्मेति वाक्यधीः।।४६।।**

**प्रमाणान्तरानवष्टब्धं निरस्ताशेषकार्यकारणात्मकद्वैतप्रपञ्चं सत्यज्ञानानन्दलक्षणमात्मानं तत्त्वमसि अहंब्रह्मास्मीत्यादिवाक्यं संशयितमिथ्याज्ञानाज्ञानप्रध्वंसमुखेन साक्षादपरोक्षात्करतलन्य- स्तामलकवत्प्रतिपादयत्य[1]वेत्यसकृदभिहितम्। तत्र केचिदाहुः– तत्त्वमस्यादिवाक्यैर्यथावस्थितवस्तुयाथात्म्यान्वाख्याननिष्ठैर्न यथोक्तोऽर्थः प्रतिपत्तुं शक्यतेऽभिधाश्रुतित्वात्तेषाम्। न हि लोकेऽभिधाश्रुतेः प्रमाणान्तरनिरपेक्षाया नद्यास्तीरे फलनि सन्ती- त्यादिकायाः प्रामाण्यमभ्युपगतम्। अतो नियोगमुखेनैवाभिधाश्रुतेः प्रामाण्यं युक्तं प्रमाणान्तरनिरपेक्षत्वान्नियोगस्य। अस्य परिहारार्थम-**

---

यस्मात् शोधितपदार्थस्य वाक्यार्थप्रतिपत्तौ न मानान्तरविरोधस्तस्मात्ततः प्रतिपत्ति- र्घटतः एवेत्युपसंहरति—**तस्मादिति**। अयं दुःखीत्ययमर्थः। दुःखित्वादिप्रत्यय आगमापायित्वादध्रुवोऽवगत्यतः प्रमित्यतो येन साक्षिणा भाति स एव सर्वज्ञः परमेश्वरो ममात्मेति वाक्याद्धीर्भवतीति।।४६।।

वृत्तानुद्रवणपूर्वकमुत्तरग्रन्थसन्दर्भतात्पर्यमाह—**प्रमाणान्तरेति**। अशेषप्रत्यक्षा- दित्ययं भावः। न सिद्धार्थविषयत्वं प्रमाणान्तरसापेक्षत्वे प्रयोजकं लोके गामानयेत्यादि- प्रवर्त्तकवाक्येष्वपि तद्दर्शनात्तेन वस्तुनिष्ठं कार्यनिष्ठं वा यद्वाक्यं पौरुषेयं तन्मानान्तरसापेक्षं दृष्टमितिपौरुषेयत्वमेव सापेक्षत्वे प्रयोजकमितीह पुनर्वेदान्तेषु तदभावान्मानान्तर- योग्यविषयत्वाच्च सुतरां मानान्तरानपेक्षत्वं सुप्तपुरुषप्रतिबोधकवाक्यस्येव बोधमान- पुरुषमात्रविषयतया तदनवबोधनिवर्तनेन प्रमाख्याच्चोत्पन्नमिति नित्यावगतीत्यादेरयमर्थः। स्वभावोऽवगतिरहितस्य मानान्तरापेक्षा दृष्टा। आत्मनः पुनः कूटस्थावगतिरूपत्वात् पुरुषान्तरस्य वेदनवच्च प्रत्यगात्मत्वादेव व्यवधानाभावात् स्वात्मतयाऽन्योप-

**शेषप्रत्यक्षादिप्रमेयत्वनिराकरणद्वारेणातीन्द्रियार्थविषयत्वादभिधाश्रुतेः प्रामाण्यं सुप्तपुरुषप्रबोधकवाक्यस्येव वक्तव्यमित्ययमारम्भः–**

**नित्यावगतिरूपत्वादन्यमानानपेक्षणात् ।**
**शब्दादिगुणहीनत्वात्संशयानवतारतः ।।४७।।**

**[1]तृष्णानिष्ठीवनैर्नात्मा प्रत्यक्षाद्यैः प्रमीयते।**
**प्रत्यगात्मत्वहेतोश्च स्वार्थत्वादप्रमेयतः।।४८।।**

**श्रुतिरपीममर्थं निर्वदति–**

**दिदृक्षित[2]परिच्छिन्नपराग्रूपादिसंश्रयात् ।**
**विपरीतमतो दृष्ट्या स्वतो बुद्धं न पश्यति।।४९।।**

**न्यायसिद्धमतो वक्ति दृष्टेर्द्रष्टारमात्मनः।**
**न पश्येत्प्रत्यगात्मानं प्रमाणं श्रुतिरादरात्।।५०।।**

**अनुमानाविषयत्वेऽन्यदपि कारणमुच्यते–**

**प्रत्यक्षस्य पराक्त्वान्न संबन्धग्रहणं यतः।**

---

भोग्यताभावाद्विषयित्वेन च प्रमेयत्वायोग्यत्वाच्छ्रुतिप्रवृत्तिविषयशब्दादिगुणरहितत्वात् सततमहमस्मि न वेति सन्देहरहितात्मस्वभावत्वेनानुमानादिप्रवृत्त्ययोग्यत्वात् ग्राहकप्रतीत्युत्तरकालीनदिदृक्षया प्रयुक्तकरणव्यापारजन्यतया तृष्णकार्यभूतैः प्रत्यक्षाद्यैरात्मा न विषयी क्रियत इति।४७-४८।।

**दिदृक्षितेति** दिदृक्षालम्बनदेशादिपरिच्छिन्नपराग्भूतरूपाद्यालम्बनत्वाद्दृष्टेस्तया तद्विपरीतमदिदृक्षितमपरिच्छिन्नप्रत्यग्भूतं रूपादिरहितं स्वयंप्रकाशमात्मानं न पश्यतीत्यर्थः।।४९।।

इत्थमर्थमुपवर्ण्य तत्र श्रुतिमवतारयति—**न्यायसिद्धमिति**। "न द्रष्टेर्द्रष्टारं पश्येः" इत्यादिका श्रुतिः प्रमाणभूता दृष्टे स्वरूपस्य द्रष्टारं प्रत्यगात्मानं न पश्येरित्युक्तयुक्तिसिद्धं तात्पर्येण वक्तीत्यर्थः।।५०।।

अनुमानविषयत्वे निराकृते सति अर्थापत्त्यादेरपि विषयत्वं निराकृतमेव भवतीति मन्यमान आह—**अनुमानेति**। **प्रत्यक्षस्येत्ययमर्थः**। प्रत्यक्षस्याविनाभावलक्षणं

---

१ तृष्णानिष्ठीवनैः— "तृष्णानिष्ठीवनभूतैः प्रत्यक्षादिप्रमाणैरात्मा प्रमाणानामप्यवभासको न प्रमीयते न भास्यते सर्वभासकत्वात्"।। (सारार्थः)

२ दिदृक्षितं— "दर्शनेच्छाविषयीभूतं दृश्यते नेत्राभ्याम्" (सारार्थः)

आत्मनोऽतोऽनुमित्याऽस्यानुभवो न कथञ्चन।।५१।।

एवमयं प्रमातृप्रमाणप्रमेयव्यवहारः सर्व एव पराचीनविषय एव न प्रतीचीनमात्मानवगाहयितुमलम्। एवं च सत्यनेनैव यथोक्तोऽर्थोऽवसातु शक्यत इत्याह–

प्रमाणव्यवहारोऽयं सर्व एव पराग्यतः।
सुविचार्याप्यतोऽनेन युष्मद्येव दिदृक्षते।।५२।।

यस्मात् लौकिकप्रत्यक्षादिप्रमाणानधिगम्योऽहं ब्रह्मस्मीति वाक्यार्थस्तस्मात्–

अन्वयव्यतिरेकाभ्यां निरस्याऽऽप्राणतो यतः।
वीक्षापन्नस्य कोऽस्मीति तदसीति श्रुतिर्जगौ ।।५३।।

सोऽयमन्वयव्यतिरेकन्याय एतावानेव यदवसानो वाक्यार्थस्तदभिज्ञस्याहं ब्रह्मास्मीत्याविर्भवति। द्रष्टृदृश्यविभागेनागमापायिसाक्षिविभागेन च श्रुत्यभ्युपगमतः[1] संक्षिप्योच्यते–

दृश्यत्वाद्घटवद्देहो देहवच्चेन्द्रियाण्यपि।
मनश्चेन्द्रियवज्ज्ञेयं मनोवन्निश्चयादिमत्।।५४।।

---

सम्बन्धग्राहकस्य पराक्त्वात्सामान्यविशेषवदनात्मवस्तुगोचरतया तद्रहितात्मविषयत्वादात्मानुमानादप्यनुभूयत। अर्थादर्थापत्त्यादिभिरपि नानुभूयते इति।।५१।।

इत्थमुक्तयुक्तिभिरात्मनः प्रमाणान्तरागोचरत्वं निश्चेतव्यमित्युपसंहरति—**एवमिति**। **युष्मद्येवेति**। युष्मद्यनात्मन्येव दिदृक्षां करोतीत्यर्थः।।५२।।

अतो वेदान्तानामेवात्मनि प्रामाण्यमित्येतदपि सिद्धमित्युपसंहरति—**यस्मादिति**।।५३।।

इदानीं वाक्यार्थज्ञानसाधनपदार्थविवेकहेतुभूतान्वयव्यतिरेकयोः पूर्वाध्यायोदितयोः पुनस्सङ्क्षेपतः प्रदर्शनायोत्तरग्रन्थ इत्याह—**सोऽयमिति**। अवसीयते निश्चीयते आभ्यामित्यवसानमन्वयव्यतिरेकौ यावदवसानमस्य वाक्यार्थस्य कियदवसानः। असम्भावनाविपरीतभावनानिरासेन वाक्यार्थनिश्चयस्यान्वयव्यतिरेकाधीनत्वात् तदभिज्ञस्यान्वयव्यतिरेकाभिज्ञस्य घटवदनात्मेति यावत्। **निश्चयादिदमन्तःकरणम्**।।५४।।

---

१ श्रुत्यभ्युपगमतः– "श्रुत्यनुरोधतः" (सारार्थः)

**तथा सकलकार्यकारणागमापायिविभागसाक्षित्वेनापि–**

**प्रागसद्याति पश्चात्सत्सच्च यायादसत्तथा।**
**अनात्माभिजनं तत्स्याद्विपरीतः स्वयं दृशिः।।५५।।**

**तत्र घटादीनां दृश्यानामनात्मत्वं द्रष्ट्रात्मपूर्वकं प्रत्यक्षेणैव प्रमाणेनोपलभ्यानात्मनश्चासाधारणान्धर्मानवधार्य तैर्दृश्यत्वागमापायादिभिर्धर्मैः शरीरेन्द्रियमनोनिश्चयादिवृत्तीरनात्मतया व्युदस्याहंवृत्तिमतोऽपि दृश्यत्वाविशेषादद्द्रष्टृपूर्वकत्वमवसीयते। तदेतदाह–**

**घटादयो यथा लिङ्गं स्युः परंपरायाऽहमः।**
**दृश्यत्वादहमप्येवं लिङ्गं स्याद्द्रष्टुरात्मनः।।५६।।**

**ननु द्रष्टृदर्शनदृश्यानां जाग्रत्स्वप्नसुषुप्तेष्वागमापायदर्शनात् यत्साक्षिकौ तेषामागमापायौ स आगमापायविभागरहित आत्मा यथा यन्निबन्धनौ जगतः प्रकाशाप्रकाशौ स प्रकाशाप्रकाशविभागरहितः सूर्य इति। यदा चैवं तदा वाक्यावगम्यस्यार्थस्यानुदितान–**

---

इदानीं द्वितीयमन्वयव्यतिरेकं दर्शयति—**तथेति**। **प्रागिति**। प्रागसद्भूत्वा पश्चात् सद्याति सत्त्वं प्राप्नोति सच्च भूत्वा प्रध्वस्तमसत्त्वं प्राप्नुयादित्येतदनात्मस्वाभाव्यं तत्साक्षी पुनस्तद्विपरीत आगमापायशून्यः कूटस्थ इत्यर्थः।।५५।।

इदानीं द्रष्टृकोटिनिविष्टतया पौरात्मत्वेनाभिमन्यमानस्याहंकारस्यानात्मत्वं साधयति—**तत्रेति**। असाधारणधर्माः दृश्यत्वागमापायरूपादिमत्त्वादयः। **घटादय** इत्ययमर्थः। देहात् बाह्यघटादयो विषया देहविशिष्टस्य लिङ्गं भवति। एवं देहोपीन्द्रियविशिष्टस्य सोऽपि मनसस्तदपि बुद्धेस्साप्यहङ्कारस्य यथालिङ्गमेवाहङ्कारोऽपि ग्राह्यत्वात् स्वव्यतिरिक्तं **द्रष्टृलिङ्गमिति**।।५६।।

एवमन्वयव्यतिरेकयोरात्माधिगतिहेतुत्वे प्रपञ्चिते पुनरपि वाक्यस्य निर्विषयत्वं प्राप्तमिति सांख्यमतमुत्थाप्य समाधत्ते—**नन्वित्यादिना**। साक्षादपरोक्षात्मस्वभावस्यैवानुमीयमानत्वात् कथं व्यवधानमिति पुनराशङ्कते—**ननु साक्षादिति**। द्रष्टृदृश्यभावेनावध्यवधिमद्भावेन च ग्रहणमित्यर्थः। समाधत्ते—**मैवमिति**। इदं दृश्यमानं द्रष्टा इवागमापायौ तदवधिरयमिति च विशेषणवत्तयैवानुमानादात्माधिगम्यते च निर्विशेषणतया साक्षादसाक्षाच्चाधिगतिर्मोक्षसाधनमिति श्रूयते इत्यभिप्रायः। **यमेव** केवलं निर्विशेषणमात्मानमेष साधको **वृणुते** निरन्तरं तन्निष्ठतया भजते। तेन परमात्मनाऽयमात्मा

स्तमितविज्ञानमात्रस्वभावस्यानुमानेनैव प्रतिपन्नत्वात्पुनरपि वाक्यस्य निर्विषयत्वप्रसङ्गः। नैष दोषः। लिङ्गव्यवधानेन तत्प्रतिपत्तेः। ननु साक्षादपरोक्षादात्मस्वभावेनानात्मनो हानोपादानयोः संबन्धग्रहणात् कमतिशयं वाक्यं कुर्यात्। मैवं वोचः। लिङ्गाधीनत्वात्तत्प्रतिपत्तेः। न हि लिङ्गव्यवधानेनात्मप्रतिपत्तिः साक्षादपरोक्षात्प्रतिपत्तिर्भवति 'यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा विवृणुते' इति श्रुतेः। अत आह–

लिङ्गमस्तित्वनिष्ठत्वान्न स्याद्वाक्यार्थबोधकम्।
सदसद्व्युत्थितात्माऽयमतो वाक्यात्प्रतीयते।।५७।।

ननु यदि व्यावृत्तसदसद्विकल्पजालं वस्त्वभीष्टं वाक्याद्भवतस्तथापि तूत्सार्यते वाक्यविषया तृष्णा। यस्मादन्तरेणापि वाक्यश्रवणं निरस्ताशेषविकल्पमागोपालाविपालपण्डितं सुषुप्ते वस्तु सिद्धमतो नार्थो वाक्यश्रवणेन। नैतदेवम्। किं कारणम्। सर्वानर्थबीजस्यात्मानवबोधस्य सुषुप्ते संभवात्। यदि हि सुषुप्तेऽज्ञानं नाभविष्यदन्तरेणापि वेदान्तवाक्यश्रवणमननिदिध्यासनान्यहं ब्रह्मास्मीत्यध्यवसायात्सर्वप्राणभृतामपि स्वरसत एव सुषुप्तप्रतिपत्तेः, सकलसंसारोच्छित्तिप्रसङ्गः। न च कैवल्यात्पुनरुत्थानं

---

लभ्यः। कथं **तस्यैव आत्मा** तस्य साधकस्यैष प्रकृतः परमात्मा स्वामसाधारणं समस्तविशेषणविनिर्मुक्ततया निर्विकल्पां **तनुं विवृणुते** विवृतां करोति विस्पष्टमभिव्यञ्जयति। यद्वा **यमेव** साधकमे**षः** परमेश्वरो मामयं जानात्वित्यनुगृह्णाति तेन साधकेनायं **लभ्यः**। शेषं पूर्ववत्। अस्तित्वनिष्ठत्वाद्धर्मसद्भावमात्रनिष्ठतया तदसाधारणस्वभावप्रतिपादनोदासीनत्वादिति यावत्।।५७।।

आशङ्कितपूर्वपक्षोत्तरत्वेनोत्तरश्लोकमवतारयति—**नन्वित्यादिना**। आगोपालाविपालपण्डितपर्यन्तानां सुषुप्तेऽप्यज्ञानस्य विद्यमानत्वान्न वाक्याधिगम्यनिर्विकल्पकं वस्तु तत्र सिद्धमिति परिहरति—**नैतदिति**। एतदेव साधयति—**यदि हीति**। ननु उच्छिन्न एष संसारसुषुप्ताविति। मैवमित्थं पुनरुत्थानदर्शनादित्याह—**न चेति**। सुषुप्तौ मुक्त एव पुनरुत्थानं पुनरन्यस्येत्याशङ्क्य सुषुप्तोत्थितयोः प्रत्यभिज्ञायैकधीगमान्मैवमिति

न्याय्यमनिर्मोक्षप्रसङ्गात्। न चान्य एव सुषुप्तोऽन्य एवोत्थित इति शक्यं वक्तुं, नाद्राक्षमहं सुषुप्तेऽन्यत्किंचिदपीत्युत्थितस्य प्रत्यभिज्ञादर्शनात्। तस्मादवश्यं सुषुप्तेऽज्ञानमभ्युपगन्तव्यम्। ननु यदि तत्राज्ञानमभविष्यद्रागद्वेषघटाज्ञानादिवत्प्रत्यक्षमभविष्यद्यथेह लोके घटं न जानामीत्यज्ञानमव्यवहितं प्रत्यक्षम्। अत्रोच्यते। न अभिव्यञ्जकाभावात्। कथं अभिव्यञ्जकाभाव इति चेच्छृणु–

बाह्यां वृत्तिम[1]नुत्पाद्य व्यक्तिः स्यान्नाहमो यथा।
नर्तेऽन्तःकरणं तद्वद्ध्वान्तस्य व्यक्तिराञ्जसी।।५८।।

कश्चिदतिक्रान्तं प्रतिस्मृत्य 'दृश्यत्वादहमप्येवं लिङ्गं स्यात् द्रष्टुरात्मनः' इति निर्युक्तिमभिहितमित्याह। किं कारणम्? अहंतज्ज्ञात्रोर्विवेकाप्रसिद्धेः। यथेह घटदेवदत्तयोर्ग्राह्यग्राहकत्वेन स्फुटतरो विभागः प्रसिद्धो लोके न तथेहाहङ्कारतज्ज्ञात्रोर्विभागोऽस्तीति। तस्मादसाध्वेतदभिहितमिति। अत्रोच्यते–

दाह्यदाहकतैकत्र यथा स्याद्वह्निदारुणोः।

---

परिहरति—**न चान्य** इति। सुषुप्त्यवस्थायां साक्षिवेद्यं चेदज्ञानमभ्युपगम्यते। तर्हि तत्कालेऽपि तद्व्यवहारयोग्यं स्यात्। रागद्वेषघटज्ञानानां साक्षिवेद्यानां जाग्रत्यपरोक्षत्वेन व्यवहारयोग्यत्वदर्शनादित्याशङ्कते—**नन्विति**। निर्विकल्पकानुभवसिद्धस्याप्यस्य स्फुटादिव्यञ्जकोपाधेरन्तःकरणस्याभावात् घटादिविषयबुद्धिवृत्तादौ इवाहङ्कारस्य न स्फुटप्रतिपत्तिरिति परिहरति—**अत्रोच्यत इत्यादिना**।।५८।।

शङ्कोत्तरत्वेन श्लोकमवतारयति—**कश्चिदित्यादिना**। **न तथेहेति**। अहं पश्यामीत्यहम एव द्रष्टृत्वानुभवात् घटवद्दृश्यत्वेन स्वव्यतिरिक्तद्रष्ट्रनुमापकत्वमनुपपन्नमित्यर्थः। यद्यप्यहं पश्यामीति ग्राह्यत्वं ग्राहकत्वञ्चैकाश्रयं प्रतीयते। तथाप्यन्यत्रानयोर्विभिन्नाधिकरणत्वदर्शनाच्चिद्धातोरहङ्कारव्यतिरेकेण सुषुप्तादौ द्रष्टृत्वदर्शनादहङ्कारस्य च सुखदुःखादिवेद्यधर्मविशिष्टस्य घटादिवत् द्रष्टृत्वानुपपत्तेर्ग्राह्यत्वमेव न ग्राहकत्वमिति

---

[1] बाह्यां वृत्तिमित्यादि— "यथा साक्षिचैतन्यानुभवसिद्धस्याप्यहंकारस्य बाह्यघटादिविषयबुद्धिवृत्त्यनुदये स्फुटप्रतिपत्तिर्न भवति तथैव सुषुप्तावन्तःकरणस्याभावादहमिति विशिष्टवृत्तेरनुद्यात्तत्राहं ब्रह्म न जानामीति नाज्ञानप्रत्यक्षापत्तिरित्यर्थः। (सारार्थः)

**ज्ञेयज्ञातृकतैवं स्यादहंज्ञात्रोः परस्परम्।।५९।।**

**एवं तावदविद्योत्थस्यान्तःकरणस्य बाह्यविषयनिमित्तरूपावच्छेदायाहंवृत्तिर्व्याप्रियते। तयावच्छिन्नं सत्कूटस्थप्रत्यगात्मोपादानावबोधरूपस्याव्यवधानतया विषयभावं प्रतिपद्यत[१] इति। तत्र तयोर्ज्ञात्रहंतारूपयोरवभासकावभास्यत्वसंबन्धव्यतिरेकेण नान्यत्संबन्धान्तरमुपपद्यते। अहंतारूपं त्वात्मसात्कृत्वाऽहंकञ्चुकं परिधायोपकार्यत्वोपकारकत्वक्षमः। सन् बाह्यविषयेणोपकारिणाऽपकारिणा वात्मात्मीयं संबन्धं प्रतिपद्यते। तदभिधीयते–**

**इदं ज्ञानं भवेज्ज्ञातुर्ममज्ञानं तथाऽहमः।**

---

ग्राहकानुमापकत्वं सिद्धमित्येतत् दृष्टान्तेनोपपादयति—**दाह्येति**।।५९।।

ननु यदि घटादिवदहङ्कारोऽपि साक्षिचैतन्यस्य विषयस्तर्हि विषयत्वाविशेषात् घटादाविव ममेति बुद्धिः किं न स्यान्मामहं पश्यामीति। अहं पश्यामीत्येव कुतः प्रतीतिस्तथा घटादावप्यहमिति बुद्धिः किं न स्यान्ममेति बुद्धिरेव कुत इत्याशङ्क्य एतदुपपादयन्नुत्तरश्लोकमवतारयति—**एवमिति**। बाह्याश्शब्दादयो विषयास्तन्निमित्तरूपं तदाकारज्ञानपरिणामस्तेनावच्छेदाय जानामीति तद्विशेषिततत्वायाहंवृत्तिर्व्याप्रियते अन्यथा स्वपरसम्बेद्ययोरविशेषप्रसङ्गात्। तथापि कथं तत्प्रतीतिरित्यत आह—**तयावच्छिन्नमिति**। कूटस्थो यः प्रत्यगात्मा तदुपादानस्तज्जन्यो यो बोधरूपोऽहं वृत्यवच्छिन्नान्तःकरणप्रतिबिम्बितश्चिदाभासस्तदधीनत्वात्तस्य तज्जन्यत्वं तस्येन्द्रियादिव्यवधानमन्तरेण विषयत्वमन्तःकरणं प्रतिपद्यते। तथापि कथं घटादिवदात्मीयावभासस्तर्हि कथमिति सम्बन्धान्तरसामर्थ्यादित्याह—**अहन्तेति**। तात्त्विकात्मत्वं मा भूदित्यत आह—**अहं कञ्चुकमिति**। अतएवोपकारादिविषयत्वयोग्यो भवतीत्याह—**उपकार्येति**। अतएव चात्मा सोपाधिको घटादिविषयैरात्मीयत्वेन सम्बन्धं प्रतिपद्यत इत्याह—**बाह्यविषयेणेति**। इदमिति ज्ञानं साक्षात्स्वभावस्येति अन्तःकरणे अहंवृत्त्यवच्छिन्ने स्यात्तस्यैवाहं कञ्चुकस्य ममेति ज्ञानं घटादिषूपकार्योपकारकभावलक्षणसम्बन्धात् भवति। कुतो विभाग इति। अत आह—**अज्ञानेति**। अज्ञानमुपाधिरस्येत्यज्ञानोपाधिकश्चैतन्याभासस्तेनेदमिति प्रत्ययस्स्यात्। अतः परं बाह्योपकारकादिसम्बन्धवशादहमो ममेति विक्रियाज्ञान-

---

१ अव्यवधानतया विषयभावं प्रतिपद्यते— "बह्नेर्लोहमिवाव्यवधानतया विषयभावं व्याप्तिं दृश्यतां भास्यतां प्रतिपद्यते वृत्यवच्छिन्नः प्रमाता स्वावच्छिन्नस्य स्वतादात्म्यापन्नस्यापि चैतन्यस्य विषयो भवतीत्यर्थः।। (सारार्थः)

अज्ञानोपाधिनेदं स्याद्विक्रियातोऽहमो मम।।६०।।

एकस्यैव ज्ञातुरन्तर्बाह्यनिमित्तभेदाद्विभिन्नेऽपि विषये इदं ममेति ज्ञानद्वैरूप्यं जायत इत्युक्तम्। अत्रोपक्रियमाणापक्रियमाणस्यैव ज्ञातुर्विषये ममप्रत्ययो भवति, विपर्यये चेदंप्रत्यय इति कथमवगम्यते। अवगम्यतामन्वयव्यतिरेकाभ्याम्। तत्कथमित्याह–

अनुपक्रियमाणत्वान्न ज्ञातुः स्यादहं मम।
घटादिवदिदं तु स्यान्मोहमात्रव्यपाश्रयात्।।६१।।

मोहतत्कार्याश्रयत्वाज्ज्ञातृत्वाविक्रिययोः पूर्वत्रेदंममज्ञानान्वयः प्रदर्शितः। अथाधुना तद्व्यतिरेकेण व्यतिरेकप्रदर्शनार्थमाह–

विक्रियाऽज्ञानशून्यत्वान्नेदं न च ममात्मनः।
उत्थितस्य सतोऽज्ञानं नाहमज्ञासिषं यतः।।६२।।

आत्मानात्मविवेकस्येयत्ताप्रदर्शनार्थमाह–

वाक्यप्रत्यक्षमानाभ्यामियानर्थः प्रतीयते।
अनर्थकृत्तमोहानिर्वाक्यादेव सदात्मनः ।। ६३ ।।

---

परिणामस्स्यादित्यर्थः।।६०।।

उक्त विभागे प्रमाणप्रदर्शनार्थमुत्तरश्लोक इति वृत्तं कीर्तयन्नाह—**एकस्यैवेति**। अन्तर्बाह्यनिमित्तभेदात् अन्तर्निमित्तश्चैतन्याभासः बाह्यनिमित्तमुपकारकघटादिविषयज्ञानपरिणामस्तद्भेदादभिन्नेऽपि विषयेऽन्तःकरणे घटादौ च ज्ञातुस्साक्षिणस्सुषुप्तिदशायामुपकारकादिसम्बन्धाभावात् घटादिवदहं ममेति ज्ञानं न भवति मोहमात्रमेव व्यपाश्रयो यस्य चिदाभासस्य तद्वशादिदन्तु स्यादिदमित्यवभासमात्रमेवाज्ञाने स्यादित्यर्थः।।६१।।

इदं तु स्यादित्युक्तं व्यतिरेकमाह—**मोहेति**। विक्रियाशब्दाद्याकारविज्ञानपरिणामः। ननु कथमज्ञानशून्यत्वं सुषुप्तेऽप्यज्ञानस्य साधितत्वादित्याशङ्क्य तत्राहमज्ञ इति स्फुटतरव्यवहाराभावात्तथोच्चत इत्याह—**उत्थितस्येति**।।६२।।

इयत्ता सर्वानात्मविविक्तसाक्षिरूपावगतिपर्यन्तं वाक्येति वाक्यं त्वं पदार्थपरिशोधकम्। अत्र कोऽयमात्मेति। प्रत्यक्षमन्वयव्यतिरेकजन्यमात्मानात्मविवेकानुभवं ताभ्यां प्रमाणाभ्यामियानर्थस्सकलानात्मविविक्तः कूटस्थः प्रत्यगात्मानुभूयते। तर्हि तत्त्वमस्यादिवाक्यमनर्थकं प्राप्तमित्याशङ्क्य मैवं तस्यैव मूलाज्ञाननिवर्त्तकमित्याह—**अनर्थकृदिति**।।६३।।

द्वितीयाध्यायादौ श्रोतृचतुष्टयमुपन्यस्तम्। तत्र कृत्स्नानात्मनिवृत्तौ सत्यां यः प्रत्यगात्मन्यवाक्यार्थतां प्रतिपद्यते स क्षपिताशेषान्तरायहेतुरिति न तं प्रति वक्तव्यं किञ्चिदप्यवशिष्यते। योऽपि वाक्यश्रवणमात्रादेव प्रतिपद्यते तस्याप्यतीन्द्रियशक्तिमत्त्वान्न किंचिदप्यपेक्षितव्यमस्ति। यश्च श्रावितततत्त्वमस्यादिवाक्यः स्वयमेवान्वयव्यतिरेकौ कृत्वा तदवसान एव वाक्यार्थं प्रतिपद्यतेऽसावपि यथार्थं प्रतिपन्न इति पूर्वदेवोपेक्षितव्यः। यः पुनरन्वयव्यतिरेकौ कारायित्वाऽपि पुनः पुनर्वाक्यं श्राव्यते यथाभूतार्थप्रतिपत्तये तस्य कृतान्वयव्यतिरेकस्य सतः कथं वाक्यं श्राव्यत इति। उच्यते–

नवसंख्याहृतज्ञानो[१] दशमो विभ्रमाद्यथा।
न वेत्ति दशमोऽस्मीति वीक्षमाणोऽपि तान्नव।।६४।।

अथ दृष्टान्तगमर्थं दार्ष्टान्तिकार्थे समर्पयिष्यन्नाह–

अपविद्धद्वयोऽप्येवं[२] तत्त्वमस्यादिना विना।
वेत्ति नैकलमात्मानं नान्वेष्यं चात्र कारणम्।।६५।।

---

यदि तत्त्वमस्यादिवाक्यं तमो निवर्तकं तर्हि सकृत्प्रवृत्तमेव प्रत्यक्षवत् स्वकार्यं कुर्यात्। अन्यथा व्यतिरेकाभावान्न करोति। तर्हि प्राप्ताप्राप्तविवेकेन ताभ्यामेव तत्त्वादधिगतसिद्धेरनर्थकं वाक्यमित्याशङ्क्य क्षपितप्रतिबन्धादिविशेषे सकृत्प्रवृत्तस्य वाक्यस्य समर्थत्वेऽपि प्रतिबन्धाधिकारिविशेषविषये प्रतिबन्धक्षयमपेक्ष्यान्वयव्यतिरेकसहकृतं पुनः पुनश्श्राव्यमाणं स्वकार्यं कुर्यादिति दृष्टान्तपूर्वकमाह—**द्वितीयाध्यायेति। नवेति**[३] स्वव्यतिरिक्तान्नवपुरुषानीक्षमाणोऽपि तद्वत नवसंख्ययैवापहृतज्ञानो दशमोऽसीत्याप्तवाक्यश्रवणं विनाऽऽत्मानं दशमोऽसीति विभ्रमाद्यथा न वेत्तीत्यर्थः।।६४-६५।।

---

१ नवसंख्याहृतज्ञानः—"भ्रान्त्या नवसंख्या संख्यानकर्तृत्वप्रतिबद्धसंख्येयत्वज्ञानः" (सारार्थः)

२ अपविद्धद्वयोऽपि – शोधितपदार्थोऽपि। "अद्वयोऽपि" (सारार्थः)

३ यथा कदाचित् दशसंख्यकाः मत्स्यजीविपुरुषाः मत्स्यार्थं नदीम्प्रति गत्वा स्वेष्टसाधनानन्तरं नदीतः प्रत्यावर्तनकाले सर्वे वयं समागता न वेति विमृश्य परिगणनाय प्रवृत्तः परिगणनीयपुरुषनिष्ठया नवसंख्यया अपहृतविवेकज्ञानो दशमस्तदा परिगणनीयान्नवसंख्यकान् सम्यक् पश्यन्नपि भ्रान्त्या गणनाकर्त्तारं स्वात्मानं "दशमोऽहमस्मि" इति न वेति। अपि च दशमः नद्यां ममार इति शोचन् रौति। "त्वं दशमोऽसीत्याप्तवाक्यश्रवणं विना स्वात्मानं दशमोऽस्मीति विभ्रमाद्यथा न वेत्तीति भावः।"

नान्वेष्यं चात्र कारणमित्युक्तं तत्कस्मादिति चोदिते प्रत्याहान्वेषणासहिष्णुत्वात्। तत्कथमित्याह–

सेयं भ्रान्तिर्निरालम्बा[१] सर्वन्यायविरोधिनी।
सहते न विचारं सा[२] तमो यद्वद्दिवाकरम्।।६६।।

तस्याः खल्वस्या अविद्याया भ्रान्तेः सम्यग्ज्ञानोत्पत्तिद्वारेण निवृत्तिः–

बुभुत्सोच्छेदिनी चास्य सदसीत्यादिना दृढम्।
प्रतीचि प्रतिपत्तिः स्यान्नासौ मानान्तराद्भवेत्।।६७।।

कथं पुनर्वाक्यं प्रतिपादयत्येवेति चेद् दृष्टान्तोक्तिः–

जिज्ञासोर्दशमं यद्वन्नवातिक्रम्य ताम्यतः।
त्वमेव दशमोऽसीति कुर्यादेवं प्रमां वचः।।६८।।

सा च तत्त्वमस्यादिवाक्यश्रवणजा प्रमोत्पन्नत्वादेव। न च नैवमिति प्रत्ययान्तरं जायते। तदेतद्दृष्टान्तेन प्रतिपादयति–

दशमोऽसीति वाक्योत्था न धीरस्य विहन्यते।

---

निरालम्बा उचितालम्बनवर्जिता।।६६।।

तर्हि सकार्याया अविद्यायाः प्रमाणज्ञाननिवर्त्यत्वात् प्रत्यक्षादिमानान्तरादपि निवृत्तिः किं न स्यादिति तत्राह—**तस्या इति**। सर्वसंसार विभ्रमाधिष्ठानस्य प्रत्यगात्मनो मानान्तरायोग्यत्वात् तत्प्रतिपादकवाक्यजन्यमेव ज्ञाननिवर्तकमित्यर्थः।।६७।।

प्रमाणान्तरादशक्यामधिगतिं वाक्यं कथं कर्तुं शक्नुयादित्याक्षिप्यदृष्टान्तप्रदर्शनेन समाधत्ते—**कथमित्यादिना**। ताम्यतो दशमज्ञानाय क्लिश्यतः दशमोसीतिवचो यथा प्रमां कुर्यात्। एवं तत्त्वमस्यादिवचो विजिज्ञासोः प्रमां कुर्यादित्यर्थः।।६८।।

भवतु प्रमाता तथापि सा बलवत्तरैः पूर्वोत्पन्नैरुत्तरकालीनैर्द्वैतविषयैः प्रत्ययान्तरैर्विरोधात् बाध्यते संशयिता वा भवतीत्याशङ्क्य दृष्टान्तेनैतदुभयमपि निराचष्टे—**सा चेति**। उत्पन्नत्वादेव न विहन्यत इति शेषः। आदिमध्यावसानेष्विति ज्ञानोत्पत्तेः

---

१ निरालम्बा—''आश्रयविषयस्वभावापि वस्तुतः आश्रयविषयरहिता'' (सारार्थः)

२ सहते न विचारं सा—''एवंभूता सा विचारं प्रमाणाद्यवधारणानुकूलव्यापारं न सहते। विचार्यमाणा सती स्वरूपशून्यैव भवतीत्यर्थः (सारार्थः)

**आदिमध्यावसानेषु न नवत्वस्य संशयः।।६९।।**
**एवं तत्त्वमसीत्यस्माद्द्वैतनुत्प्रत्यगात्मनि।**
**सम्यग्ज्ञाततत्वमर्थस्य जायेतैव प्रमा दृढा।।७०।।**

**प्रत्यगात्मनि प्रमोपजायत इत्युक्तं तत्र चोद्यते– किं यथा घटादिप्रमेयविषया प्रमा कर्त्रादिकारकभेदापह्नवेन जायते तथैव उताशेषकारकग्रामोपमर्देन कर्तुः प्रत्यगात्मनीति। उच्यते–**

**प्रत्यक्ताऽस्य स्वतोरूपं निष्क्रियाकारकाफलम्।**
**अद्वितीयं तदिद्धा धीः प्रत्यगात्मेव लक्ष्यते।।७१।।**

**यस्मादेवम्–**

**विपश्चितोऽप्यस्तस्यामात्मभावं वितन्वते।**
**दवीयास्स्विन्द्रियार्थेषु क्षीयते ह्युत्तरोत्तरम्।।७२।।**

**आह यदि वाक्यमेव यथाभूतार्थावबोधकमथ कस्य**

---

सत्समकालमुत्तरकालं वेत्यर्थः।।६९।।

दार्ष्टान्तिकमाह—**एवमिति**। सर्वस्य कस्मान्न जायत इत्याशङ्क्य पदार्थपरिशोधनाभावादित्याह—**सम्यगिति**। सम्यग्ज्ञातस्त्वमर्थस्त्वंपदार्थो येन तस्यैव जायन्त इत्यर्थः।।७०।।

स किं कर्त्रादिकारकग्रामोपमर्देन जायते उत न। आद्ये स्वस्याप्यभावस्स्यात् द्वितीयेनाद्वैत सिद्धिः। कर्त्रादिद्वैतावस्थानादित्येतच्छङ्कोत्तरत्वेन उत्तरश्लोकमवतारयति—**प्रत्यगात्मनीत्यादिना**। क्रियाकारकशून्यं सर्वान्तरमद्वयमस्यात्मनस्स्वाभाविकं रूपमितरत्तु अविद्याध्यारोपितम्, तेन विद्योत्पत्तेः प्राक् प्रमात्रादिसम्भवेऽपि नोत्पन्नविद्यस्याविद्यानिवृत्तौ प्रमात्रादिसम्भवादद्वैतविरोधः। नाप्यद्वैतप्रमानुदयस्तदुत्पत्तेः प्रागारोपितरूपेण प्रमात्रादीनां सद्भावादिति भावः। ननु कथं प्रत्यगात्मनोऽद्वितीयत्वं तस्य कर्तृत्वेन भोक्तृत्वेन च प्रतीयमानत्वादित्याशङ्क्य तत्प्रतीतेरन्तःकरणोपाधिविशिष्टविषयत्वान्न विरोध इति परिहरति—**तदिद्धा धीरिति**। तदिद्धा तच्चैतन्याभाससन्दीप्तेतियावत्।।७१।।

व्यवहारगोचराणां विदुषां तस्यां बुद्धावात्मत्वविभ्रमोऽपि तस्याः प्रत्यगात्मचैतन्याभासव्यवधानादांत्मत्वविभ्रमस्य विरलतादर्शनादप्येतदधिगन्तव्यमित्याह—**देवीयस्त्विति**। बुद्धिरनन्तरबाह्यपदार्थेष्वात्मभावो विवेकिनामवचीयत इत्यर्थः।।७२।।

**आहेति**। ''येन वा पश्यति येन वा शृणोति'' ''द्रष्टा-श्रोता-मन्ता-कर्त्ता-

हेतोरविद्योत्थापितस्य कर्तृत्वादेरुपदेश इत्युक्ते प्रतिविधीयते–

भ्रान्तिप्रसिद्ध्याऽनूद्यार्थं तत्तत्त्वं भ्रान्तिबाधया।
अयं नेत्युपदिश्येत तथैवं तत्त्वमित्यपि।।७३।।

इममर्थं दृष्टान्तेन बुद्धावारोपयति–

स्थाणुः स्थाणुरितीवोक्तिर्न नृबुद्धिं निरस्यति।
व्यनुवादत्तथैवोक्तिर्भ्रान्तिं पुंसो न बाधते।।७४।।

यस्माच्छ्रोतृप्रसिद्धानुवाद्येव त्वमिति पदं तस्मादुद्दिश्यमानस्थत्वात् दुःखितादेरविवक्षितत्वमेव। विधीयमानत्वे हि सति विरोधप्रसङ्गो न तु विधीयमानानुद्यमानयोरिति। स्वप्रधानयोर्हि पदयोर्विरोधाशङ्का सामान्यालिङ्गितत्वात्तयोर्न विपर्यये–

---

बोद्धा-विज्ञानात्मा पुरुषः'' ''पिप्पलं स्वाद्वत्ती''ति च त्वंपदाभिधेये जीवे संसारधर्मोपदेशो वाक्यार्थावगतिविरोधीति शङ्कार्थः। एतदुत्तरश्लोकेन समाधीयते इत्याह—**प्रतिविधीयते** इति। यथा स्थाणुः पुरुषो वेति सन्दिग्धविपर्यस्ते वा पुरुष एवेति भ्रान्तस्य श्रोतुः प्रसिद्धपुरुषानुवादेन योऽयं पुरुषः सोऽयं स्थाणुर्न पुरुष इति पुरोवर्तिनस्तत्त्वमारोपितपुरुषाकारबाधेन यथोपदिश्यते तथाऽविद्याध्यारोपितकर्तृत्वाद्यनुवादेन जीवस्यापि याथात्म्यं तद्व्युदासेन बोध्यत इत्यर्थः।।७३।।

एतदेव व्यतिरेकमुखेन प्रदर्शयति—**इदमिति**। व्यनुवादाद्विगतानुवादत्वारोपितपुरुषाकारानुवादाभावादेकविषयत्वेन विरोधास्फुरणात्। केवलमयं स्थाणुरिति बुद्धिः पुरुषबुद्धिं निवर्तयति यथा तथा तदसीत्येतावन्मात्रोक्तावपि स्फुटं न भवेदित्यर्थः।।७४।।

संसारित्वेन प्रत्यक्षमनुभूयमानस्त्वं पदार्थः कथमसंसारिब्रह्मरूपेण प्रतिपाद्यत इत्याशङ्क्य ब्रह्मरूपविधानाय केवलमनुद्यमानस्य दुर्बलत्वात् बाध्यत्वमेव न तु बाधकत्वशङ्कापीति परिहरति—**यस्मादिति**। दुःखित्वादेर्न विरोधप्रसङ्ग इत्यनुषङ्गः पदार्थस्वभावालोचनयाऽप्येवमित्याह—**स्वप्रधानयोरिति। सामान्यलिङ्गितत्वादिति।** गौरश्व इति स्ववाच्यसामान्ययोरपरित्यागात्तथाभूतयोः पदयोर्न विरोध इत्यर्थः। तदेतदाह—**अनालिङ्गितेति**। अनालिङ्गिते परित्यक्तेऽविवक्षिते सामान्ये स्वप्रवृत्तिनिमित्तभूते शवले वाच्यार्थविरोधान्नैतौ जिहासितं पारोक्ष्यं सद्वितीयत्वं दुःखित्वं परिच्छिन्नत्वं चास्मिन् प्रयोगे प्रतिपादयतो यस्माद्वतेत्यर्थः। तदपि कुत इत्याह—**व्युत्थिताविति**। वाच्यार्थं परित्यज्य लक्ष्यार्थे व्यवस्थितौ वाक्यतात्पर्यविषयैकत्वानुरोधेन

**अनालिङ्गितसामान्यौ न जिहासितवादिनौ।**
**व्युथितौ[१] तत्त्वमौ तस्मादन्योन्याभिसमीक्षणौ।।७५।।**

**अपास्तसामान्यार्थत्वादनुवादस्थत्वाद्विधीयमानेन च सह विरोधाद्दुःखित्वादेरस्तु कामं जिहासितार्थयोरसंसर्गो, यथोपन्यस्तदोषविरहात्तत्त्वमर्थयोः संसर्गोऽस्तु नीलोत्पलवदिति चेन्नैवमप्युपपद्यते। तस्मात्–**

**तदर्थयोस्तु निष्ठात्मा द्वयपारोक्ष्यवर्जितः।**
**नाद्वितीयं विनाऽऽत्मानं नात्मा नित्यदृशा विना।।७६।।**

**अत्राह किमिह जिहासितं किं वोपादित्सितमिति। उच्यते। प्रत्यगात्मार्थाभिधायिनस्त्वंपदादुभयं प्रतीयतेऽहं दुःखी प्रत्यगात्मा च। तत्र च प्रत्यगात्मनोऽहं दुःखीत्यनेनाभिसंबन्ध आत्मयाथात्म्यानवबोधहेतुक एव। अतोऽहमर्थोऽनर्थोपसृष्टत्वादज्ञानोत्थत्वाच्च हेय इति प्रत्यक्षतोऽवसीयते। तदर्थे किं हेयं किं वोपादेयमिति नावध्रियते। तत इदमभिधीयते–**

---

परस्परविरुद्धांशपरित्यागेनाविरुद्धांशमात्रेऽन्योन्य एकत्वाभिमुख्येन व्यवस्थितौ यस्मात्तस्मादित्यर्थः।।७५।।

उक्तरीत्या वाच्यार्थयोस्संसर्गाभावेऽपि लक्ष्यार्थयोरविरुद्धयोस्संसर्गः किं न स्यादित्याशङ्क्य श्लोकेनोत्तरमाह—**अपास्तेत्यादिना**। तयोस्तत्त्वं पादार्थयोरर्थौ तदर्थो तयोर्लक्षणभूतयोः निष्ठापर्यवसानं लक्ष्यभूत आत्मा द्वित्वपारोक्ष्यवर्जितोऽखण्डैकरसः केवलस्तत्कथं प्रकृत्यर्थयोर्नीलोत्पलवद्विभागेनाप्रतीतौ संसर्गस्स्यादिति भावः। विभागेनाप्रतीतिरपि कुत इत्याह—**न चाद्वितीय इति**। अद्वितीयं तत्पदलक्ष्यं ब्रह्म न प्रत्यगात्मानं विना स्वरूपं लभते। तथा सत्यद्वितीयत्वायोगात् आत्मा च त्वं पदलक्ष्यो नित्यसिद्धचैतन्यज्योतिषा तत्पदलक्ष्येण बिना स्वरूपं न लभते। तथा सति नित्यापरोक्षचिद्रूपत्वायोगात् तदेवं विभागेनाप्रतीतेरखण्डैकार्थनिष्ठत्वमेव तत्त्वं पदयोरित्यर्थः।।७६।।

उक्तमेवार्थं प्रश्नपूर्वकं विशदयति—**अत्राहेत्यादिना**। तदेव कुत इत्याकाङ्क्षायामहङ्कारोपाधिकं यथा सद्वितीयत्वं तथाहङ्काराभावोपाधिकमेव तदर्थे पारोक्ष्यं तेनोपाधिकत्वा-

---

१ व्युत्थितौ— "लक्ष्यार्थमात्रोपस्थापकौ"। (सारार्थः)

पारोक्ष्यं यत्तदर्थे स्यात्तद्धेयमहमर्थवत्।
प्रतीचेवाहमोऽभेदः पारोक्ष्येणात्मनोऽपि मे।।७७।।

कथं पुनस्तदर्थोऽद्वितीयलक्षणः प्रत्यगात्मोपाश्रयं सद्वितीयत्वं दुःखित्वं निरन्वयमपनुदतीति। उच्यते। न चैतयोर्निवर्तकनिवर्त्यभावं वयं ब्रूमः। कथं तर्हि? त्वमर्थे प्रत्यगात्मनि प्रागनवबुद्धाद्वितीयता साऽनेनावबोध्यते। अतोऽनवबोधनिरासेन तदुत्थस्य सद्वितीयत्वस्य त्वमर्थस्थस्य, परोक्षत्वस्य च तदर्थस्थस्य निरसनान्न वैयधिकरण्यादिचोद्यस्यावसरोऽस्तीति। तदिदमभिधीयते–

तत्त्वमर्थेन संपृक्तो नानात्वं विनिवर्तयेत्।
नापरित्यक्तपारोक्ष्यं त्वं तदर्थं सिसृप्सति।।७८।।

कस्मात्पुनः कारणात्तदर्थोऽद्वितीयलक्षणस्त्वमर्थेन प्रत्यगात्मना पृथगर्थः सन्नविद्योत्थं सद्वितीयत्वं निहन्तीति। उच्यते। विरोधात्।

---

दुभयमपि हेयमेवेत्यत आह—**प्रतीचेवेति**। अहमोऽहङ्कारस्य यथा प्रतीचा प्रत्यगात्मना अज्ञाननिबन्धन एवाभेदस्तथा पारोक्ष्येण परमात्मनोप्यभेदस्तन्निबन्धन एवेत्यर्थः।।७७।।

तत्पदार्थसामानाधिकरण्यात्त्वंपदार्थगतदुःखित्वादिकं हेयमित्युक्तं, तदयुक्तं तत्पदस्य त्वं पदार्थबोधकत्वेन तस्मिन्नारोपितसंसारित्वनिवर्त्तकत्वानुपपत्तेः। न हि शुक्तिविषयज्ञानाद्रज्जुसर्पभ्रमो निवर्तते। अथ तत्पदमपि त्वं पदार्थमवबोधयति तर्हि पौनरुक्त्यबुद्धिसङ्कर्यपदान्तवाक्यत्वादिदोषाः प्रादुष्युरित्याक्षिपति—**कथं पुनरिति**। समाधत्ते—**उच्यत** इति। अयमर्थः, त्वमर्थोपाधौ तच्छब्देनाद्वितीयब्रह्मत्वविधानात्तदनवबोधनिवृत्त्या तत्कार्यं संसारित्वमपि निवर्तत इत्येतावद्वयं ब्रूमः—**न त्वनयोः** पदयोस्तदर्थयोर्वा साक्षान्निवर्त्यनिवर्तकभावोऽस्तीति तेन तदुक्तदोषाणां प्रसक्तिरिति—**तत्त्वमर्थेनेति**। तच्चार्थो विधीयमानस्त्वमर्थेनोद्देश्येन तदनवबोधनिवृत्त्या तद्गतं नानात्वं व्यावर्त्तयति। एवं त्वं पदार्थोऽपि अपरित्यक्तपारोक्ष्यलक्षणं विरुद्धधर्मं तदर्थं ब्रह्म नैकत्वेन प्रतिपद्यते। तेन तद्गतमपि पारोक्ष्यं नान्तरीयकतया निवर्त्यत इत्यर्थः।।७८।।

वाक्यस्यैकत्व एव तात्पर्यान्निवृत्तौ तात्पर्याभावादुभयत्र तात्पर्ये वाक्यभेदप्रसङ्गान्निवर्त्तकत्वमनुपपन्नमित्याशङ्क्य वाक्यतात्पर्यैकविषयत्वविरोधा[1]न्नान्तरीयकी दुःखित्वादि-

---

[1] वाक्यतात्पर्यविषयैकत्वविरोधादित्यादिविषयेऽस्मिन् सारार्थकारेणोक्तम्—"तात्पर्यविषयाद्वितीयत्वादिविधाने सति तद्विरोधात्सद्वितीयत्वादिकमर्थादेव निवर्तते। न तु तद्विधाने विध्यपेक्षा येन वाक्यभेदः स्यात्। तदुक्तं—"यश्चार्थादर्थो न स चोदनार्थः।।"

**तदुच्यते–**

**संसारिताद्वितीयेन पारोक्ष्यं चात्मना सह।**
**प्रासङ्गिकं विरुद्धत्वात्तत्त्वंभ्यां बाधनं तयोः।।७९।।**

**तत्त्वमर्थयोस्तु[१] बाधकत्वेऽन्यदपि कारणमुच्यते–**

**अज्ञातपुरुषार्थत्वाच्छ्रौतत्वात्तत्त्वमर्थयोः ।**
**स्वमर्थमपरित्यज्य बाधकौ स्तां विरुद्धयोः।।८०।।**

**एवं तावद्यथोपक्रान्तेन प्रक्रियावर्त्मना न प्रत्यक्षादि-प्रमाणान्तरैर्विरोधगन्धोऽपि संभाव्यते। यदा पुनः सर्वप्रकारेणापि यतमाना नैवेमं वाक्यार्थं संभावयामः[२] प्रत्यक्षादिप्रमाणान्तरविरोधत एव, तस्मिन्नपि पक्ष उच्यते–**

**प्रत्यक्षादिविरुद्धं चेद्वाक्यमर्थं वदेत्क्वचित्।**
**स्यात्तु तद्दृष्टिविध्यर्थं योषाग्निवदसंशयम्।।८१।।**

---

निवृत्तिस्स्यादित्युत्तरश्लोकेन दर्शयति—**कस्मादित्यादिना।** संसारितांपारोक्ष्ययोः प्रतिपाद्यमानात् द्वितीयेन प्रत्यक्त्वेन च विरुद्धत्वादेकत्वपराभ्यां तत्त्वं पदाभ्यां तयोर्बाधनं नान्तरीयकं स्यादित्यर्थः।।७९।।

विरुद्धत्वाच्चेत्संसारित्वपारोक्ष्ययोस्तत्त्वमर्थाभ्यां बाधनं तर्हि विरुद्धत्वाविशेषात् तत्त्वमर्थयोरबाध्यत्वमितरयोर्बाधकत्वं किं न स्यादित्याशङ्क्य तयोरेव बाधकारणत्व-मुत्तरश्लोकेन उच्यत इत्याह—**तत्त्वमिति।** तत्त्वमर्थयोरन्योन्यविशेषणविशेष्यस्याज्ञातत्वे सति पुरुषार्थत्वेन श्रुतितात्पर्यविषयत्वादितरयोस्तु तद्विपरीतत्वात्तत्त्वमर्थयोस्तत्त्वमर्थ-मन्योन्यविशेषणविशेष्यभावलक्षणमपरित्यज्य तद्विरोधिनोः पारोक्ष्यदुःखित्वयोर्बाधकाविति युक्तमित्यर्थः।।८०।।

तत्त्वंपदार्थयोर्लक्षणावृत्त्या बोधकत्वेन प्रत्यक्षादिविरोध इत्युक्तम्। इदानीं प्रत्यक्षादिविरोधमभ्युपगम्य प्रसंख्यानपरतां[३] ये न मन्यन्ते तन्मतमुपन्यस्यति निराकरणाय—**एवं तावदिति।।८१।।**

---

१ ननु विनिगमनाविरहात्सद्वयत्वपारोक्ष्याभ्यामेवापरोक्षत्वाद्वयत्वयोः बाधोऽस्त्वित्याशङ्क्या-पूर्वत्वादिना श्रुतितात्पर्यविषयत्वादद्वयापरोक्षत्वयोरेव बाधकत्वं नेतरयोरित्याशयेनाह तत्त्वमर्थयोरिति''। (सारार्थः)

२ न सम्भावयामः— ''इति ये वदन्तीति शेषः''। (सारार्थः)

३ **प्रसङ्ख्यानः**—तत्त्वज्ञानेन स्वरूपनिर्णयः। फलन्त्वस्य देहादावात्मबुद्धिपरित्यागः, रूपादिविषये सङ्कल्पाभिलाषादेः परित्यागः। विस्तारस्तु–न्या.द.भा., ४.२.१, २, ४६।

**यदा तु तत्त्वमस्यादिवाक्यं सर्वप्रकारेणापि विचार्यमाणं न क्रियां कटाक्षेणापि वीक्षते सदा प्रसंख्यानादिव्यापारो दुस्संभाव्य इति। तदुच्यते–**

**वस्त्वेकनिष्ठं वाक्यं चेन्न तस्य स्यात्क्रियार्थता।**
**वस्तुनो ह्येकरूपत्वाद्विकल्पस्याप्यसंभवः।।८२।।**

**भिन्नविषयत्वाच्च न प्रमाणान्तरविरोधः। कथम्? उच्यते–**

**अपूर्वाधिगमं कुर्वत्प्रमाणं स्यान्न चेन्न तत्।**
**न विरोधस्ततो युक्तो विभिन्नार्थावबोधिनोः।।८३।।**

**य एवमपि भिन्नविषयाणां विरोधं वक्ति सोऽत्रापि विरोधं ब्रूयात्–**

**नायं शब्दः कुतो यस्माद्रूपं पश्यामि चक्षुषा।**
**इति यद्वत्तथैवायं विरोधोऽक्षजवाक्ययोः।।८४।।**

**प्रमाणानां सतां न विरोधः श्रोत्रादीनामिव भिन्नविषयत्वात्।**

---

अस्तु तर्हि तत्त्वमस्यादिवाक्यस्यापि प्रमाणान्तरविरुद्धार्थत्वात् प्रसंख्यानद्वारेण वस्तुनिष्ठत्वमिति। तत्राह—**यदेति**। उपक्रमोपसंहारादि[१]भिर्विचार्यमाणं केवल-वस्तुनिष्ठत्वात् तस्य च वस्तुनः कूटस्थत्वेन क्रियां प्रत्ययोग्यत्वात् कूटस्थतया नित्यसिद्ध[२]मुपासनक्रियासाध्यं वा तदिति विकल्पस्याऽप्यसंभवान्न तत्त्वमस्यादिवाक्यं प्रसंख्यानादिविधिशेष इत्यर्थः।।८२।।

प्रमाणान्तरविरोधमभ्युपगम्यैतदुक्तं (प्रसंख्यानादिविधिशेष इत्यर्थः), सोऽपि नास्तीत्याह—**भिन्नेति। न चेन्न तदिति**। अयमर्थः, अपूर्वाधिगमं न करोति चेत् अनुवादस्मृत्यादिवत् प्रमाणमपि तन्न भवतीति।।८३।।

भिन्नविषययोः प्रमाणयोः परस्परवार्तानभिज्ञयोर्विरोधो नास्तीत्युक्तम्। तदेतदृष्टान्तेन स्पष्टयितुमाह—**य एवमपीति**।।८४।।

---

१ "उपक्रमोपसंहारावभ्यासापूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये।।" इति

२ कूटस्थतया नित्यसिद्धम्—विषयेऽस्मिन् सारार्थकारः "न ह्यखण्डैकरसे एकरूपे कूटस्थे निर्धर्मके वस्तुनि सिद्धसाध्याद्यनेकधर्मकल्पनावकाशः।"

**ययोश्चाभिन्नविषयत्वं तयोराखुनकुलयोरिव प्रतिनियत एव बाध्यबाधकभावः स्यात्। अतस्तदुच्यते–**

**प्रत्यक्षं चेन्न शाब्दं स्याच्छाब्दं चेदक्षजं कथम्।**
**प्रत्यक्षाभासः प्रत्यक्षे ह्यागमाभास आगमे।।८५।।**

**न च प्रतिज्ञाहेतुदृष्टान्तन्याय इह संभवति शब्दादीनां प्रत्येकं प्रमाणत्वादत आह–**

**स्वमहिम्ना प्रमाणानि कुर्वन्त्यर्थावबोधनम्।**
**इतरेतरसाचिव्ये प्रामाण्यं नेष्यते स्वतः।।८६।।**

---

सैवेयं ज्वालेति प्रत्यक्षं प्रभावित[१]तिलिङ्गानुमानात् बाध्यते तथा पदार्थत्वेनांशे-रुष्णत्वानुमानं[२] प्रत्यक्षेण बाध्यते तथा "न हिंस्याद्भूतानी" त्यागमो"ऽग्नीषोमीयं पशुमालभेते" त्यागमान्तरेण बाध्यते, तत्कथं प्रमाणानां विरोधाभाव इत्याशङ्क्य द्वयोर्यजमानयोरेकपदार्थोपाधौ विभिन्नस्वभावावलम्बनयोर्वाध्यबाधकभावेऽपि न द्वयोः प्रामाण्यं बाध्यस्याभासत्वात् बाधकस्यैव प्रमाणत्वादित्येतदाह—**प्रमाणानामित्यादिना। प्रत्यक्षं चे**दिति। अयमर्थः यत्प्रत्यक्षमसिद्धं न तच्छब्देन बोध्यते बाध्यते वा तेन न प्रमाणानां विरोधः ययोः पुनर्बाध्यबाधकभावः, तयोरन्यतरस्यैव प्रमाणत्वमितरस्याभास-त्वात् यथेयं शुक्तिरिति प्रत्यक्षेऽभ्युपगते सतीदं रजतमिति ज्ञानं प्रत्यक्षाभासस्तथै-तस्मिन्नागमेऽभ्युपगम्येत तेनापहतविषयोऽपर आगमाभास एवमागमप्रत्यक्षयोः प्रत्यक्षा-नुमानयोश्च बाध्यबाधकभावप्रसिद्धिर्नेतव्येति।।८५।।

ननु तत्त्वमस्यादिवाक्यं गौणार्थं प्रत्यक्षादिविरुद्धार्थत्वा"दादित्यो यूपो"[३] "यजमानः प्रस्तर"[४] इत्यादिवाक्यवदित्यनुमीयत इत्याह—**न चेति**। "आदित्यो यूप" इत्यादा-वादित्यादिपदार्थस्य पशुबन्धनायोग्यस्य यूपे पशुं बध्नातीति शेषिवाक्यविरोधाद-प्रामाण्यम्, न तु प्रमाणान्तरविरोधात्। प्रमाणानां स्वतः प्रामाण्यात् प्रमाणान्तरसंवादान-पेक्षत्वात् स्वार्थावबोधनमात्रेणैव प्रामाण्योपपत्तेः। अन्यथाऽनवस्थाप्रसङ्गाच्चेत्यर्थः।।८६।।

---

१ प्रभाविततिलिङ्गा—अत्र पाठः सम्यक् अस्तीति भाति। चन्द्रिका टीकायामपि पाठः एवमेव वर्तते। अतः हस्तलिखितपुस्तकानुसारेणाक्षराणां समावेश एव मया कृतः। विततिः विस्तार इति भावः।

२ अग्निरनुष्णः पदार्थत्वात् जलवत् इति अनुमानमपि प्रत्यक्षेण बाध्यते इति भावः।

३ **यूपः**—यज्ञे पशुबन्धनार्हः अष्टकोणसमन्वितः खदिरादिकाष्ठविशेषः।

४ **प्रस्तरः**—दर्भमुष्टिविशेषः।

न च सुखदुःखादिसंबन्धोऽवगत्यात्मनः प्रत्यक्षादिप्रमाणैर्गृह्यते येन विरोधः प्रत्यक्षादिप्रमाणैरुद्घाट्यते। कथम्? शृणु–

दुःखितावगतौ[1] चेत्स्यान्न प्रमीयेत सात्मवत्।
कर्मण्येव प्रमा न्याय्या न तु कर्मर्यपि क्वचित्।।८७।।

अभ्युपगमेऽपि च प्रसंख्यानशतेनापि नैव त्वं संभावित-दोषान्मुच्यसे। अत आह–

प्रमाणबद्धमूलत्वाद्दुःखित्वं केन वार्यते।
अग्न्युष्णवन्निवृत्तिश्चेन्नैरात्म्यं ह्येति सौगतम्।।८८।।

अथ मतम्–

निराकुर्यात्प्रसंख्यानं दुःखित्वं चेत्स्वनुष्ठितम्।
प्रत्यक्षादिविरुद्धत्वात्कथमुत्पादयेत्प्रमाम् ।।८९।।

ननु प्रसंख्यानं नाम तत्त्वमस्यादिशब्दार्थान्वयव्यतिरेक-युक्तिविषयबुद्ध्याम्रेडनमभिधीयते तच्चानुष्ठीयमानं प्रमितिवर्धनया

---

आत्मनो दुःखित्वादेः प्रमाणान्तरग्राह्यतामङ्गीकृत्य न तद्विरोधात्तत्त्वमस्यादि-वाक्याप्रामाण्यप्रसक्तिरित्यवोचाम। तदेव नास्तीत्याह—**न च सुखेति। न तु कर्तर्यपीति।** स्वगतधर्मग्राहकत्वे स्वस्य रूपस्यापि धर्मधर्मितया ग्राहकत्वं वक्तव्यम्। तथासति कर्मकर्तृत्वविरोधस्यादित्यर्थः।।८७।।

प्रमाणगम्यत्वाभ्युपगमे चानिर्मोक्षप्रसक्तिस्स्यादित्याह—**अभ्युपगमेऽपीति। नैरात्म्यमिति।** दुःखादिपरिणामस्य परिणामि निवृत्तिव्यतिरेकेणात्यन्तिकनिवृत्त्ययोगान् परिणाम्यात्मनिवृत्तौ शून्यवादः प्रसज्यत इत्यर्थः।।८८।।

अनिराकृत्यैवात्मनः स्वरूपदुःखित्वादिविपरीतरूपप्रमामुत्पाद्य प्रसंख्यानमेव दुःखित्वानिराकरिष्यतीति शङ्कां प्रदर्श्य प्रसंख्यानस्य प्रमाणत्वेऽपि प्रत्यक्षादिविरोधा-न्नैवमिति परिहरति—**अथेत्यादिना**।।८९।।

प्रसंख्यानस्य प्रमोत्पादकत्वमनुपपन्नमिति कथमुच्यते तस्य तत्त्वमस्या-दिवाक्यार्थज्ञानादुपकरणयुक्त्याभासरूपत्वेन प्रमितिवर्धकत्वोपपत्तेः। श्रुतौ च "निदिध्यासितव्य" इत्यात्मदर्शनहेतुत्वेन तस्याङ्गीकारात् भावनाप्रचयस्यावस्तुन्यपि

---

१ दुःखितावगतिश्चेत्– "दुःखिता यद्यवगतिधर्मत्वेन अवगतिरूपात्मतादात्म्यापन्ना स्यात्। (सारार्थः)

**परिपूर्णां प्रमितिं जनयति न पुनरैकाग्र्यवर्धनयेति। यथाऽशेषाशुचिनीडे स्त्रीकुणपे कामिनीति निर्वस्तुकः पुरुषायासमात्रजनितः प्रत्यय इति। तन्न। यतः–**

**अभ्यासोपचयाद्बुद्धेर्यत्स्यादैकाग्र्यमेव तत्।**
**न हि प्रमाणान्यभ्यासात्कुर्वन्त्यर्थावबोधनम्।।९०।।**
**अभ्यासोपचिता कृत्स्नं भावना चेन्निवर्तयेत्।**
**नैकान्तिकी निवृत्तिरस्याद्भावनाजं हि तत्फलम्।।९१।।**

**अपि चाह–**

**दुःख्यस्मीत्यपि चेद्ध्वस्ता कल्पकोट्युपबृंहिता।**
**स्वल्पीयोऽभ्यासजा स्थास्न्वी भावनेत्यत्र का प्रमा।।९२।।**

**ननु शास्त्रात्स्थास्नुत्वं भविष्यति। नैवम्। यथावस्थितवस्तुयाथात्म्यावबोधमात्रकारित्वाच्छास्त्रस्य। न हि पदार्थशक्त्याधानकृच्छास्त्रम्। प्रसिद्धं च लोके–**

---

प्रत्ययदार्ढ्यहेतुत्वदर्शनादित्याशङ्क्य उत्तरश्लोकेन दर्शयति—**नन्वित्यादिना।** मानाभ्यासस्य पदार्थनिश्चयद्वारेण वाक्यार्थविषयासम्भावनाविपरीतभावनालक्षणप्रतिबन्धनिरासेनैवोपयोगान्निदिध्यासनस्य च चित्तविक्षेपप्रतिबन्धनिरासकत्वात् समाहितचेतसश्च प्रमाणसामग्रीतस्स्वत एव प्रमोत्पत्तेः। प्रत्यक्षादेश्चाभ्यासानपेक्षस्य प्रमितिजनकत्वदर्शनान्न साक्षात् प्रसंख्यानस्य प्रमोत्पादकत्वमित्यर्थः।।९०।।

ननु "स यथा क्रतुरस्मिँल्लोके भवति तथेतः प्रेत्य भवती"ति भावनायास्समस्तसांसारिकरूपनिवर्तनेन ब्रह्मरूपताप्राप्तिहेतुत्वं श्रूयत इति। सत्यं, तथापि न तदात्यन्तिकं ज्ञानव्यतिरेकेण तत्राप्यनावृत्तेरसम्भवादित्याह—**अभ्यासेति**।।९१।।

किमु वक्तव्यं न्यायान्तरं दर्शयति—अपि चाहेति।।९२।।

ननु कथं का प्रमेत्यभिधीयते सगुणोपासनाफलत्वेन "न च पुनरावर्तते"[१]

---

१ "अनावृत्तिशब्दात् अनावृत्तिशब्दात्" इति सूत्रव्याख्यानावसरे भगवता भाष्यकारेण "न च पुनरावर्तते" इति श्रुतेः सगुणोपासनपरत्वमेव प्रतिपादितम्। अत्र अनावृत्तिशब्देन अस्मिन् कल्पे मन्वन्तरे वा अनावृत्तिः (आपेक्षिकः) ध्वन्यते। अर्थात् तत्तत् विषयप्रतिपादकेषु "एतेन प्रतिपाद्यमाना इमं मानवमावर्तं नावर्तन्ते" (छा. ४.१५.६) इत्यादिषु श्रुतिषु इह मानवमिति विशेषणादस्मिन् कल्पे ब्रह्मलोकगतानां कल्पान्तरे आवृत्तिर्यत् तेषां ईश्वरोपास्ति

भावनाजं फलं यत्स्याद्यच्च स्यात्कर्मणः फलम्।
न तत्स्थास्न्विति मन्तव्यं द्रविडेष्विव सङ्गतम्।।९३।।

यद्यपि प्रत्यक्षादिप्रमाणोपात्तमात्मनो दुःखित्वम्, तथापि तत्त्वमस्यादिवाक्योत्थप्रत्यय एव बलीयानिति निश्चयोऽव्यभिचारि-प्रामाण्यवाक्योपात्तत्वात्प्रमेयस्य च स्वत एव निर्दुःखित्वासिद्धेः। प्रत्यक्षादेस्तु सव्यभिचारित्वात्संभावनायाश्च पुरुषपरिकल्पना-मात्रावष्टम्भत्वाच्चेति—

निर्दुःखित्वं स्वतसिद्धं प्रत्यक्षादेश्च दुःखिता।
को ह्यात्मानमनादृत्य विश्वसेद्वाह्यमानतः।।९४।।

संबन्धार्थ एव—

---

इत्यनावृतेश्श्रुयमाणत्वादित्याशङ्क्य नास्त्यकृतःकृतेनेत्यादि। श्रुतिसहकृतस्य भावनाजन्य-त्वेनानित्यत्वानुमानस्य बलवत्तरत्वादनावृत्तिश्रुतेश्च ज्ञानद्वारापेक्षयापि सम्भवान्नैवमिति परिहरति—**नन्वित्यादिना**।।९३।।

प्रमाणानां परस्परविरोधाभावाद्दुःखित्वस्य च मानान्तरायोग्यत्वात् तत्त्वमस्यादि-वाक्यस्य मानान्तराविरुद्धार्थतया प्रसंख्यानपरत्वं निराकृतम् इदानीमभ्युपगम्यापि दुःखित्वस्य प्रत्यक्षादिविरुद्धतां तत्त्वमस्याद्यागम एव मानान्तरबाधको संभाविताशेष-पुरुषदोषत्वात् अदुःखिताप्रत्यक्षादेश्च बुद्ध्याद्युपाधिसम्बन्धात्मगोचरतया निरुपाधिकात्म-विषयत्वाभावात् सौषुप्तिकात्मनि स्वयंप्रकाशमाने चाप्रतीतेर्दुःख्यस्मीति च प्रतीतेभ्रान्तित्वो-पपत्तेश्चेत्याह—**यद्यपीत्यादिना**। तर्हि प्रत्यक्षादिसिद्धस्यैव प्रावल्यं किं न स्यादित्यत आह—**को हीति**।।९४।।

सम्बन्धग्रन्थोक्तार्थे श्रुतिप्रदर्शनायोत्तरश्लोक इत्याह—**सम्बन्धेति**। प्रत्यक्षबोधेन प्रत्यगात्मनि श्रुतेः प्रवृत्तिः "पराञ्चिखानी"त्येतस्माद्वचसो गम्यते "तस्मात् पराङ्पश्यति

---

विना पञ्चाग्निविद्याश्वमेधदृढब्रह्मचर्यादिसाधनैर्ये गतास्तेषां तत्त्वज्ञाननियमाभावादावृत्तिः स्यात्। ये खलु दहरादीश्वरोपास्त्या गतास्तेषां सगुणविद्याफलक्षयेऽपि निरवग्रहेश्वरानुग्रह-लब्धात्मज्ञानान्मुक्तिरिति नियमः। मुख्यमोक्षस्तु "सम्पद्याविर्भावः स्वेन शब्दात्" (ब्र.सू., ४.४.१) इति सूत्रे "केवलेनैवात्मनाविर्भवति न धर्मान्तरेणेति, कुतः स्वेन रूपेणाभि-निष्पद्यत" इति "स्व" शब्दात् प्रतिपादितम्। "योऽत्राभिनिष्पद्यते इत्युक्तः स सर्वबन्ध-विनिर्मुक्तः शुद्धेनैवात्मनाऽवतिष्ठते" इति "मुक्तः प्रतिज्ञानात्" (ब्र.सू., ४.४.२) इति सूत्रे भगवता भाष्यकारेणोक्तत्वाच्च।

**अपि प्रत्यक्षबाधेन प्रवृत्तिः प्रत्यगात्मनि।**
**'पराञ्चि खानी' त्येतस्माद्वचसो गम्यते श्रुतेः[१]।।९५।।**

**अभ्युपगम्यैवमुच्यते न तु प्रमाणं सत्प्रमाणान्तरेण विरुध्यत इत्यसकृदवोचाम। यत्रापि वाक्यप्रत्यक्षयोर्विरोधाशङ्का तत्रापि पुरुषमोहवशादेव सा जायते न तु परमार्थत इति। अत आह–**

**प्रमां चेज्जनयेद्वाक्यं प्रत्यक्षादिविरोधिनीम्।**
**गौणीं प्रत्यक्षतां ब्रूयान्मुख्यार्थासंभवाद्बुधः।।९६।।**

**तस्यार्थस्य सुखप्रतिपत्त्यर्थमुदाहरणम्–**

**अग्निस्सम्यगधीतेऽसौ जहासोच्चैश्च मञ्चकः।**
**यथा तद्वदहंवृत्त्या लक्ष्यतेऽनर्हयापि सः।।९७।।**

**कस्मात्पुनः कारणात्साक्षादेवात्मा नाभिधीयते किमनया**

---

नान्तरात्मन्नि''ति प्रत्यगात्मनः प्रत्यक्षाद्ययोग्यत्वकथनादित्यर्थः।।९५।।

नन्वादित्यो यूप इत्यादौ प्रत्यक्षादिविरोधे श्रुतेर्गौणार्थत्वमभ्युपगतमेवेति। तत्राह— **अभ्युपगम्येति**। यूपशब्देन खदिरादिप्रकृतिः पशुबन्धनयोग्यः पदार्थोऽभिधीयते। तस्यादित्यत्वं योग्यतालक्षणसामग्र्यभावान्मुख्ययावृत्त्या वक्तुं न शक्यत इति। तत्र गौणीवृत्तिराश्रिता वाक्यार्थप्रतिपत्तये, न तु मानान्तरविरोधात्। मानान्तरविरोधाभावेऽपि ''मासमग्निहोत्रं जुहोती'' त्यत्र वाक्यार्थप्रतिपत्तये गौण्यावृत्तेराश्रयणादेकश्चन्द्रो नायं सर्प इति चागमविरोधद्विचन्द्रादिविषयज्ञानस्य प्रत्यक्षाभासत्वदर्शनात् तत्र प्रत्यक्ष-शब्दस्य गौणत्वादागमस्यैव तात्पर्यतः प्रवृत्तस्योत्तरकालीनत्वान्निर्दोषत्वाच्च प्रत्यक्षादिभ्यः प्रावल्यमित्यर्थः।।९६।।

आगमस्य मानान्तरविरोधात् किन्तु पदमात्र तत्तत्प्रयोगेषु पदार्थग्राहकप्रमाणान्तर-विरोधान्मुख्यार्थतां परित्यज्य पदार्थान्तरान्वययोग्यं पदार्थं वाक्यार्थप्रतिपत्यर्थं गौण्या वृत्त्याऽभिधीयत इत्युक्तम्। तदेवोदाहरणप्रदर्शनेन दार्ष्टान्तिके दर्शयतीत्याह—**तस्यार्थ-स्येति। अहं वृत्त्येति**। अहं शब्दस्याप्युपलक्षणम्।।९७।।

आत्मनो मुख्यवृत्त्याभिधेयकं पदमस्ति न वा। नास्ति चेत् न लक्ष्यत्वं

---

१ ''प्रत्यक्षमुपमृद्यैव तत्त्वमस्यादिवाक्यस्य प्रत्यगात्मनि प्रवृत्तिरिति ''पराञ्चि खानि'' इत्यादिश्रुतिवाक्यादवगम्यते।... तस्मात्प्रत्यक्षादेरात्मनि प्रवृत्तिसंभावनापि नास्तीत्याशयः''। (सारार्थः)

कल्पनयेति तत्राह–

त्वमित्येतद्विहायान्यन्न वर्त्मात्मावबोधने।
समस्तीह त्वमर्थोऽपि गुणलेशेन वर्तते।।९८।।

कस्मात्पुनर्हेतोर्ह्यहमित्येतदपि गुणलेशेन वर्तते, न पुनः साक्षादेवेति, विधूतसर्वकल्पनाकारणस्वाभाव्यादात्मनः, अत आह–

व्योम्नि धूमतुषाराभ्रमलिनानीव दुर्धियः।
कल्पयेयुस्तथा मूढाः संसारं प्रत्यगात्मनि।।९९।।

ननु सर्वकल्पनानामप्यात्मन्यत्यन्तासंभवे समानेऽहंवृत्तौ कः पक्षपाते हेतुर्येन वृत्त्यन्तराणि विधूयाहंवृत्त्यैवात्मोपलक्ष्यत इति। उच्यते–

चिन्निभेयमहंवृत्तिः प्रतीचीवात्मनोऽन्यतः।
पूर्वोक्तेभ्यश्च हेतुभ्यस्तस्मादात्मऽनयोच्यते।।१००।।

---

स्वशब्दस्यान्यपदलक्ष्यत्वदर्शनात्। अस्ति चेत् किमनया लक्षणयेत्याशङ्क्योत्तरेणोत्तरं दर्शयति—**कस्मादित्यादिना**। मुख्यार्थसम्बन्धो विवक्षितवाक्यार्थप्रतिपत्त्युपयोगित्वं च लक्ष्यप्रयोजकं, न तु वाच्यत्वम्। उक्त प्रयोजकभावादेव वाच्यत्वाभावापराधेन लक्ष्यताभावादर्शनादात्मनश्च "यतो वाचो निवर्त्तन्ते" इत्यादिश्रुतेः जात्याद्यभावाच्च निरूपाधिकस्य वाच्यत्वानुपपत्तेस्त्वमहमादिशब्दवाच्यप्रमातृसाक्षितया तत्सम्बन्धस्य भावादभीष्टसर्वप्रत्यक्तमत्वप्रतिपत्तिप्रयोजनाभावत्वमहमादिशब्दवाच्यान्तःकरणोपाधावेव स्फुटतरव्यवहारयोग्यत्वात् तद्वाचकशब्दैः प्रत्यक्षावद्योतकैरात्मा लक्ष्यत इत्यर्थः।।९८।।

त्वमहमादिपदानां प्रत्यङ्मात्रवाचित्वात्साक्षादेवात्माभिधीयताम्। किं तत्रापि लक्षणां कल्प्यत इत्याशङ्क्य वाच्यवाचकभावादिकल्पनानां कारणभूतषष्ठी जातिगुणक्रियादीनां तत्र वस्तुतोऽभावादित्याह—**कस्मात्पुनरित्यादिना**।।९९।।

अहङ्कारस्येव देहघटादेरपि आत्माधिष्ठाने कल्पितत्वाविशेषात् तद्वाचकैरपि शब्दैरात्मा कस्मान्न लक्ष्यत इत्याशङ्क्योत्तरमाह—**नन्वित्यादिना**। अहङ्कारस्यात्मविवर्त्ततया तप्तायःपिण्डवच्चिन्मयतया देहघटादिभ्यः प्रत्यक्तया प्रतीतेरात्मानुकारित्वात् आत्मनस्समनन्तरं तस्यैव प्रत्यक्त्वेन प्रतीतेरात्मना वाविनाभावमित्यादि पूर्वोक्तहेतुभ्यश्च तच्छब्दैरेवात्मा लक्ष्यत इत्यर्थः।।१००।।

**वृत्तिभिर्युष्मदर्थाभिर्लक्ष्यते चेद्दृशिः परः।**
**अनात्मत्वं भवेत्तस्य वितथं च वचः श्रुतेः।।१०१।।**

**यथोक्तेन–**

**अनेन गुणलेशेन ह्यत्यहंकर्तृकर्मया।**
**लक्ष्यतेऽसावहंवृत्त्या नाञ्जसात्राभिधीयते।।१०२।।**

**नाञ्जसात्राभिधीयत इति को हेतुरिति चेत्–**

**[१]षष्ठीगुणक्रियाजातिरूढयः शब्दहेतवः।**
**नात्मन्यन्यतमोऽमीषां तेनात्मा नाभिधीयते।।१०३।।**

**यदि शब्दोऽभिधानाभिधेयत्वसंबन्धाङ्गीकारेण नात्मनि वर्तते, कथं शब्दादहं ब्रह्मास्मीति सम्यग्बोधोत्पत्तिः। उच्यते–**

---

विपक्षे दोषमाह—**वृत्तिभिरिति।** घटादीनामनात्मत्वप्रसिद्धेस्तद्वृत्तिभिस्तदभिधानैश्चात्मनो लक्ष्यत्वे तद्वदनात्मत्वस्यैव प्रतीतिप्रसङ्गात्। ब्रह्मणः आत्मत्वप्रतीत्यभावादेकत्वप्रतिपादकानां तत्त्वमस्यादिवाक्यानां वैयर्थ्यमपुरुषार्थपर्यवसायित्वम् स्यादित्यर्थः।।१०१।।

उक्तार्थनिगमनपरं श्लोकमाकाङ्क्षितपदं पूरयन्नवतारयति—**यथोक्तेनेति।** अहङ्कर्तारं प्रमातारं तत्कर्म च देहघटादिकमतीत्य या वर्तते। कूटस्थचिन्निभा याहंवृत्तिस्तयाऽसौ प्रत्यगात्मा लक्ष्यते। साक्षात्तस्य वाच्यत्वाभावादित्यर्थः।।१०२।।

वाच्यत्वाभावे हेतुं दर्शयितुमाह—**नाञ्जसेति।** षष्ठी[१] नृपहय इत्यादिक्रियावाचक इत्यादिः। जातिर्गौरित्यादिः। रूढिराकाशश्चन्द्रइत्यादिः। सा तेषां शब्दप्रवृत्तिनिमित्तामन्यतमस्याप्यात्मन्यसङ्गत्वादक्रियत्वादसामान्यत्वात्प्रमाणान्तरायोग्यया अगृहीतसम्बन्धत्वाच्चाभावान्नाभिधेय आत्मेत्यर्थः।।१०३।।

आत्मनः पदवाच्यत्वाभावे पदविषयत्वाभावात् वाक्यविषयत्वमपि न स्यादित्याशङ्क्य परिहरति—**यदीत्यादिना।** असत्ये आरोपितरूपे वर्त्मन्युपाये स्थित्वा निष्ठाय निरूपायं साक्षात्सम्बन्धोपायरहितमुपेयते प्राप्यते। यथा शाखाग्रे चन्द्रः यथा

---

१ षष्ठीति। तद्वाच्यः सम्बन्ध इत्यर्थः। क्वचित्षष्ठ्यर्थः सम्बन्धः शब्दप्रवृत्तिनिमित्तं यथा राजपुरुष इत्यादिः। क्वचिद्गुणयोगो यथा शुक्लः पट इत्यादिः। क्वचित्क्रियायोगो यथा पाचक इत्यादिः। क्वचिज्जातियोगो यथा गौरश्वः पुरुष इत्यादिः। (इति चन्द्रिकायाम्)

**असत्ये वर्त्मनि स्थित्वा निरुपायमुपेयते।**
**आत्मत्वकारणाद्विज्ञो गुणवृत्त्या विबोधिताः।।१०४।।**

**कथं पुनरभिधानमभिधेयेनानभिसंबद्धं सदनभिधेयेऽर्थे प्रमां जनयतीति। शृणु, यथानभिसंबद्धमप्यनभिधेयेऽर्थेऽविद्यानिराकरणमुखेन बोधयतीत्याह–**

**शयानाः प्रायशो लोके बोध्यमानाः स्वनामभिः।**
**सहसैव प्रबुध्यन्ते यथैवं प्रत्यगात्मनि।।१०५।।**
**न हि नाम्नास्ति संबन्धो व्युत्थितस्य शरीरतः।**
**तथापि बुध्यते तेन यथैवं तत्त्वमित्यतः।।१०६।।**

**यथा च[1]–**

---

वा रेखाभिः सत्या वर्णाः तथा विज्ञेयत्वाभावे कथं तदवगतिरित्याशङ्क्य अव्यवहितस्वयंप्रकाशात्मस्वभावत्वादारोपितोपायैरपि तत्प्रतिपत्तिस्संभवतीत्याह—**आत्मत्वेति**।।१०४।।

उपायमात्रस्योपेयेन सत्यसम्बन्धरहितस्य बोधकत्वेऽप्यभिधानस्यागृहीतसम्बन्धस्य बोधकत्वं क्वापि न दृश्यत इति विशेषमाशङ्क्य परिहरति—**कथं पुनरित्यादिना**।।१०५।।

ननु नाम्नां पूर्वं सम्बन्धस्मरणयोरभावात् तद्भावे च प्रबोधे श्रवणाच्च प्रबोध इति परस्पराश्रयत्वप्रसङ्गादस्मर्यमाणसम्बन्धस्यापि बोधकत्वं सुषुप्तावङ्गीकर्तव्यम्। तस्माद्वाचकशब्दस्य वाच्य एव सम्बन्धज्ञानापेक्षा न लक्ष्ये। अन्यत्र गृहीत सम्बन्धस्यापि गङ्गादिशब्दस्य सम्बन्धग्रहं विना तीरादौ बुद्धिजनकत्वदर्शनात्।,शबले गृहीतसम्बन्धानामपि तत्त्वमस्यादिशब्दानां लक्षणयाऽखण्डैकरसपर्यवसायित्वं नानुपपन्नमिति भावः।।१०६।।

भवत्वेवं शब्दादात्मनि ज्ञानोत्पत्तिस्तथापि निवर्त्यनिवर्तकज्ञानाश्रयत्वादात्मनस्सविकारित्वं प्राप्तमित्याशङ्क्य दृष्टान्तेनैतन्निराचष्टे—**यथेति**। अमूर्तत्वान्निरूपममाकाशमिति बोधो नीलोत्पलदलवन्नीलमित्यबोधस्तौ यथा नभो अस्पृष्ट्वा अविकृ[1]त्यैव नभो बाध्यबाधकौ स्याताम्। कथं तर्हि तयोरप्यन्तरेण विषयगतमतिशयं

---

१ विकारमकृत्वैव इति चन्द्रिकाकारः।

**बोधाबोधौ नभोऽस्पृष्ट्वा कृष्णधीनीडगौ यथा।**
**बाध्येतरात्मकौ स्यातां तथेहात्मनि गम्यताम्।।१०७।।**

**'असत्ये वर्त्मनि स्थित्वा' इत्युपश्रुत्यातिविस्मितो महता संभ्रमेण कश्चिच्चोदयति–**

**नासन्नुपायो लोकेऽस्ति परमार्थविनिश्चये।**
**नासल्लिङ्गाद्धि बाष्पादेः कश्चिदग्निं प्रपद्यते।।१०८।।**
**इत्येवं[1] चोदयेद्योऽपि जोषयेत्तं घटादिना।**

---

निवर्त्यनिवर्त्तकभाव इत्याशङ्क्याह —**कृष्णधीनीडगाविति।**[2] कृष्णाकाराधी: कृष्णधी: तस्या नीडमालम्बनं विषय इति यावत्। तद्गतौ तद्विषययौ रूपवदरूपवच्चेति विरुद्धाकाराकारितौ तावन्मात्रेणैव निवर्त्यनिवर्तकौ यथा तथा दार्ष्टान्तिकेऽपि द्रष्टव्यमित्यर्थ:।।१०७।।

यस्य यद्रूपं मिथ्या तस्य तत्प्रयुक्तकार्यकरत्वं नास्ति यथा वाष्पधूमस्य धूमत्वाभावान्न तत्प्रयुक्ताग्निगमकत्वमेवं श्रुत्याचार्यादे: स्वरूपेण मिथ्यात्वन्नतु प्रयुक्तबोधहेतुत्वसम्भव इत्याह—**नासन्निति**।।१०८।।

परिहरति—**इत्येवमिति।**[3] ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य घटपटादे: प्रपञ्चस्य मायामयत्वाङ्गीकारात् तस्य चार्थक्रियाकारित्वे तवाप्यविवादात्तुच्छतायाश्च त्वयैव मयाप्यनङ्गीकारात्। घटादिनेव दृष्टान्ते न प्रीणातु भवानित्यर्थ:। दृष्टान्तोऽप्यसम्प्रतिपन्न इति मन्वान: प्रत्याह—**सदसद्भ्यामिति।** स हि घटादिस्सन्नास्तीत्यपि दर्शनान्नाप्यसम्भवप्रतियोगित्वात्। अस्तु तर्हि क्रमेण सत्त्वमसत्त्वं चेति तत्राह—**पर्यायश्च न चानयोरिति।** यस्मिन्धर्मिणि सत्त्वासत्त्वयो: क्रमसमावेश इष्यते तस्य सत्त्वेऽसत्त्वे च न तयोस्समावेशसम्भव:। वैयर्थ्यात्मविरुद्धत्वाच्च। उभयविलक्षणत्वे चानिर्वचनीयता-

---

१ एवं प्रमातृशास्त्रादीनामज्ञानकल्पितत्वेन मिथ्यात्वेऽपि अर्थक्रियाकारित्वरूपसत्यत्वाङ्गीकारादुपेयप्रतिपत्तिहेतुत्वं नानुपपन्नमित्याशयेन परिहरति" (सारार्थ:)

२ कृष्णधी नीडनाविति पाठ: हस्तलिखितपुस्तके लभ्यते।

३ "गौणमिथ्यात्मनोऽसत्त्वे पुत्रदेहादिवाधनात्।
सद्ब्रह्मात्माहमित्येवं बोधे कार्यं कथं भवेत्।।
अन्वेष्टव्यात्मविज्ञानात्प्राक् प्रमातृत्वमात्मन:।
अन्विष्ट: स्यात्प्रमातैव पाप्मदोषादिवर्जित:।।
देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन कल्पित:।
लौकिकं तद्वदेवेदं प्रमाणं त्वाऽऽत्मनिश्चयात्।। (ब्र.सू.शां.भा. १.१.४)

सदसद्भ्यां विभक्तोऽसौ पर्यायश्च न चानयोः।।१०९।।

एवं कुचोद्यमुन्मूल्याथेदानीं प्रकृतमभिधीयते। प्रकृतं चानभिधेये कथमभिधाश्रुतिरविद्याध्वंस्यात्मनि ज्ञानं जनयतीति। तत्रैव कारणान्तरमुच्यते–

अतिदुरस्थोऽप्रबोधोऽत्र ह्यात्मैवास्य प्रबुद्धता।
निमित्तमात्राद्ध्येत्येषा नासाग्रे बदरं यथा।।११०।।

अनुदितानस्तमितकूटस्थबोधमात्रस्वाभाव्यादात्मनो दुस्संभाव्योऽविद्यासद्भाव इति चेन्न। अविद्याप्रसिद्ध्यैव तत्सद्भावसिद्धेरुलूकनिशावदित्यत इदमुच्यते–

अहो धार्ष्ट्यमविद्याया न कश्चिदतिवर्तते।
प्रमाणं वस्त्वनादृत्य परमात्मेव तिष्ठति।।१११।।

यस्मादविद्याप्रसिद्ध्यैवाविद्यासद्भावसिद्धिः अतः आत्मवस्तुवृत्तानुरोधेन न कथंचनापि तत्संभावनाप्यस्ति; यत आह–

---

बलादापतति वाष्पधूमादेस्त्वव्याप्तत्वादेवागमकत्वं प्रमेयत्वादिवन्नत्वसत्यत्वादिति भाव:।।१०९।।

**काराणान्तरमिति**। अविद्यानिरासिज्ञानोत्पादकशब्दशक्त्यालोचनया अगृहीतसम्बन्धस्यापि निवर्तकं पूर्वमुदितमिदानीं निर्वर्त्याविद्यास्वभावालोचनयापि तदुपपन्नमित्युच्यत इत्यर्थः। अथ तामेवोपपादयति—**आत्मैवेति**। अनुदितानस्तमितप्रकाशैकस्वभाव आत्मन्यबोधोप्रकाशस्वभावस्सवितरीव तमः प्रतिभासव्यतिरेकेण वस्तुतोऽनुपपन्नः। तेन यत्किञ्चिन्निमित्तमासाद्य नासाग्रस्थवदरमिवावगच्छतीत्यर्थः।।११०।।

उक्तयुक्तिबलान्माभूदात्मन्यविद्येत्याशङ्क्य प्रसिद्धत्वात् तस्याः स्वभावापह्नवायोगान्नित्यपरतन्त्रतया प्रतीतेः स्वातन्त्र्यायोगाज्जडाश्रयत्वस्य च निरस्तत्वादहमज्ञो मामन्यं न जानामीति भासानुसारेणात्माश्रयत्वमेष्टव्यमिति परिहरति—**अनुदितेत्यादिना**। धार्ष्ट्यमेवोपपादयति—**प्रमाणमिति**। प्रमाणं वस्तुवृत्तं चानपेक्ष्यस्वयमेव परमार्थवदवभासत इत्यर्थः।।१११।।

प्रसिद्धबलाच्चेदात्मन्यविद्याभ्युपेयते तर्हि प्रसिद्धेस्सार्थकत्वाय वास्तव एव तत्सद्भावः किं न स्यादित्याशङ्क्य यौक्तिकबलान्मैवमित्याह—**यस्मादित्यादिना**। ननु ज्ञानस्य जन्यत्वात् परिणामादिविक्रियावत्वाच्च कथमात्मरूपत्वमित्यत आह—

ज्ञानं यस्य निजं रूपं क्रियाकारकवर्जितम्।
संभावनाप्यविद्यायास्तत्र स्यात्केन हेतुना।।११२।।

सोऽयमेवमनुदितानस्तमितावगतिमात्रशरीर आत्मापि सन्नविचारितप्रसिद्धाविद्यामात्रव्यवहित एवातथैवेक्ष्यते यतोऽतः–

अनुमानादयं भावाद्व्यावृत्तोऽभावमाश्रितः।
ततोऽप्यस्य निवृत्तिः स्याद्वाक्यादेव बुभुत्सतः।।११३।।

भाववदभावादपि निवृत्तिरनुमानादेव किमिति न भवतीति चेच्छृणु–

न व्यावृत्तिर्यथा भावाद्भावेनैवाविशेषतः।
अभावादप्यभावत्वाद्व्यावृत्तिर्न तथेष्यते।।११४।।

यतो नानुमानेन व्याविद्धाशेषक्रियाकारकफलात्मनि स्वाराज्येऽभिषेक्तुं शक्यते तस्मात्–

अविद्यानिद्रया सोऽयं प्रसुप्तो दुर्विवेकया।
भावाभावव्युदासिन्या श्रुत्यैव प्रतिबोध्यते।।११५।।

अत्राहानुदितानस्तमितविज्ञानात्मात्रस्वरूपत्वात् दुस्संभाव्या

---

क्रियेति।।११२।।

भवत्वेवमविद्यासद्भावः प्रसिद्धबलादात्मनि तथापि कथं तन्निवृत्तिरित्याकाङ्क्षायां पूर्वोक्तान्वयव्यतिरेकलक्षणानुमानाद्व्यावृत्ते विविक्तत्वेनाधिगतः परमात्मस्वभावप्रतिपादक-महावाक्यश्रवणात् प्राक्तद्भाव प्रच्युतविशेषस्वरूपनिर्धारणाभावादभावरूपतामिवापन्नो भवति। कथं तर्हि अभावाद्व्यावृत्तिरित्यत आह—**ततोऽपीति**। वाक्यात् ब्रह्मात्मताप्रतिपत्तौ विशेषस्वरूपनिर्धारणाभावादप्यस्य व्यावृत्तिस्स्यादित्यर्थः।।११३।।

उक्तमेवार्थं प्रश्नपूर्वकं स्पष्टयति—**भाववादिनाभावाद्**देहेन्द्रियाद्यात्मत्वलक्षणा-द्यथात्मनो भावत्वाकारेणैव न व्यावृत्तिरुभयोर्भावस्वभावत्वाविशेषात्। किन्तु द्रष्टृदृश्यादि-चतुर्विधान्वयव्यतिरेकलक्षणानुमानबलादेव निश्चीयते। एवमभावाद्देहाद्यात्मत्ववैधुर्याद्यनु-मानविषयीकृतव्यावृत्तिरनुमानेन प्रतीयते। अनुमानानिश्चिताभावत्वादेव। अतो भावा-भावविलक्षणब्रह्मरूपत्वप्रतिपादकवाक्यादेवाभावव्यावृत्तिप्रतीतिरितिभावः।।११४।।

प्रतीतमर्थमुपसंहरति—**यत** इत्यादिना।।११५।।

पूर्वोक्तमेव चोद्यमुद्भाव्य प्रकारान्तरेण परिहरति—**अत्राहेत्यादिना**। किमनुदितायां

अविद्येति। नैतदेवम्। कुतः? यत आह–

कुतोऽविद्येति चोद्यं स्यान्नैवं प्राग्घेत्वसंभवात्।
कालत्रयापरिच्छित्तेर्न चोर्ध्वं चोद्यसंभवः।।११६।।

यस्मात् तत्त्वमस्यादिवाक्यमेव आत्मनोऽशेषामविद्यां निरन्वयामपनुदति तस्मात्–

अब्धातममनादृत्य प्रमाणं सदसीति ये।
बुभुत्सन्तेऽन्यतः कुर्युस्तेऽक्ष्णापि रसवेदनम्।।११७।।

एवमप्रतिहतामहं ब्रह्मेति प्रमां तत्त्वमस्यादिवाक्यं कुर्वदपि न प्रतिपादयतीति चेदभिमतं न कुतश्चनापि प्रतिपत्तिः स्यादत आह–

इदं चेदनृतं ब्रूयात्सत्यामवगतावपि।
न चान्यत्रापि विश्वासो ह्यवगत्यविशेषतः।।११८।।

न चोपादित्सिताद्वाक्यार्थाद्वाक्यार्थान्तरं कल्पयितुं युक्तम्। यस्मात्–

---

विद्यायामविद्या न सम्भवतीति चोद्यमुतोदितायाम्। नाद्यस्तदानुदितानस्तमितविज्ञान-स्वभावताया आत्मनो नावगमादेवं भूते कथमविद्येति चोद्यानवतारादविद्यानुभवं विरोधाच्च। नापि द्वितीयः, आत्मन्यविद्या नासीदस्ति भविष्यतीत्यवगते तथा चोद्यानवभासादुदस्थ-त्वादित्यर्थः।।११६।।

उक्तन्यायेन प्रसंख्यानादीनां नाविद्यानिवर्तकत्वमित्युपसंहरति—**यस्मादि-त्यादिना**।।११७।।

उक्तन्यायेन वेदान्तानां प्रामाण्योपपत्तावपि वैयर्थ्यादप्रामाण्यं स्यादित्यति-प्रसङ्गमाह—**एवमिति**।।११८।।

न वयमप्रामाण्यं वेदान्तानां ब्रूमः। किन्तु अहं ब्रह्मास्मीत्युपासीत इत्युपासना-विधिपरत्वेन प्रामाण्यमिति। तत्राह—**न चेति**। अवगतत्वंपदार्थस्य यदि वाक्या-द्वाक्यार्थज्ञानं न जायेत[1] तदा परं विधिपरत्वं कल्पयन्। न चैतदस्ति, विज्ञान-

---

१ पदार्थज्ञपुरुषस्य महावाक्येन अवश्यमेव सम्यक् ज्ञानं भवति। एवं मुख्यार्थे सति विधिकल्पनायां युक्त्यभावः।

न चेदनुभवोऽतः स्यात्पदार्थावगतावपि।
कल्प्यं विध्यन्तरं तत्र न ह्यन्योऽर्थोवगम्यते।।११९।।

न च यथाभिमतोऽर्थो यथोक्तेन न्यायेन नावसीयते। कोऽसौ न्याय इत्याह–

भङ्क्त्वा चान्नमयादींस्तान्पञ्चानात्मतयार्गलान्।[१]
अहं ब्रह्मेति वाक्यार्थं वेत्ति चेन्नार्थं ईहया[२]।।१२१।।

न चेदेवमुपगम्यते वाक्यस्य प्रमाणस्य सतोऽप्रामाण्यं प्राप्नोति। तदाह–

यदर्थं च प्रवृत्तं यद्वाक्यं तत्र न चेच्छ्रुतम्।
प्रमामुत्पादयेत्तस्य प्रामाण्यं केन हेतुना।।१२२।।

अथ मन्यसे–

---

पदार्थस्याधिकारिणो वाक्यात्प्रतीत्युत्पत्तेः। तत्त्वमस्यादिप्रकरणे विधिपदाश्रवणादुक्तन्यायेन मुख्यार्थसम्भवे विधेः कल्पयितुमशक्यत्वाच्चेति भावः।।११९।।

कस्तर्हि पदार्थावगतिहेतुतया वाक्यार्थप्रतिपत्त्युपयोगिन्याय इति दर्शयितुमाह— **न चेत्यादिना**। नामादिभ्ये[३] आशान्तेभ्यश्छान्दोग्योपनिषत्प्रदर्शितेभ्य आत्मानं विविक्ततयाधिगम्यते। अहमभिमानं वर्जयित्वा ममत्ववर्जनाच्च निष्परिग्रहः पुनस्तदुपभोगतृष्णावर्जितश्शमदमाद्यधिकारविशेषणसम्पन्नस्तैत्तिरीयकोपनिषत्प्रतिपादकान्नमयादिपञ्चकोशेष्वहं ममाभिमानहीनः क्षपितसंमस्तप्रतिबन्धतया ब्रह्मात्मतां प्रतिपद्यते चेत् किं तत्रोपासनादिव्यापारेण कृत्यमित्यर्थः।।१२०-१२१।।

एवमुक्ताधिकारिणो वेदान्ताः प्रमितिमुत्पादयन्तीत्युक्तम्। इदानीं तदनङ्गीकारे दोषमाह—**न चेदेवमित्यादिना**।।१२२।।

भवतु प्रामाण्यं तथापि तत्प्रसंख्यानपरत्वेनैवेति शङ्कां दर्शयति—**जानीयादिति**। उत्तरमाह—**शब्द इति**। अन्यपरस्य वाक्यस्य प्रत्यक्षादिविरोधादद्वितीये ब्रह्मणि प्रामाण्यं न स्यादित्यर्थः। पुनः पूर्ववाद्याह—**पारोक्ष्यमिति**। शब्दसंसृष्टपरोक्षार्थविषय-

---

१ अर्गलान्— "अध्यस्तत्वेऽपि आवरकतया स्वरूपप्राप्तिप्रतिबन्धकान्" (सारार्थः)

२ इहया— "उपासनादिरूपेण गुरुतरेणायासाद्यविनाभूतेन व्यापारेण" (सारार्थः)

३ "नामादिभ्यः प्राणान्तेभ्यश्छान्दोग्योपनिषत्प्रदर्शितेभ्य इति चन्द्रिकायाम्।

[१]जानीयाच्चेत्प्रसंख्यानाच्छब्दस्सत्यवचाः कथम्।
पारोक्ष्यं शब्दो नः प्राह प्रसंख्यानात्त्वसंशयम्।।१२३।।

न च युक्तिशब्दावृत्तिलक्षणात्प्रसंख्यानाद्यथावत्प्रतिपत्तिर्भविष्यतीति संभावयामः। यस्मात्–

युक्तिशब्दौ पुराप्यस्य न चेदकुरुतां प्रमाम्।
साक्षादावर्तनात्ताभ्यां किमपूर्वं फलिष्यति।।१२४।।

अथैवमपि प्रसंख्यानमन्तरेण प्राणान्धारयितुं न शक्नोषीति चेच्छ्रवणादावेव संपादयिष्यामः। कथम्–

प्रसंख्याने श्रुतावस्य न्यायोऽस्त्वाम्रेडनात्मकः।
ईषच्छ्रुतं सामिश्रुतं सम्यक्श्रुत्वावगच्छति।।१२५।।

ननु प्रसंख्यानविधिमनभ्युपगच्छतः पारमहंसी चर्या बौद्धादिचर्यावदशास्त्रपूर्विका प्राप्नोति, ततश्चारूढपतितत्वं न स्यादशेषकर्मणां च निवृत्तिर्न प्राप्नोतीति। उच्यते–

---

त्वान्नापरोक्ष्यहेतुशब्दयुक्त्याभ्यासरूपं तु प्रसंख्यानं निर्विचिकित्सं ब्रह्मात्मत्वं साक्षादनुभावयिष्यतीति भावः।।१२३।।

अत्रोत्तरत्वेनोत्तरश्लोकमवतारयति—**न च युक्तीति**। परोक्षतयानुमानाधिगतवह्न्यादावभ्यासादापारोक्ष्यादर्शनात्। अभ्यासस्य च प्रमाणज्ञानं प्रति क्लृप्तकारणत्वाभावान्न परोक्षप्रमितिहेतुत्वमित्यर्थः।।१२४।।

ननु "आवृत्तिरसकृदुपदेशादि"ति सूत्रकारेण शब्दयुक्त्याभ्यासरूपप्रसङ्ख्यानस्य स्वीकृतत्वान्न तदन्तरेण वाक्यं बोधकमित्याशङ्क्य ज्ञानसाधनश्रवणमननादावेवावृत्तिस्तत्राभ्युपगता। तत्रापाततोऽधिगतशब्दयुक्तीनामावृत्तिव्यतिरेकेण सम्यक् स्वरूपावधारणाभावादावृत्तेरूपयोगान्नतु श्रवणादिसाध्यविज्ञान इति परिहरति—**अथ एवमित्यादिना**।।१२५।।

मुमुक्षोर्नित्यनैमित्तिकविधिप्रापितकर्मवृत्तीनामभ्युपगमात् प्रसंख्यानविध्यनभ्युपगमाच्च वैधर्म्यस्य प्रवृत्त्यन्तरस्याप्यभावात्तदर्थतया नित्यनैमित्तिककर्मपरित्यागस्य वक्तुमशक्यत्वात् पाषण्डचर्यावन्निर्मूलैव परमहंसानाञ्च स्यादित्याशङ्क्यैतदुत्तरश्लोक-

---

१ जानीयात्— "ब्रह्मात्मैक्यं साक्षात्कुर्यात्" (सारार्थः)

**त्वमर्थस्यावबोधाय विधिरप्याश्रितो यतः।**
**तमन्तरेण ये दोषास्तेऽपि नायान्त्यहेतवः[१]।।१२६।।**

**इति श्रीमच्छङ्करभगवत्पूज्यपादशिष्यसुरेश्वराचार्यकृतौ**
**नैष्कर्म्यसिद्धौ तृतीयोऽध्यायः।।**

---

मवतारयति—नन्वित्यादिना। त्वं पदार्थविवेकाय श्रवणादिविधेरभ्युपगमात्तदङ्गत्वेन च सर्वकर्मसंन्यासस्य श्रुतिस्मृत्योर्विहितत्वान्नोक्तदोषप्रसक्तिरित्यर्थः।।१२६।।

**इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीचित्सुखमुनिविरचितायां**
**नैष्कर्म्यसिद्धिभावतत्त्वप्रकाशिकायां तृतीयोऽध्यायः समाप्तः।**

---

१ द्वितीयश्लोकार्धः—
'तं विधिमन्तरेण ये दोषाः ते नायान्ति
यतस्ते अहेतव अविद्यमानकारणाः' इति भावः।

# चतुर्थोऽध्यायः

पूर्वाध्यायेषु यद्वस्तु विस्तरेणोदितं स्फुटम्।
संक्षेपतोऽधुना वक्ष्ये तदेव सुखवित्तये।।१।।
संक्षेपविस्तराभ्यां हि मन्दोत्तमधियां नृणाम्।
वस्तूच्यमानमेत्यन्तःकरणं तेन भण्यते।।२।।
आत्माऽनात्मा च लोकेऽस्मिन्प्रत्यक्षादिप्रमाणतः।
सिद्धस्तयोरनात्मा तु सर्वत्रैवात्मपूर्वकः।।३।।
अनात्मत्वं स्वतसिद्धं देहाद्भिन्नस्य वस्तुनः।
ज्ञातुरप्यात्मता तद्वन्मध्ये संशयदर्शनम्।।४।।
असाधारणांस्तयोर्धर्मान् ज्ञात्वा धूमाग्निवद्बुधः।

---

## ।।अथ चतुर्थोऽध्यायः प्रारभ्यते।।

एवं प्रथमद्वितीयतृतीयैरध्यायैः क्रमेण समन्वयाविरोधवाक्यार्थज्ञानसाधनानि विचार्य चतुर्थाध्यायेन फलविचारं प्राधान्येनारभमाण एष सङ्क्षेपतः पूर्वाध्यायत्रयस्यार्थ उक्तः प्राक्तनस्य ग्रन्थस्यातीताध्यायत्रयेण पौनरुक्त्यं परिहरति—**पूर्वाध्यायेष्विति**।।१।।

विस्तरेणोक्तमपि प्रतिपद्यते चेत् कथं सङ्क्षिप्योक्तं—**सुखं प्रतिपद्य**त इति। अत आह—**सङ्क्षेपे**ति।।२।।

सन्दिग्धे न्यायः प्रवर्तत इति सन्दिग्धस्यैव विचार्यत्वात्तं परिशेषयितुमपि प्रतिपन्नमर्थं तावद्दर्शयति—**आत्मेति**। प्रत्यक्षादिप्रमाणैरनात्मैव सिद्धो नात्मेति मैवं द्रष्टृसिद्धिव्यतिरेकेण दृश्यस्याप्यसिद्धेरित्याह—**तयोरिति**।।३।।

किं लक्षणौ तर्ह्यात्मानात्मानो प्रसिद्धावित्यत्राह—**अनात्मत्वमिति**। दृश्या घटादयो नात्मनः द्रष्टैवात्मेति प्रसिद्धम्। कुत्र तर्हि संशय इति। अत आह—**मध्य इति**। घटादेः प्रत्यगात्मनश्चान्तराले शरीरेन्द्रियादौ कतमो द्रष्टेति वा दिवि प्रतिपत्तेः संशय इत्यर्थः।।४।।

कथं तर्हि निर्णय इत्यत्राह—**असाधारणादिति**। द्रष्टृत्वाजडत्वादयोऽसाधारण-धर्मा[1] आत्मन अनात्मनश्च दृश्यत्वजडत्वादयस्तां[2] ज्ञात्वा धूमेनाग्निमिव देहादीन्

---

५-१ ममेदं शरीरमित्यादिप्रकारेण।
२ अहं मनुष्य इत्यादिना।

**अनात्मनोऽथ बुद्ध्यन्तान् जानीयादनुमानतः।।५।।**
**इदमित्येव बाह्येऽर्थे ह्यहमित्येव बोद्धरि।**
**द्वयं दृष्टं यतो देहे तेनायं मुह्यते जनः।।६।।**

**केन पुनर्न्यायेनात्मानात्मनोरश्वमहिषयोरिव विभागः क्रियत इति। उच्यते–**

**न्यायः पुरोदितोऽस्माभिरात्मानात्मविभागकृत्।**
**तेनेदमर्थमुत्सार्य ह्यहमित्यत्र यो भवेत्।।७।।**
**विद्यात्तत्त्वमसीत्यस्माद्भावाभावदृशं सदा।**
**[1]अनन्तरमबाह्यार्थं प्रत्यक्स्थं[2] मुनिरञ्जसा[3]।।८।।**

**उच्यतां तर्हि कथा तु परिपाट्या वाक्यार्थं वेत्तीति। उच्यते। अन्वयव्यतिरेकाभ्याम्–**

---

बुद्ध्या तादृश्यत्वादिलिङ्गकानुमानैरनात्मनो जानीयादित्यर्थः।।५।।

मध्ये संशयदर्शनमित्युक्तम्। किं तत्र संशयकारणमिति अत्राह—**इदमिति**। द्वयं दृष्टमिति ममेदं शरीरमहं मनुष्य इति च देहेऽनुभवो दृश्यते तेन संशयो जायत इत्यर्थः।।६।।

किं पुनर्निर्णयकारणमित्याकाङ्क्षायां, द्रष्टृदृश्यादिचतुर्विधान्वयव्यतिरेकलक्षणो न्यायः पूर्वाध्यायेषु[4] प्रतिपादित इत्याह—**केनेत्यादिना**। अहङ्कारस्य इदमनिदं सद्भिन्नरूपत्वादिदमंशं दृश्यत्वादिलिङ्गैरनात्मतयोत्सार्यपरिशिष्टमनिदमंशमात्मानमुक्तलक्षणं वाक्याज्जानीयादित्यर्थः।।७-८।।

कस्तर्हि वाक्यार्थप्रतिपत्तौ क्रम इत्याकाङ्क्षायां प्रथममन्वयव्यतिरेकाभ्यां बुद्ध्यादीननात्मत्वेनोत्सार्य ततो विविक्तं प्रत्यगात्मानं तत्साक्षिणमधिगम्यवाक्यात्पश्चात् ब्रह्मात्मतां प्रतिपद्यत इति क्रममभिप्रेत्याह—**उच्यतामित्यादिना**। वाक्यापेक्षायां कारणं दर्शयितुमाह—**त्यक्तोऽहमिति**। पूर्वं देहादेर्बुद्ध्यन्तस्याहमित्यात्मत्वेन परिगृहीतस्यान्वयव्यतिरेकाभ्यामनात्मतया परित्यक्तत्वादन्यस्य चात्मनो वाक्यं विना नात्मभ्यस्सका-

---

१ अनन्तरम्— "भेदकधर्मरहितं अखण्डैकरसम्। (सारार्थः)

२ प्रत्यक्स्थम्– "प्रत्यगभिन्नम्"। (सारार्थः)

३ अञ्जसा– "सम्यक्त्वेन संशयविपर्ययादिराहित्येन"। (सारार्थः)

४ द्वितीयाध्यायस्यैकादशश्लोकादारभ्य कतिपयेषु श्लोकेषु तत्तत्स्थलेषु च आत्मा-अनात्मनोः विभागात्मिका अन्वयव्यतिरेकयोर्युक्तिः प्रदर्शिता।

त्यक्तकृत्स्नेदमर्थत्वात्त्यक्तोऽहमिति मन्यते।
नावगच्छाम्यहं यस्मान्निजात्मानमनात्मनः।।९।।

अथ शरीरादिबुद्धिपर्यन्तः स सर्वोऽनात्मैवेति प्रमाणात् विनिश्चित्य किमिति बुभुत्सातो नोपरमते। शृणु–

अनुच्छिन्नबुभुत्सश्च प्रत्यग्घेतोरनात्मनः।
दोलायमानचित्तोऽयं मुह्यते भौतवन्नरः।।१०।।

अविलुप्तविज्ञानात्मन आत्मत्वादेव नित्यसान्निध्याद्बुभुत्सुः किमिति न प्रतिपद्यत इति। यस्मात्–

यैरद्राक्षीत्पुरात्मानं यमनात्मेति वीक्षते।
दृष्टेर्द्रष्टारमात्मानं तैः प्रसिद्धैः प्रमित्सति।।११।।

कस्मात्पुनर्हेतोः पराचीनाभिः शब्दाद्यवलेहिनीभिर्बुद्धिभिरात्मानमनात्मवन्न वीक्षत इति। उच्यते–

चक्षुर्न वीक्षते शब्दमतदात्मत्वकारणात्।
यथैवं भौतिकी दृष्टिर्नात्मानं परिपश्यति।।१२।।

प्रत्यक्षादिप्रमाणस्वाभाव्यानुरोधेन तावत्तददर्शनकारणमुक्तम्।

---

शाद्विशेषतो निर्धारणादात्मापि निराकृत इति मन्यत इत्यर्थः।।९।।

उक्तमेवार्थं प्रश्नपूर्वकं विशदयति—**अथेति**। अनिच्छिन्ना बुभुत्सा बोद्धुमिच्छा यस्य स तथोक्तः। तत्र हेतुः **प्रत्यग्घेतोरिति**। अनात्मनस्सकाशात् प्रत्यगात्मनः प्रतिपत्तिहेतोस्तत्प्रतिपत्त्यर्थमिति यावत्। भौतो भूतपरिगृहीतो भ्रान्तस्तद्वत्।।१०।।

आत्मनस्स्वसत्ताप्रयुक्तप्रकाशत्वोद्देशादिव्यवधानाभावाच्चाप्रकाशो न युक्तः, तत्कथं बुभुत्सानुपरम इत्याशङ्कां प्रदर्श्य परिहरति—**अविलुप्तेत्यादिना**। यैश्चक्षुरादिकरणैर्विवेकोदयात् पुरोदेहादिलक्षणमात्मानमद्राक्षीत्। यदिदानीं विवेकोदये सत्यनात्मेति मन्यते तैः प्रसिद्धैः करणैः प्रमातुरपि साक्षित्वात्तदगोचरं प्रमातुमिच्छति यस्मात्तस्मान्न प्रतिपद्यत इति सम्बन्धः।।११।।

इन्द्रियाणामात्माविषयत्वे कारणं प्रश्नपूर्वकन्दर्शयति—**कस्मादित्यादिना**। यथा चक्षुश्शब्दान्न पश्यति अतदात्मकत्वाच्छब्दगुणद्रव्या प्रकृतिकत्वादेवं भौतिककरणजनितं विज्ञानं करणानामप्रकृतिरूपमात्मानं न पश्यतीत्यर्थः।।१२।।

**प्रत्यक्त्वान्नाहमीक्षत** इति। आत्मनस्समस्तबुद्धिवृत्तिभावाभावसाक्षित्वेन

**अथ प्रमेयस्वाभाव्यानुरोधेन प्रतिषेध उच्यते–**

**धीविक्रियासहस्राणां हानोपादानधर्मिणाम्।**
**सदा साक्षिणमात्मानं प्रत्यक्त्वान्नाहमीक्षते।।१३।।**

**क्व पुनरियं विवेकबुद्धिः, किमात्मन्युतानात्मनीति। किंचातः। यद्यात्मनि कूटस्थत्वव्याघातोऽनात्मदर्शित्वात्। अथानात्मनि तस्याप्यचैतन्यान्न विवेकसंबन्ध इति। उच्यते। 'दाह्यदाहकतैकत्र' इत्युक्तपरिहारात्–**

**बुद्धावेव विवेकोऽयं यदनात्मतया भिदा।**
**बुद्धिमेवोपमृद्नाति कदलीं तत्फलं यथा।।१४।।**

**सोऽयमतत्त्वे तत्त्वदृक्–**

**अनुमानप्रदीपेन हित्वा सर्वाननात्मनः।**
**संसारैकावलम्बिन्या तदभावं धियेप्सति।।१५।।**

---

विषयितया प्रत्यक्त्वात् **अहमा** अन्तःकरणेन विषयिणं न पश्यतीत्यर्थः।।१३।।

एवं द्रष्टृदृश्यादिभावेनात्मानात्मविवेको दर्शितः। सेयं विवेकबुद्धिः किमाश्रयेत्याक्षिप्य समाधत्ते—**क्व पुनरित्यादिना।** अनात्मदर्शित्वादनात्मकारणज्ञानपरिणामाश्रयत्वाङ्गीकारादित्यर्थः। दाह्यदाहकतेति "दाह्यदाहकतैकत्र यथा स्याद्वह्निदारुणोरि"[1]त्यत्राहंकारात्मनोराध्यासिकतादात्म्याहंकारस्याचेतनस्यापि ज्ञातृत्वमुपपादितम्। तेनाहङ्कारपरिणामलक्षणं विवेकज्ञानमात्मन्यध्यारोप्यते। तेनानात्मनः कूटस्थत्वव्याघातः। नापि केवलाचेतनस्य ज्ञानाश्रयत्वमित्यर्थः। विशिष्टाश्रयो[2] विवेकज्ञानपरिणामो बुद्ध्युपादानत्वात् बुद्धिगत एवात्मन्यारोप्यते परमित्याह—**बुद्धावेवेति।** यस्य अनात्मतया आत्मनस्सकाशात् भेदोऽवगम्यते तस्यामेव बुद्धौ विवेक इत्यर्थः। कथं तर्हि तत्परिणामस्य तन्निवर्तकत्वमिति तत्राह—**बुद्धिमेवेति।।१४।।**

एवन्तर्हि यथोक्तविवेकेनैव बुद्ध्यादिद्वैतप्रपञ्चस्य निवर्तिततत्वात् किं वाक्येनेति अत आह—**सोऽयमित्यादिना।** आत्मानात्मनोर्यौ भेदेतरेतराभावौ तावप्यद्वैतस्वरूपविपरीतत्वादतत्त्वं अतस्तथाभूताविवेकधीरपि भ्रान्तिरेव द्वैतलक्षणसंसारैकविषयत्वात्तेन वाक्यार्थज्ञानं विना तयैव संसारनिवृत्तिरिति भावः।।१५।।

---

१ नैष्कर्म्यसिद्धिः ३.५९

२ विशिष्टाश्रयः – चिदचिद्रूपग्रन्थ्याश्रय इति भावः।

**योऽयमन्वयव्यतिरेकजो विवेक आत्मानात्मविभागलक्षणोऽनात्मस्थः स्थाणौ संशयावबोधवत्प्रतिपत्तव्योऽयथावस्तुस्वाभाव्यान्मृगतृष्णिकोदकप्रबोधवदित्यत आह–**

**संसारबीजसंस्थोऽयं तद्धिया मुक्तिमिच्छति।**
**शशो निमीलनेनेव मृत्युं परिजिहीर्षति।।१६।।**

**अस्यार्थस्य द्रढिम्ने श्रुत्युदाहरणम्–**

**इममर्थं पुरस्कृत्य श्रुत्या सम्यगुदाहृतम्।**
**'यच्चक्षुषे' ति विस्रब्धं 'न दृष्टे' रिति च स्फुटम्।।१७।।**

**बुद्ध्यन्तमपविद्ध्यैवं को न्वहं स्यामितीक्षितुः।**
**श्रुतिस्तत्त्वमसीत्याह सर्वमानातिगामिनी[1]।।१८।।**

---

ननु वाक्येनाप्यनात्माकारपरिहारेणात्मनो साधारणाकारसमर्पणमेव क्रियते नाधिकमेवमन्वयव्यतिरेकाभ्यामप्यनात्मपरिहारेणात्मा साधारणस्वरूपे ग्रहणात्तत एव मुक्तिः किं न स्यात् किं वाक्येनेत्याशङ्क्याह—**योऽयमिति**। यद्यपि देहाद्यनात्माकारपरिहारेणान्वयव्यतिरेकाभ्यामात्मा समर्प्यते। तथाप्यनात्मभ्यो भेदेन समर्पणात् भेदस्य चाखण्डैकरसप्रत्यगात्मस्वभावत्वाभावात्तद्विषयं ज्ञानं संशयविपर्यासज्ञानवदात्मासाधारणस्वभावालम्बनं न भवति। तेन वाक्यजमद्वैतज्ञानमेव मुक्तिहेतुर्न विवेकज्ञानमित्यर्थः। **संसारबीजेति**। संसारबीजमज्ञानन्तत्संस्थ एवं विवेकदर्शी भेदज्ञानस्याप्यज्ञानप्रभवत्वात्तद्धिया संसारगोचरया विवेकदृष्ट्या **मुक्तिमिच्छति**। अतद्धेतुमेव तद्धेतुं मन्यते, यथा शिंशुमारनिकटात् पलायने मरणपरिहारहेतौ सति निमीलनमेव[2] भ्रान्त्या तद्धेतुं मन्यते तद्वदित्यर्थः।।१६।।

एवन्द्वैतग्राहकप्रत्यक्षादिप्रमाणाविषयत्वमात्मनस्तर्केणोपपाद्य तस्य प्रशिथिलमूलस्य त्वपरिहाराय प्रमाणमुदाहर्तुमाह—**अस्येति**। "यच्चक्षुषा न पश्यति" "न दृष्टेर्द्रष्टारं पश्येदि" त्यादिश्रुत्या सर्वप्रमाणागम्यत्वमात्मनो दर्शितमित्यर्थः।।१७।।

तर्हि प्रत्यक्षाद्यगम्यः केन प्रमाणेनावसीयत इत्यत आह—**बुद्ध्यन्तमिति**।

---

१ सर्वमानातिगामिनी— "मानानां चक्षुरादीनां सर्वेषां भ्रमप्रमासाधारण्येन श्रुतेश्चाप्रामाण्यशङ्काकलङ्कराहित्येन प्रमामात्रहेतुत्वात्स्वतःप्रामाण्याच्च सर्वमानातिगामित्वमित्यर्थः।। (सारार्थः)

२ शशो निमीलनमेवेति मूलपाठः मुद्रितपुस्तकेषु लभ्यते, तदनुसारेण चेत् – यथा शशो नेत्रनिमीलनेन मृत्युभयं परिजिहीर्षति।

**एष संक्षेपतः पूर्वाध्यायत्रयस्यार्थ उक्तः। सोऽयं न्याय्योऽपि[१] वेदान्तार्थः शास्त्राचार्यप्रसादलभ्योऽप्यनपेक्षितशास्त्राचार्य-प्रसादोऽनन्यापेक्षसिद्धस्वभावत्वात्कैश्चिच्छ्रद्दधानैर्न प्रतीयते।[२] तेषां संग्रहार्थमभिमतप्रामाण्योदाहरणम्–**

**भगवत्पूज्यपादैश्च उदाहार्येवमेव तु।**
**सुविस्पष्टोऽस्मदुक्तोऽर्थः सर्वभूतहितैषिभिः।।१९।।**

**किं परमात्मन उपदेश उतापरमात्मन इति। किं चातः। यदि परमात्मनस्तस्योपदेशमन्तरेणैव मुक्तत्वान्निरर्थक उपदेशः। अथापरमात्मनस्तस्यापि स्वत एव संसारस्वभावत्वान्निष्फल उपदेशः। एवमुभयत्रापि दोषवत्त्वादत आह–**

**अविविच्योभयं वक्ति श्रुतिश्चेत्स्यादग्रहस्तथा'।**
**इति पक्षमुपादाय पूर्वपक्षं निशात्य च।।२०।।**

---

एवं पूर्वोक्तान्वयव्यतिरेकाभ्यामनात्मनो निराकृत्य कोन्वहमित्यात्मस्वरूपविशेष-बुभुत्सोश्श्रुतिस्सर्वमानान्यतीत्य तदगोचरं वस्त्वधिगन्तुं शीलमस्या इति सर्वमानातिगामिनी तत्ब्रह्मत्वमसीति विशेषस्वरूपमवगमयतीत्यर्थः।।१८।।

वृत्तानुद्रवणपूर्वकं वर्तिष्यमाणस्य ग्रन्थस्य तात्पर्यमाह—**एष इत्यादिना।** अनपेक्षितशास्त्राचार्यप्रसाद इति अविद्यादशायां शास्त्राद्यधीनोपि विद्योत्तरकालं स्वानुभावसिद्धत्वाच्छास्त्रादीनान्तदनुवादकतामात्रेणावस्थानात्तथापि गुरुसम्प्रदाय-परम्परागतवेदान्तार्थश्रद्धालुभिर्गुरुसंप्रदर्शनं विना[३] न निश्चीयते। अतस्तेषां बुद्धिसंग्रहाया-भिमतप्रमाणस्याचार्यस्य वाक्यं मयोदह्रयत इत्यर्थः।।१९।।

इदानीमुपदेसाहस्र्यां भगवत्पादाचार्यैरुदाहृतं वचनमुदाहरति—**किं परमात्मन इति।** एतदुत्तरत्वेन भाष्यकारीयवचनमेव दर्शयति—**अविविच्येति।**[४] उभयमिदमनिदं रूपमात्मानात्मलक्षणकञ्चुकं परिधायाहमिति व्यवस्थितम्। प्रत्यगात्मानमुद्दिश्य यदि

---

एवं ज्ञाननेत्रनिमिलनेनाज्ञानेनैव संसारमृत्युं परिजिहीर्षति भ्रान्तित्वादसम्भव एवेति भावः।

१ न्याय्योऽपि– उपक्रमोपसंहारादिना श्रुतितात्पर्यसिद्धोऽपीति भावः।

२ न प्रतीयते— "नाद्रियते न स्वीक्रियते" (सारार्थः)

३ उपक्रमोपसंहारादिभिः श्रुतितात्पर्यसिद्धेऽपि।

४ उपदेशसाहस्री, १८.७८

**तच्चेदमविवेकात्स्वतो विविक्तात्मने तत्त्वमसीत्युपदिष्टम्–**

**युष्मदस्मद्विभागज्ञे स्यादर्थवदिदं वचः।**

**यतोऽनभिज्ञे वाक्यं स्याद्बधिरेष्विव गायनम्।।२१।।**

**तस्य च युष्मदस्मद्विभागविज्ञानस्य का युक्तिरुपायभावं प्रतिपद्यते। शृणु–**

**'अन्वयव्यतिरेकौ हि पदार्थस्य पदस्य च।**

**स्यादेतदहमित्यत्र युक्तिरेवावधारणे'।।२२।।**

**कथं तौ युक्तिरित्यत्राह–**

**'नाद्राक्षमहमित्यस्मिन् सुषुप्तेऽन्यन्मनागपि।**

---

तत्त्वमसीत्युपदिशेत् शास्त्रन्तदैव परमुपदेशस्सम्भवतीति स्वीकार स्यात्। केवलानात्मनः केवलपरमात्मनश्च उपदेशासम्भवस्य दर्शितत्वात्तत्पक्षौ पूर्वपक्षत्वेन निराकृत्येमं च पक्षं सिद्धान्तत्वे स्वीकृत्य भगवत्पूज्यपादैरुदाहृतमिति सम्बन्धः। तदित्थं क्व पुनरियं विवेकबुद्धिरिति पूर्वपक्षीकृत्य दाह्यदाहकतैकत्रेतिन्यायेन बुद्धावेव विवेकोऽयमिति यदस्माभिरुक्तन्तदेतत्भाष्यकारैरपि दर्शितमितिभावः।।२०।।

एवं "ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदि"त्यादि वाक्यपर्यालोचनया परमात्मन एवान्तःकरणकञ्चुकस्य तदविविक्तस्य उपदेश इति दर्शितम्। तर्ह्यात्मानात्मविवेकायान्वयव्यतिरेकौ व्यर्थमित्याशङ्क्याह—**तच्चेदमिति**। स्वतो वाक्यप्रवृत्तेः प्रागेवान्वयव्यतिरेकाभ्यां कार्यकारणसङ्घाताद्विमुक्तो विवेचित आत्मा यस्य तस्मै तदिदं ब्रह्मत्वं तत्त्वमसीत्युपदिष्टमन्वयव्यतिरेकाभ्यामेव तर्हि विमुक्तत्वात् किमर्थमुपदेश इति अत आह—**अविवेकादिति**। अविवेकस्यानवबोधस्याज्ञानस्योपदेशमन्तरेण निराकरणादित्यर्थः। विपक्षे दोषमाह—यत इति। पदार्थानभिज्ञस्य वाक्यं वाक्यार्थस्य न बोधकमित्यर्थः।।२१।।

अन्वयव्यतिरेकौ पदार्थविवेककारणमिति यदस्माभिरुक्तन्तदपि भगवत्पादाचार्यैर्दर्शितामित्याह—**तस्य चेति**। पदपदार्थयोरन्वयव्यतिरेकावेवैतदहमेतच्चानात्मेत्यवधारणे युक्तिरुपायः स्यादित्यर्थः।।२२।।

आगमापायितदवध्यन्वयव्यतिरेकादपि पदार्थविवेकोपायत्वेनास्मदुक्तावाचार्यैरपि दर्शिताविति दर्शयति—**कथमिति**। अहमिदानीमस्मिन् सुषुप्ते नात्मनोऽन्यदीष-

**न वारयति दृष्टिं स्वां प्रत्ययं[१] तु निषेधति'।।२३।।**
**'एवं विज्ञातवाच्यार्थे श्रुतिलोकप्रसिद्धितः[२]।**
**श्रुतिस्तत्त्वमसीत्याह श्रोतुर्मोहापनुत्तये'।।२४।।**
**तत्र त्वमिति पदं यत्र लक्षणया वर्तते सोऽर्थ उच्यते–**
**'अहंशब्दस्य या निष्ठा ज्योतिषि प्रत्यगात्मनि।**
**सैवोक्ता सदसीत्येवं फलं तत्र विमुक्तता'।।२५।।**
**अन्यच्चान्वयव्यतिरेकोदाहरणम्। तथा–**
**'छित्त्वा त्यक्तेन हस्तेन स्वयं नात्मा विशेष्यते।**
**तथा शिष्टेन सर्वेण येन येन विशेष्यते।।२६।।**
**विशेषणमिदं सर्वं साध्वलङ्करणं यथा।**
**अविद्याध्यस्तमतः सर्वं ज्ञात आत्मन्यसद्भवेत्।।२७।।**

---

दप्यद्राक्षमिति सुषुप्तादुत्थितः परामृशन्स्वात्मभूतां दृष्टिं न निवारयति।[३] किन्तु घटपटादिविषयप्रत्ययमेव[४] निषेधति। तेनात्मैवाव्यभिचारी अनात्मा तु व्यभिचारीत्युक्तलक्षणान्वयव्यतिरेकौ दर्शितावित्यर्थः।।२३।।

इत्थं कृतान्वयव्यतिरेकस्य वाक्यमेवैकत्वप्रतिपादकं नान्यदिति यदुक्तन्तदाचार्यैरप्युक्तमित्याह—**एवमिति**। विज्ञातवाक्यार्थैर्विज्ञातपदार्थ इति यावत्। पदार्थस्यैव वाक्यार्थत्वात्।।२४।।

त्वंपदलक्षणमपि यथोक्तमाचार्यैरपि दर्शितमित्याह—**तत्रेति**। **अहं शब्दस्या**त्मवाचकस्य प्रत्यगात्मज्योतिषि लक्षणया **या निष्ठा** पर्यवसानं **सैव** निष्ठा **सदसीत्यपि** वाक्ये विवक्षिता लक्षिता। त्वं पदार्थन्तत्पदलक्ष्यस्य न भेदोऽस्तीत्यर्थः। फलवत्वादप्येकत्व एव श्रुतेस्तात्पर्यमित्याह—**तत्रेति**।।२५।।

आत्मानात्मविवेकान्वयव्यतिरेकौ प्रकारान्तरेणापि दर्शितावाचार्येणेत्युत्तर-

---

१ प्रत्ययः— "प्रतीयत इति प्रत्ययः इति व्युत्पत्त्या प्रत्ययशब्देन प्रमातृप्रमाणप्रमेयादिसर्व एव विशेषो गृह्यते" इति।

२ लोकप्रसिद्धितः–"लोकप्रसिद्ध्या सुखमहमस्वाप्समित्यादिरूपया" (सारार्थः) विज्ञातवाच्यार्थे विविक्तज्ञातवाच्यार्थे = शोधिततत्त्वार्थे।

३ परामर्शापेक्षितपुर्वानुभवरूपत्वेन तत्र स्थितत्वात्।

४ प्रतीयतेऽनेनेति व्युत्पत्त्या प्रमाणस्य ग्रहणं भवति, तच्च प्रमेयप्रमात्रोरप्युपलक्षणम्।

तस्मात्त्यक्तेन हस्तेन तुल्यं सर्वं विशेषणम्।
अनात्मत्वेन तस्माज्ज्ञो मुक्तः सर्वविशेषणैः।।२८।।
ज्ञातैवात्मा सदा ग्राह्यौ ज्ञेयमुत्सृज्य केवलः।
अहमित्यपि यद्ग्राह्यं व्यपेताङ्गसमं हि तत्।।२९।।
दृश्यत्वादहमित्येष नात्मधर्मो घटादिवत्।
तथान्ये प्रत्यया ज्ञेया दोषाश्चात्माऽमलो ह्यतः'।।३०।।
सर्वन्यायोपसंग्रहः–
'नित्यमुक्तत्वविज्ञानं वाक्याद्भवति नान्यतः।
वाक्यार्थस्यापि विज्ञानं पदार्थस्मृतिपूर्वकम्।।३१।।
अन्वयव्यतिरेकाभ्यां पदार्थस्स्मर्यते ध्रुवम्।
एवं निर्दुःखमात्मानमक्रियं प्रतिपद्यते।।३२।।
सदेवेत्यादिवाक्येभ्यः प्रमा स्फुटतरा भवेत्।
दशमस्त्वमसीत्यस्माद्यथैवं प्रत्यगात्मनि'।।३३।।
वीक्षापन्नस्योदारहणम्–
नवबुद्ध्यपहाराद्धि स्वात्मानं दशपूरणम्।
अपश्यन् ज्ञातुमेवेच्छेत्स्वमात्मानं जनस्तथा।।३४।।
अविद्याबद्धचक्षुष्ट्वात्कामापहतधीः सदा।

---

श्लोकपञ्चकस्य तात्पर्यमाह—**अन्यच्चेति**।।२६-२९।।

एवं व्यभिचारित्वेनाहंकारादीनां छिन्नहस्तवदनात्मत्वमतद्विशेषणत्वञ्चावधार्य दृश्यत्वादप्यनात्मत्वमनात्मधर्मत्वं च तेषामाचार्यैर्दर्शितमित्याह—**दृश्यत्वादिति**। प्रत्ययास्सुखदुःखादयः दोषरागादयः।।३०।।

पुनरपि तत्त्वमसीप्रकरणे भगवत्पादाचार्यैरस्मदुक्तो न्यायः प्रकरणोपदर्शितन्यायोपसंहार पञ्चभिश्श्लोकैः प्रदर्शित इत्याह—**सर्वेति**।।३१-३३।।

यदस्माभिस्तृतीयोऽध्याये "**वीक्षापन्नस्ये**"ति दशैव वयमिति सङ्ख्याभिनिवेशापहृतज्ञानस्वव्यतिरिक्तान्नवपुरुषान्वीक्षमाणोऽपि यथा विभ्रमादात्मानं दशसङ्ख्यापूरकं न वेत्ति तथा अविद्याप्रतिबन्धकसम्यग्दर्शनो विषयाभिषङ्गलक्षणकामेन च विषयाभिमुखमपहृतचित्तस्समस्तद्वैतविनिर्मुक्तं स सर्वसाक्षिणमपरोक्षमात्मानन्दशममिव न पश्यती-

**विविक्तं दृशिमात्मानं नेक्षते दशमं यथा।।३५।।**

**सोऽयमेवमविद्यापटलावगुण्ठितदृष्टिः सन् कथमुत्थाप्यत इत्याह–**

**यथा स्वापनिमित्तेन स्वप्नदृक्प्रतिबोधितः।**
**करणं कर्म कर्तारं स्वाप्नं नैवेक्षते स्वतः।।३६।।**
**अनात्मज्ञस्तथैवायं सम्यक् श्रुत्यावबोधितः।**
**गुरुं शास्त्रं तथा मूढं स्वात्मनोऽन्यं न पश्यति ।।३७।।**

**स किं सकलसंसारप्रविविक्तमात्मानं वाक्यात्प्रतिपद्यते उत नेतीति। अत्र ब्रूमः। कूटस्थावगतिशेषमात्रत्वात्प्रतिपत्तेरत आह–**

**दण्डावसाननिष्ठस्स्याद्दण्डसर्पो यथा तथा।**
**नित्यावगतिनिष्ठं स्याद्वाक्याज्जगदसंशयम्।।३८।।**

---

त्यर्थः।।३४-३५।।

नन्वेवमविद्याप्रतिबन्धसम्यग्दर्शनस्य श्रुत्याचार्यादीनिदर्शनकारणानि किं सत्यान्यथा सत्यानि सत्यत्वे सदद्वैतव्याघातः, असत्यत्वे च सम्यग्दर्शनकारणत्वमित्याशङ्क्योत्तर-श्लोकाभ्यान्दृष्टान्तप्रदर्शनपुरस्सरं परिहारमाह—**सोऽयमित्यादिना**। यथा स्वप्नदृक्स्व-विद्यापरिकल्पितचोरव्याघ्रादिदर्शननिमित्तभयवशात्। सहसाप्रबुद्धस्स्वप्नदशायां स्वाज्ञान-परिकल्पितं कारणादिकं स्वतो व्यतिरिक्तं न क्षमते। तथानाद्यविद्यानिद्रापरवशस्स्वा-विद्यापरिकल्पितश्रुत्याचार्यवशादहमस्मि परं ब्रह्मेति प्रतिबुद्धस्स्वव्यतिरिक्तं श्रुत्याचार्यादिकं न पश्यति। तेन श्रुत्याचार्यादेरविद्याविषयत्वान्नाद्वैतव्याघातः नापि विद्यानुदयस्तथा-भूतेभ्योऽपि विद्योदयस्य दर्शितत्वादिति भावः।।३६-३७।।

भवत्वेवं प्रबोधोत्पत्तिस्तथापि किं प्रपञ्चोद्भेदेन ब्रह्मावबोध्यते उताभेदेन, आद्ये अद्वैतव्याघातः। द्वितीये तु सप्रपञ्चत्वमित्याशङ्क्य प्रपञ्चस्यात्मन्यविद्याध्यारोपितत्वान्न ततो भेदेनाप्यभेदेनासौ बोध्यते। किन्त्वन्वयव्यतिरेकाभ्यां भावपरिहारेण तावन्मात्रतयेति दृष्टान्तेन दर्शयति—**स किमित्यादिना**। कूटस्थावगतिरेव यथावशिष्यते तावन्मात्रैव प्रतिपत्तिर्न पुनः प्रपञ्चभावाभावावलम्बिनीप्रतिपत्तिरित्यर्थः। दण्डावसाननिष्ठस्स्यादिति दण्डरूपेणावसानं पर्यवसानन्तदेवनिष्ठाकाष्ठा यस्य दण्डे परिकल्पितसर्पस्य स तथोक्तः। न हि तत्र सर्पस्य दण्डे भावरूपताबाध्यत्वान्नापि तत्राभावः कल्पितसर्पस्य प्रतियोगित्वेन क्वाप्यभावात्। तदेवमन्वयव्यतिरेकभावपरिहारेण तावन्मात्रत्वं यथा सर्पस्य तथा जगतोऽप्यवगतिरूपब्रह्ममात्रत्वमेवेत्यर्थः।।३८।।

**कुत एतत्? यस्मात्–**

**पश्यन्निति यदाहोच्चैः प्रत्यक्त्वमजमद्वयम्।**
**अपूर्वानपरानन्तं[1] त्वमा तदुपलक्ष्यते ।।३९।।**

**तत्त्वमस्यादिवाक्योत्थविज्ञानेनैव बाध्यते। यस्मात्–**

**अस्माद्यदपरं रूपं नास्तीत्येव निरूप्यते।**
**अन्यथाग्रहणाभावाद्बीजं तत्स्वप्नबोधयोः।।४०।।**

**अस्यार्थस्य द्रढिम्ने उदाहरणम्–**

**'कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ।**
**प्राज्ञः कारणबद्धस्तु द्वौ तौ तुर्ये न सिध्यतः'।।४१।।**

---

उक्तार्थहेतुकथनपरत्वेनोत्तरश्लोकमवतारयति—**कुत एतदिति**। ''यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति'', ''न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं पश्येत्'' इति यन्निरस्तसमस्तद्वैतं कूटस्थदृष्टिमात्मानं सुषुप्त्यवस्थायां दर्शयति। तदेवापूर्वादि[1]लक्षणं वस्तु त्वंपदेन लक्ष्यते यस्मात्तस्मात्तद्विपरीतन्दैवतं जातामविद्याध्यारोपितं विद्ययानिवर्त्यमानमात्ममात्रावशेषमेव निवर्तत इति भावः।।३९।।

ननु निरस्तसमस्तद्वैतं वस्तुसुषुप्त्यवस्थायां स्वत एव सिद्धञ्चेत् किन्तत्त्वमस्यादिवाक्येन अथाविद्यानिवृत्तिस्तत्त्वमस्यादिवाक्योत्थविज्ञांनेनैव कथन्तर्हि निर्विशेषं वस्तुसुषुप्त्यवस्थायां सिद्धमित्युच्यत इति शङ्काद्वयं सम्बन्धोक्त्या श्लोकेन निराचष्टे। तत्त्वमस्यादीत्यादिना यस्मात्पूर्वोक्तन्यायेनाविद्या तत्त्वमस्यादिवाक्योक्तविज्ञानेनैव बाध्यते तस्माद्वाक्यमपेक्षणीयमेव यस्माच्च द्वैततद्दर्शनयोरभावात्। ''प्रकृतादात्मनोऽन्यन्नास्ति'' इति श्रुत्या निरुच्यते। ननु द्वितीयमस्तीति न तु तत्कारणस्याप्यभावात्। तच्चाग्रहणं स्वप्नप्रबोधयोर्बीजं तत्रास्त्येव तेन तन्निवर्तकं वाक्यमपि सार्थकमित्यर्थः।।४०।।

वाक्यश्रवणे सत्येवाग्रहणान्निवर्तते। ततः प्राक् सुषुप्तेति यदस्तीति यदुक्तम् तत्र प्रमाणत्वेन गौडपादीयं वाक्यमुदाहरति—**अस्येत्यादिना**। कार्यमन्यथाग्रहणन्तत्त्वाग्रहणन्ताभ्यां बन्धौ सङ्गृहीतौ जाग्रत्स्वप्नाभिमानिनौ विश्वतेजसौ प्राज्ञस्सुषुप्त्यभिमानीकारणेनैव तत्त्वाग्रहणे बाधः। द्वावप्येतौ कार्यकारणपदार्थौ तुरीयावस्थायां न सिध्यतो न सम्भवत इत्यर्थः।।४१।।

---

१ **अपूर्वं** कारणशून्यम्, **अनपरं** कार्यशून्यमिति। जगतः ब्रह्मकार्यत्वेऽपि प्रतीतिमात्रसत्तात्वात् ब्रह्मणोऽनपरत्वमव्याहतं भवतीति भावः।

**'अन्यथागृह्णतः स्वप्नो निद्रा तत्त्वमजानतः।**
**विपर्यासे तयोः क्षीणे तुरीयं पदमश्नुते'।।४२।।**
**तथा भगवत्पादीयमुदाहरणम्–**
**'सुषुप्ताख्यं तमोऽज्ञानं बीजं स्वप्नप्रबोधयोः।**
**आत्मबोधप्रदग्धं स्याद्बीजं दग्धं यथाऽभवम्'।।४३।।**
**एवं गौडर्द्राविडैर्नः[१] पूज्यैरर्थः प्रभाषितः।**
**अज्ञानमात्रोपाधिस्सन्नहमादिदृगीश्वरः ।।४४।।**
**तत्रान्यथाग्रहणवदन्यथाग्रहणबीजमग्रहणमनात्मधर्म एवेत्याह–**

---

स्वप्नजागरितयोस्तत्त्वमन्यथाग्रहणस्वप्नो विपरीतग्रहणन्तत्त्वमजानतस्तिसृषु अवस्थासु निद्रा तुल्या। तत्र जाग्रत्स्वप्नावन्यथाग्रहणप्रधानत्वात् कार्यस्थानं तयोश्च कार्यकारणस्थानयोर्विपर्यासे विपरीतग्रहणलक्षणे च तत्त्वप्रतिबोधितः **क्षीणे तुरीयं**[२] पदं प्राप्नोतीत्यर्थः।।४२।।

उपदेशसाहस्र्यामप्येतदुक्तमित्याह—**तथेति**। सुषुप्तन्तमो अज्ञातमिति पर्यायस्तदेवं शब्दवाच्यमज्ञानं स्वप्नप्रबोधयोर्बीजं स्वात्मबोधेन प्रकर्षेण दग्धं सदभावान्न पुनः कामकर्मादिप्ररोहासमर्थं स्याद्दग्धबीजमेवेति पदसुषुप्ते अज्ञानसद्भावन्तस्यात्मज्ञान-निवर्त्यत्वञ्च दर्शयतीत्यर्थः।।४३।।

उपसंहरति—**एवमिति**। गौडै[३]र्गौडपादाचार्यैर्द्रविडैर्भगवत्पादाचार्यैः। पञ्चद्रविडा[४] इति केरलानामपि द्रविडत्वप्रसिद्धेः। कोऽसावर्थो भाषित इति अत आह—**अज्ञानेति।** ईश्वरः परमात्मैव ज्ञानमात्रोपाधिरहङ्कारादीनां साक्षितया जीवत्वेनावस्थित इत्यस्मदुक्त-न्तेषामप्यभिमत इत्यर्थः।।४४।।

---

१ "द्राविडः" पदेन भगवान् भाष्यकारः।

२ **चतुर्थम्।** जाग्रत्स्वप्नसुषुप्तिरूपः अवस्थात्रयविरहित आत्मेत्यभिप्रायः।

३ सारस्वताः कान्यकुब्जाः गौडमैथिली उत्कलाः।
एते पञ्च समाख्याताः विन्ध्यस्योत्तरवासिनः।। इति प्राञ्चः।
अपि च—
वङ्गदेशं समारभ्य भुवनेशन्तगं शिवे।
गौडदेशः समाख्याताः सर्वविद्याविशारदः।।—शक्तिसङ्गमतन्त्रम्।
एतदनुसारेण गौडपादाचार्या बङ्गीयाः इति कथयन्ति विद्वांसः।

४ "कर्णाटाश्चैव तैलङ्गा गुर्जरा राष्ट्रवासिनः।
आन्ध्राश्च द्राविडाः पञ्च विन्ध्यदक्षिणवासिनः।।"

**इदं ज्ञानमहं ज्ञाता ज्ञेयमेतदिति त्रयम्।**
**योऽविकारो विजानाति परागेवास्य तत्तमः।।४५।।**

**यत एतदेवमतस्तस्यैव बीजात्मनस्तमसश्चित्तधर्मविशिष्टस्य[1] स्वकार्यद्वितीयाभिसंबन्धो न त्वविकारिण आत्मन इत्याह दृष्टान्तेन–**

**रूपप्रकाशयोर्यद्वत्संगतिर्विक्रियावतः।**
**सुखदुःखादिसंबन्धश्चित्तस्यैवं विकारिणः।।४६।।**

**तदेतदन्वयव्यतिरेकाभ्यां दर्शयिष्यन्नाह–**

**संप्रसादेऽविकारित्वादस्तं याते विकारिणि।**
**पश्यतो नात्मनः किंचिद्द्वितीयं स्पृशतेऽण्वपि।।४७।।**

**सोऽयं कूटस्थज्ञानमूर्तिरात्मा–**

**यथा प्राज्ञे तथैवायं स्वप्नजागरितान्तयोः।**

---

ननु "तम आसीत्" "आसीदासीदिदन्तमो भूतमि"ति श्रुतिस्मृतिप्रसिद्धस्य जगद्बीजस्याज्ञानस्य परमेश्वरशक्तितया तदभेदात् कथन्तस्य ज्ञाननिवर्त्यत्वमित्यत आह—**तत्रेति**। परागिति आत्मस्वरूपधर्मश्च न भवति, जडत्वाद्दृश्यत्वाच्च। आत्मशक्तित्वव्यपदेशश्चास्य सत्ताप्रतीत्योस्तत्परतन्त्र[2]त्वादेवेति भावः।।४५।।

सुखदुःखादिसम्बन्धवदज्ञानसम्बन्धोऽप्यात्मनः किं न स्यादित्याशङ्क्य सुखादिसम्बन्धस्यापि अज्ञानजनितचित्ताख्यधर्मोपाधिद्वारत्वात् स्वभावतोऽभावान्नैवमितिदृष्टान्तेन दर्शयति—**यत् एतदेवमित्यादिना**।।४६।।

सति चित्ते सुखादिसम्बन्धो नासति इत्युक्तमर्थमन्वयव्यतिरेकाभ्यां दर्शयितुमुत्तरश्लोक इत्याह—**तदेतदिति। सम्प्रसादे** सुषुप्तिसमये विकारिणि। चित्तेऽस्तं याते सति कूटस्थदृष्टित्वादात्मनः पश्यतोऽपि नाण्वपि द्वितीयं स्पृश्यते नात्मना सम्बध्यत इत्यर्थः।।४७।।

सम्प्रसाद इति विशेषणादितरावस्थयोर्द्वितीयसंस्पर्शोऽभिमत इत्याशङ्क्य

---

१ चित्तधर्मविशिष्टस्य– "अहमादिरूपान्तःकरणवृत्तिपरिणामविशिष्टस्य चिदाभासविशिष्टाहंकारात्मकपरिणामिन इति यावत्"। (सारार्थः)

२ ईश्वरपरतन्त्रत्वात्। जगद्बीजमज्ञानं परमेश्वरस्याभिन्नशक्तिरूपेण श्रुतावभिहितत्वात् अज्ञानस्यापि नित्यत्वापत्तिः इति चेन्न, सत्ताविषये प्रतीतिविषये च परमेश्वराधीनत्वात् एतावन्मात्रादेव परमेश्वरस्य शक्तिः इति निर्दिष्टं भवति।

**पश्यन्नप्यविकारित्वाद्द्वितीयं नैव पश्यति ।। ४८ ।।**
**एवं ज्ञानवतो नास्ति ममांहमतिसंश्रयः।**
**भास्वत्प्रदीपहस्तस्य ह्यन्धकार इवाग्रतः।।४९।।**
**तत्र दृष्टान्तः–**
**आ प्रबोधाद्यथा सिद्धिर्द्वैतादन्यस्य वस्तुनः।**
**बोधादेवमसिद्धत्वं बुद्ध्यादेः प्रत्यगात्मनः।।५०।।**
**स एव विद्वान्हानोपादानशून्यमात्मानमात्मनि[१] पश्यन्–**
**सर्वमेवानुजानाति सर्वमेव निषेधति।**
**भेदात्मलाभोऽनुज्ञा स्यान्निषेधोऽतत्स्वभावतः।।५१।।**
**सर्वस्योक्तत्वादुपसंहारः[२]–**
**परमार्थात्मनिष्ठं यत्सर्ववेदान्तनिश्चितम्।**
**तमोपनुद्धियां[३] ज्ञानं तदेतत्कथितं मया।।५२।।**

---

तयोरप्यवस्थयोः परमार्थतो द्वितीयसंस्पर्शाभावन्दर्शयति—**सोयमित्यादिना**।।४८।।

अवस्थात्रयेऽपि कूटस्थ आत्मेति विदुषा फलमाह—**एवमिति**। ममाहमिति यदिदं ज्ञानद्वयमन्तःकरणाश्रयन्तदेवंविदो नास्तीत्यर्थः।।४९।।

बाधकाद्वैतबोधोदयपर्यन्तं यथाद्वैतस्य सिद्धिरेवं बाधकबोधोदयादूर्ध्वन्तस्यासिद्धिर्युक्तैवेत्यर्थः।।५०।।

विदुषोऽनुभवप्रकारमिदानीं दर्शयति—**स एष इति**। कथमेतद्विरुद्धमभिधीयत इत्याह—**भेदेति**। व्यवहारदृष्ट्या द्वैतप्रपञ्चस्य स्वरूपलाभोऽनुज्ञा तत्त्वदृष्ट्या तदभावो निषेध इत्यर्थः।।५१।।

इदानीं प्रकरणमुपसंहरति—**सर्वस्येति**। सर्ववेदान्तनिश्चितध्वान्तान्धकारनिवर्तकं यज्ज्ञानं परमार्थवस्तुविषयन्तदेवं निरवशेषेणास्मिन्प्रकरणे[४] **मया कथितन्नातः**परं ज्ञातव्यमवशिष्यत इत्यर्थः।।५२।।

---

१ आत्मनि = शुद्धान्तःकरणे।

२ उक्तस्योपसंहारे– प्रथमतः तृतीयश्लोकपर्यन्तं द्रष्टव्यम्।

३ "तमोऽपनुद्धियां ज्ञानं– बुद्धिप्रधानानां जीवानामन्तःकरणाद्यवच्छेदेन यत्तमः तदपनुद् ज्ञानम्"। (सारार्थः)

४ प्रकरणग्रन्थे।

एतावदिहोक्तम्–

नेहात्मविन्मदन्योऽस्ति न मत्तोऽज्ञोऽस्ति कश्चन।
इत्यजानन्विजानाति यस्स ब्रह्मविदुत्तमः।।५३।।

एवमात्मानं ज्ञात्वा किं प्रवर्तितव्यमुत निवर्तितव्यमाहोस्विन्मुक्तप्रग्रहतेति उच्यते–

ज्ञेयाभिन्नमिदं यस्माज्ज्ञेयवस्त्वनुसार्यतः।
न प्रवृत्तिं निवृत्तिं वा कटाक्षेणापि वीक्षते।।५४।।

कुत एतज्ज्ञेयाभिन्नमिति। यतः–

प्रागात्मबोधाद्बोधोऽयं[1] बाह्यवस्तूपसर्जनः।
प्रध्वस्ताखिलसंसार आत्मैकालम्बनः श्रुतेः।।५५।।

एवमवगतपरमार्थतत्त्वस्य न शेषशेषिभावस्तत्कारणस्योत्सारितत्वादित्याह–

---

सांख्यादिव नानात्मवादशङ्कानिरासार्थं पुनरपि सङ्गृह्योक्तमर्थन्दर्शयति—**एतावदिति**। विजानातीत्युक्ते ज्ञानपरिणामित्वाप्राप्तमिति अत आह—**अजानन्निति**। अपरिणामिना कूटस्थचैतन्येनेत्थमनुभवन्तीत्यर्थः। अयम्भावस्सोपाधिकचैतन्यानामुपाधिकप्रधानत्वादुपाधिभेदवदेव परिकल्पिततया ज्ञानाज्ञानाश्रयत्वयोगादवास्तवसमस्तोपाधेरद्वैतचैतन्यस्यैव मम तदाश्रयत्वमिति।।५३।।

एवन्तत्त्वविचारं परिसमाप्य तत्त्वविदश्चर्यामिदानीं निरूपयति—**एवमित्यादिना**। किं ब्रह्मविदा वर्णाश्रमधर्मेषु प्रवर्तितव्यमुत तेभ्यो निवर्तितव्यमथवा स्वच्छन्दं वर्तितव्यमिति शङ्कायां ज्ञानस्य ज्ञेयानुसारित्वात् ज्ञेयस्य च प्रवृत्तिनिवृत्तिशून्यस्वभावत्वन्तद्रूपेण तद्विदोऽवस्थानं न तु प्रवृत्तिनिवृत्त्यादिसम्बन्ध इति परिहारमाह—**उच्यत इति**।।५४।।

श्रुतेरिति "यत्र वा अन्यदिव स्यात्तत्रान्योन्यत् पश्येद्यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येदि"त्यविद्यावस्थायां भेदविषयत्वं विज्ञानस्य विद्योदये त्वात्मैकत्वमात्रपर्यवसानमिति श्रूयत इत्यर्थः।।५५।।

---

१ आत्मबोधात्प्रागयं बोधश्चक्षुरादिसंनिकर्ष प्रयुक्तत्वात् तत एवं सविकल्पकत्वाद्बाह्यवस्तूपसर्जन एव विशिष्टावगाह्येव। ...संसारस्य सकार्याज्ञानस्य विद्योदयेन ध्वंसे सति... आत्मैकालम्बनमात्मव्यक्तिमात्रावगाहि निर्विकल्पकम्।।" (सारार्थः)

**वास्तवेनैव वृत्तेन निरुणद्धि यतो भवम्।**
**निवृत्तिमपि मृद्नाति सम्यग्बोधः प्रवृत्तिवत्।।५६।।**
**सकृदात्मप्रसूत्यैव निरुणद्ध्यखिलं भवम्।**
**ध्वान्तमात्रनिरासेन न ततोऽन्यान्यथामतिः।।५७।।**
**देशकालाद्यसंबन्धाद्देशादेर्मोहकार्यतः ।**
**नानुत्पन्नमदग्धं वा ज्ञानमज्ञानमस्त्यतः।।५८।।**

---

ननु विदुषः प्रवृत्तिधर्माणामभावेऽप्यमानित्वादयो[१] निवृत्तिधर्मा विद्यन्तेऽतस्तद्विधिशेष एवायं विद्वानपीत्याशङ्क्याह—**एवमित्यादिना।** यतस्सम्यग्बोधः प्रवृत्तिनिवृत्तिशून्यात्मनस्तु वृत्तानुरोधेन संसारन्निवर्तयति, अतो वैधप्रवृत्तिवद्वैधनिवृत्तिमपि निवर्तयतीत्यर्थः।।५६।।

यदि सम्यग्बोधस्स्वोत्पत्तिमात्रेणैव संसारनिवर्त्तकस्स्यात् स्यात्तदेवं नत्वेतदस्ति तस्यानादिकालप्रवृत्तमिथ्याज्ञानतत्संस्कारनिवारणायाभ्यासापेक्षत्वात्तदवसरे च निवृत्तिविधीनामपि सावकाशत्वादित्यत आह—**सकृदिति।** सम्यग्बोधस्य स्वोदयमात्रेणाविद्यानिवर्तकताया अन्वयव्यतिरेकसिद्धत्वात्तस्याश्च निवृत्तायास्तदुपादानमिथ्याज्ञानतत्संस्काराणां कारणनिवृत्त्यैव निवृत्तेर्नाभ्यासादिसम्भव इत्यर्थः।।५७।।

ननु कथं सकृदेव सकलाज्ञाननिवर्तकं ज्ञानमुदीयाद्यावता लोके प्रमाणज्ञानानां स्वदेशकालोपाधावेव स्वविषयाज्ञाननिवर्तकत्वन्न तु सकलाज्ञाननिरासकत्वं न दृश्यत इत्याशङ्क्याह—**देशकालेति।** घटादीनां देशकालावस्थादिपरिच्छिन्नत्वाज्जड़त्वाच्च तद्विषयज्ञानानान्देशकालाद्यपेक्षया तत्तदज्ञाननिवर्तकत्वेऽप्यात्मनोऽविद्याकार्यदेशकालादिभिरस्पष्टत्वात् स्वयम्प्रभुत्वाच्च न तत्रानिवर्त्याज्ञानान्तरमस्तीति तन्निवर्तकं ज्ञानान्तरमपि नापेक्षत इत्यर्थः।।५८।।

---

१ अमानित्वादि—

अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम्।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः।।७।।
इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ।।८।।
असक्तिरनभिष्वङ्गपुत्रदारागृहादिषु ।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु।।९।।
इत्यादि। श्रीमद्भगवद्गीता, अ. १३

सम्यग्ज्ञानशिखिप्लुष्टमोहतत्कार्यरूपिणः ।
सकृन्निवृत्तेर्बाध्यस्य किं कार्यमवशिष्यते।।५९।।

वास्तवेनैव वृत्तेनाविद्यायाः प्रध्वस्तत्वान्न किंचिदवशिष्यत इत्युक्तः परिहारः। अथापरसाम्प्रदायिकः–

निवृत्तसर्पस्सर्पोत्थं यथा कम्पं न मुञ्चति।
विध्वस्ताखिलमोहोऽपि मोहकार्यं तथात्मवित्।।६०।।

यतः प्रवृत्तिबीजमुच्छिन्नं तस्मात्–

तरोरुत्खातमूलस्य शोषेणैव यथा क्षयः।
तथा बुद्धात्मतत्त्वस्य निवृत्त्यैव तनुक्षयः।।६१।।

अथालेपकपक्षनिरासार्थमाह–

बुद्धाद्वैतसतत्त्वस्य यथेष्टाचरणं यदि।
शुनां तत्त्वदृशां चैव को भेदोऽशुचिभक्षणे।।६२।।

---

तस्मात्सम्यक् ज्ञानोत्पत्तौ सकृदेव सकलाज्ञाननिवृत्तेर्न शेषशेषिभाव इतियुक्त-मेवोक्तमित्युपसंहरति—**सम्यगिति**।।५९।।

एवं सद्योमुक्तिपक्षमङ्गीकृत्य शेषशेषिभावः परिहृतः। अधुना जीवन्मुक्तिपक्षेऽपि न शेषशेषिभाव इत्युत्तरग्रन्थस्य तात्पर्यमाह—**वास्तवेनैवेत्यादिना**। सम्यग्बोधात् बोधितसर्पभ्रमस्य पुंसो भयकम्पादिकं यथा कञ्चित्कालमनुवर्तते तथा विदुषो वाधितोऽपि संसारः प्रारब्धकर्मफलोपभोगपर्यन्तमनुवर्तत इत्यर्थः।।६०।।

भवत्वेवं तथापि कथं शेषशेषिभावासम्भव इति, अत आह—**यत इति**। प्रवृत्तिबीजं विविधवैधप्रवृत्तीनां बीजमविद्याकामादियतस्सम्यग्दर्शनादुच्छिन्नमिति यतस्ततो, न शेषशेषिभावः तेन निवृत्त्या प्रारब्धकर्मणो भोगेन निवृत्त्या प्रातिभासिकस्यापि शरीरादेर्निवृत्तिरितिभावः।।६१।।

विदुषः परिदृश्यमानानां प्रवृत्तीनां विधिनिबन्धनत्वाभावे रागद्वेषादिनिबन्धनत्वं प्राप्तमित्याशङ्क्याह—**अथेत्यादिना**। तत्त्वदृशां संस्कारवशान्मनुष्यत्वादिजात्युचितैव प्रवृत्तिः न तिर्यग्जात्युचितेति यथा त्वयेष्यते एवं प्रातिभासिकवर्णाश्रमोचितैव प्रवृत्ति-स्तत्संस्कारवशात् भवति नेतरेत्यभ्युपेयमित्यर्थः।।६२।।

वर्णाश्रमाभिमानस्यागन्तुकत्वात् स्वभावसिद्धत्वाच्च जात्यभिमानस्य मनुष्यत्व-जातिमानोचितैव प्रवृत्तिस्तत्संस्कारवशात् किं न स्यादितिविशेषे हेतुर्वाच्य इत्याशङ्क्योत्तर-

**कस्मान्न[१] भवति। यस्मात्–**

**अधर्माज्जायतेऽज्ञानं यथेष्टाचरणं ततः।**
**धर्मकार्ये कथं तत्स्याद्यत्र धर्मोऽपि नेष्यते।।६३।।**

**प्रत्याचक्षाण आहातो यथेष्टाचरणं हरिः।**
**'यस्य सर्वे समारम्भाः' 'प्रकाशं चे'ति सर्वदृक्।।६४।।**

**तिष्ठतु तावत्सर्वप्रवृत्तिबीजघस्मरं ज्ञानं, मुमुक्ष्ववस्थायामपि न संभवति यथेष्टाचरणम्। तदाह–**

**'यो हि तत्र विरक्तः स्यान्नासौ तस्मै प्रवर्तते।**
**लोकत्रयविरक्तत्वान्मुमुक्षुः किमितीहते'।।६५।।**

**तत्र दृष्टान्तः–**

**'क्षुधया पीड्यमानोऽपि न विषं ह्यत्तुमिच्छति।**

---

श्लोकेन परिहरति—**कस्मादित्यादिना।**[१] जन्मान्तरानुष्ठिताधर्मवशादभक्ष्यभक्षणादावकर्तव्ये कर्तव्यताबुद्धिः ततश्च यथेष्टाचरणं ज्ञानं पुनरत्यन्तोत्कृष्टस्य पुण्यस्य कार्यान्धर्मात्सत्त्वं च ज्ञानं चेत्यादिवचनात् यस्मिश्च ज्ञाने सति प्रवर्तककामादिदोषाणामत्यन्तमुच्छिन्नत्वाद्धर्मोऽपि प्रवृत्तिर्न भवति सति तथाभूते ज्ञाने कथं यथेष्टाचरणम्। "भावितैः करणैरेभिः बहुभिस्संसारयोनिषु। आसादयति शुद्धात्मा मोक्षं वै प्रथमाश्रमे।" "अनेकजन्मसंसिद्धस्ततो याति पराङ्गतिमि" ति च स्मरणादतीतानेकजन्मस्वपि यथेष्टाचरणाभावेन तत्संस्कारस्याप्यभावान्न तद्वशादपि विदुषो यथेष्टाचरणमित्यर्थः।।६३।।

विदुषो यथेष्टाचरणाभावे भगद्वचनमपि प्रमाणमित्याह—**प्रत्याचक्षाण** इति।।६४।।

इदानीं किं पुनर्न्यायादपि विदुषो यथेष्टाचरणाभावमाह—**तिष्ठत्वित्यादिना।** मुमुक्षुरपि यत्र न चेष्टते तत्र मुक्तो न चेष्टत इति किमुवक्तव्यमित्यर्थः।।६५।।

किमुवक्तव्यं न्यायमेव दृष्टान्तेन स्फुटयति—**तत्र दृष्टान्त** इत्यादिना। यथालोके क्षुत्क्षमस्तन्निवृत्तिसाधने प्रयतमानोऽप्यतत्साधने प्रत्युतप्रतिकूले विदुषितान्नेन प्रवर्तते। तत्र मृष्टान्नेन ध्वस्ततृष्णस्तस्य विदुष दुषितततां जानन् विवेकी न तदत्तुमिच्छतीति किमुवक्तव्यन्तथा मुमुक्षुरप्राप्तपरमपुरुषार्थस्तत्साधने प्रयतमानेऽप्यनित्यत्वादिदोषदूषितैरैहिकामुष्मिकसुखेभ्यो विरक्तस्तत्साधनेषु न प्रवर्तते। तत्र किमु वक्तव्यम्। परब्रह्मानन्दानुभवपरितृप्तो विद्वान् बहुलायासपरिक्लिष्टेषु वैषयिकसुखलवेषु न प्रवर्तत

---

१ कस्मादिति पाठः मुद्रितपुस्तके दृश्यते। तस्मादिति तु पाठः हस्तलिखितपुस्तके दृश्यते।

मिष्टान्नध्वस्ततृड् जानन्नामूढस्तज्जिघत्सति'।।६६।।

यतोऽवगतपरमार्थतत्त्वस्य यथेष्टाचरणं न मनागपि घटते मुमुक्षुत्वेऽपि च, तस्मात्–

रागो लिङ्गमबोधस्य चित्तव्यायामभूमिषु।
कुतः शाड्वलता तस्य यस्याग्निः कोटरे तरोः।।६७।।

सकलपुरुषार्थसमाप्तिकारिणोऽस्यात्मावबोधस्य कुतः प्रसूतिरिति। उच्यते–

अमानित्वादिनिष्ठो यो यश्चाद्वेष्टादिसाधनः।
ज्ञानमुत्पद्यते तस्य न बहिर्मुखचेतसः।।६८।।

उत्पन्ने आत्मविज्ञाने किमविद्याकार्यत्वात्प्रवृत्तिवन्निवृत्त्यात्म-

---

इति भावः।।६६।।

यस्मात्सिद्धस्य साधकस्य च रागद्वेषनिबन्धने प्रवृत्तिनिवृत्ती सम्भवतस्तस्मात् प्रवृत्त्यादिना अनुमितो रागो विद्वत्ताया एव लिङ्गमित्युपसंहरति—**यत** इत्यादिना। चित्तव्यायामभूमिषु चित्तस्य स्वारसिकप्रवृत्त्यालम्बनेषु योरागस्सोऽयमबोधस्य लिङ्गन्तत्र दृष्टान्तः—**कुत** इति। यथा यत्राग्निस्तत्र न शाड्वलता तथा यत्र रागस्तत्र न बोध इत्यर्थः।।६७।।

एवं प्रसङ्गागतमनेकपक्षनिरासं परिसमाप्य सम्यग्दर्शनसाधनानि संकल्प्य दर्शयति। पूर्वोदितत्वं पदार्थविवेकमात्रस्यैव ज्ञानसाधनत्वमिति शङ्कां व्यावर्तयितुं सकलेत्यादिना "अमानित्वमदम्भित्वम्"[१] "अद्वेष्टासर्वभूतानाम्"[२] इत्यादिना भगवद्गीतोक्तगुणगणवत एव ज्ञानोत्पत्तिर्न विषयाभिमुखचेतस इत्यर्थः।।६८।।

साधकस्यामानित्वादिकं ज्ञानसाधकमित्युक्तं तर्हि "सिद्धस्य साध्याभावे महावाहो

---

१ अमानित्वादयः ग्रन्थेऽस्मिन् ४.५६ श्लोकव्याख्याटीप्पण्यां द्रष्टव्यम्।

२ अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च।
निर्ममो निरहङ्कारः समदुःखसुखः क्षमी।।१३।।
सन्तुष्टः सततं योगी यतात्मा दृढनिश्चयः।
मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः।।१४।।
यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ।।१५।। इत्यादयः "अद्वेष्टादिशब्देन कथितः।"
(श्रीमद्भगवद्गीतायां द्वादशाध्यायः।)

**कामानित्वादयो निवर्तन्त उत नेति। नेति ब्रूमः। किं कारणम्। निवृत्तिशास्त्राविरुद्धस्वाभाव्यात्परमात्मनो न तु नियोगवशात्। कथं तर्हि? शृणु–**

**उत्पन्नात्मप्रबोधस्य त्वद्वेष्टृत्वादयो गुणाः।**
**अयत्नतो भवन्त्यस्य न तु साधनरूपिणः।।६९।।**

**यत[1] एतदेवमतः–**

**इमं ग्रन्थमुपादित्सुरमानित्वादिसाधनः।**
**यत्नतः स्यान्न दुर्वृत्तः प्रत्यग्धर्मानुगो ह्ययम् ।।७०।।**

**न दातव्यश्चायं ग्रन्थः–**

**नाविरक्ताय संसारान्निरस्तैषणाय च।[2]**
**न चायमवते देयं वेदान्तार्थप्रवेशनम्।।७१।।**

---

साधनैः किं प्रयोजनमिति" न्यायेन तेषामविद्याकार्याणां विद्याविरोधाच्चासम्भवमाशङ्क्य विधितस्तेषामनुष्ठेयत्वेनाप्राप्तावपि विद्याविषयपरमार्थात्मस्वभावविरोधादयः न साध्याऽमानित्वादयो विदुषो लक्षणत्वेनानुवर्तन्ते इति—**उत्पन्नेति**।।६९।।

यस्मादेवं साधकस्य साधनत्वेन सिद्धस्य लक्षणत्वेनामानित्वादयस्सर्वथाप्यङ्गीकरणीयस्स्यात् परमरहस्यभूतनैष्कर्म्यसिद्धिप्रकरणश्रवणाभिमुखोऽप्यमानित्वादिनिष्ठो भवेदित्याह—**यत** इत्यादिना। प्रत्यगधर्म आत्मा प्रत्यक्चासौ धर्मश्चेति तमनुगच्छतेति तद्याथात्म्यप्रतिपादकत्वेनायं ग्रन्थ इति—**प्रत्यग्धर्मानुग** इत्युक्तम्।।७०।।

एवं शिष्यस्य नियममभिधायाचार्यस्य नियममाह—**न दातव्य** इति। यत्र अहिंसा सत्यास्तेयादयो यस्य विद्यन्ते स यमवान्। न यमवान् अयमवान् तस्मै अयमवते कुतो न देयमित्यत आह—**वेदान्तेति**। वेदान्तानामर्थे प्रवेशोऽधिगमोऽनेन भवतीदं प्रकरणं वेदान्तार्थप्रवेशनं तेन य एव वेदान्तश्रवणादिषु अधिकृतो मुमुक्षुस्स एवात्राधिकारी नान्यः तस्मात् कुतूहलात् बहुश्रुत्यादिबुद्ध्या वा प्रवर्तमानाय इदं न देयमित्यर्थः।।७१।।

---

१ "एवं ससाधनब्रह्मविद्याप्रकरणं समाप्य तदधिकारिनियमान्दर्शयितुं पूर्वोत्तरश्लोकसंगतिमाह यत इति" (सारार्थः)

२ यम-नियमाऽऽसन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधयोऽष्टावङ्गानि। (यो.सू. २-२९)

ज्ञात्वा यथोदितं सम्यग्ज्ञातव्यं नावशिष्यते।
न चानिरस्तकर्मेदं जानीयादञ्जसा ततः।।७२।।
निरस्तसर्वकर्माणः प्रत्यक्प्रवणबुद्धयः।
निष्कामा यतयः शान्ता जानन्तीदं यथोदितम्।।७३।।
श्रीमच्छङ्करपादपद्मयुगलं संसेव्य लब्ध्वोचिवान्
ज्ञानं पारमहंस्यमेतदमलं स्वान्तान्धकारापनुत्।
मा भूदत्र विरोधिनी मतिरतः सद्भिः परीक्ष्यं बुधैः
सर्वत्रैव विशुद्धये मतमिदं सन्तः परं कारणम्।।७४।।
सुभाषितं चार्वपि नाडमहात्मनां
दिवाकरो नक्तदृशामिवामलः।
प्रभाति भात्येव विशुद्धचेतसां
निधिर्यथापास्ततृषां महाधनः।।७५।।
विष्णोः पादानुगां यां निखिलभवनुदं शङ्करोऽवाप योगात्
सर्वज्ञं ब्रह्मसंस्थं मुनिगणसहितं सम्यगभ्यर्च्य भक्त्या।
विद्यां गङ्गामिवाहं प्रवरगुणनिधेः प्राप्य वेदान्तदीप्तां[1]
कारुण्यात्तामवोचं जनिमृतिनिवहध्वस्तये दुःखितेभ्यः।।७६।।
वेदान्तोदरवर्ति भास्वदमलं ध्वान्तच्छिदस्मद्धियो
दिव्यं ज्ञानमतीन्द्रियेऽपि विषये व्याहन्यते न क्वचित्।

---

किमेतत्प्रकरणपरिज्ञानात् येनात्राधिकारिणां प्रवेशो न सिध्यतीत्यर्थः—**ज्ञात्वेति**। तेन कुतूहलादिवशात् प्रवृत्तौ नानुभवफलपर्यन्तं विज्ञानमधिगच्छतीत्याह—**न चेति**।।७२।।

केन तर्हि प्रकरणार्थं ससम्यक् प्रतिपद्यत इत्यत आह—**निरस्येति**।।७३।।

इदानीमस्य प्रकरणस्य विशिष्टगुरुसम्प्रदायपूर्वकत्वान्नात्र दोषदृष्टिः करणीया किन्तु सतामेव गुणदोषावधारणकारणत्वात् परीक्षणीयमिदं प्रकरणमिति विद्वज्जनेष्वात्मनोऽनौद्धत्यं दर्शयति—**श्रीमदिति**।।७४-७५।।

एवं गुरुसम्प्रदाय प्राप्तप्रकरणस्य परानुग्रह एव गुरुभक्तेर्विद्यां प्रत्यन्तरङ्गसाधनत्वं

---

१ वेदान्तदीप्तां— "गङ्गापक्षे वेदप्रतिपाद्यामिति।
विद्यापक्षे तत्त्वमस्यादिमहावाक्यैरुद्भासिताम्" (सारार्थः)

**योो नो न्यायशलाकयैव निखिलं संसारबीजं तमः**
**प्रोत्सार्याविरकार्षीद्‌गुरुगुरुः पूज्याय तस्मै नमः।।७७।।**
**संबन्धोक्तिरियं साध्वी प्रतिश्लोकमुदाहृता।**
**नैष्कर्म्यसिद्धेर्ज्ञात्वेमां व्याख्यातासौ भवेद्ध्रुवम्।।७८।।**

**इति श्रीमच्छङ्करभगवत्पूज्यपादशिष्यसुरेश्वराचार्यकृतौ**
**नैष्कर्म्यसिद्धौ चतुर्थोऽध्यायः।।**
**नैष्कर्म्यसिद्धिप्रकरणं संपूर्णम् ।।**
**सम्पूर्णोऽयं ग्रन्थः**

---

दर्शयितुं प्रकरणारम्भ इव प्रकरणसमाप्तावपि गुरुनमस्कारं करोति—**वेदान्तेति। तस्मै पूज्याय नम** इति सम्बन्धः।।७६-७७।।

नैष्कर्म्यसिद्धेर्व्याख्यानक्षमतापर्यन्तपरिज्ञाने किं कारणमित्याकांक्षायां सम्बन्धोक्तिरेवेत्याह—**सम्बन्धोक्तिरिति**।।७८।।

**श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमज्ज्ञानोत्तमपूज्यपादशिष्यश्रीचित्सुखमुनिविरचितायां नैष्कर्म्यसिद्धिटीकायां चतुर्थोऽध्यायः समाप्तः।**

**समाप्तश्चायं ग्रन्थः।**

# परिशिष्टम्

## सङ्केत-सूची

| | | |
|---|---|---|
| अ. सि. | - | अद्वैत सिद्धिः |
| ईश. | - | ईशावास्योपनिषत् |
| उप. सा. | - | उपदेश साहस्री |
| ऐ. | - | ऐतरेयोपनिषत् |
| ऋक्. सं. | - | ऋग्वेद संहिता |
| क. उ., कठ., कठ. उ. | - | कठोपनिषत् |
| कठ. शा. भा. | - | कठोपनिषच्छाङ्करभाष्यम् |
| के. उ. | - | केनोपनिषत् |
| के. शा. भा. | - | केनोपनिषच्छाङ्करभाष्यम् |
| कौ. उ. | - | कौषीतकि उपनिषत् |
| कौ. | - | कौषीतकि ब्राह्मणः |
| गी. | - | श्रीमद्भगवद्गीता |
| गो. टी. | - | गोपालयतीन्द्र टीका (कठ.) |
| छा./ छा. उ. | - | छान्दोग्योपनिषत् |
| त. प्र./ तत्त्वप्र. | - | तत्त्वप्रदीपिका |
| तै. आ. | - | तैत्तिरीय आरण्यकः |
| तै. ब्रा | - | तैत्तिरीय ब्राह्मणः |
| तै. उ./ तै. | - | तैत्तिरीयोपनिषत् |
| तै. भा. वा. | - | तैत्तिरीय भाष्यवार्तिकम् |
| नि. सा. सं. | - | निर्णयसागर संस्करणम् |
| नै. सि. च. | - | नैष्कर्म्य सिद्धि-चन्द्रिका (टीका) |
| न्या. कु. प्र. | - | न्यायकुसुमाञ्जली प्रकाशः |
| न्या. द. | - | न्यायदर्शनम् |
| न्या. द. वा. भा. | - | न्यायदर्शन वात्स्यायनभाष्यम् |

| | | |
|---|---|---|
| पञ्च./ पं. द. | - | पञ्चदशी |
| पा. यो. द. | - | पातञ्जलि-योगदर्शनम् |
| प्र. | - | प्रश्नोपनिषत् |
| ब्र. सू. | - | ब्रह्मसूत्रम् |
| ब्र. सू. शां. भा. | - | ब्रह्मसूत्रशाङ्करभाष्यम् |
| ब्र. सू. भू. | - | ब्रह्मसूत्र भूमिका |
| म. अ. स. | - | महेश अनुसन्धान संस्थान |
| मा. का. | - | माण्डूक्यकारिका |
| मु. उ. | - | मुण्डकोपनिषत् |
| भा. द. को. | - | भारतीय दर्शन कोष (कलिकाता) |
| भु. लौ. न्या. सा. | - | भुवनेश लौकिकन्यायसाहस्री |
| या. स्मृ. | - | याज्ञवल्क्यस्मृतिः |
| वे. प. | - | वेदान्त परिभाषा |
| ते. सा. | - | वेदान्तसारः |
| वे. सि. मु. | - | वेदान्तसिद्धान्त मुक्तावली |
| बृ. उ./ बृ. | - | बृहदारण्यकोपनिषत् |
| बृह. भा. वा. | - | बृहदारण्यक-भाष्य-वार्तिकम् |
| शा. सि. ले. सं. | - | शास्त्रसिद्धान्तलेशसंग्रहः |
| शां. भा. | - | शाङ्करभाष्यम् |
| श्वे. उ. | - | श्वेताश्वतरोपनिषत् |
| ष. का. | - | षड्दर्शनकार्यालयः |
| सं. शा. | - | संक्षेपशारीरकम् |
| सां. त. कौ. | - | सांख्यतत्त्वकौमुदी |
| स. द. सं. | - | सर्वदर्शन संग्रहः |
| सम्बन्ध वा. | - | सम्बन्ध वार्तिकम् (बृ. उ.) |

# कारिकाणां वर्णानुक्रमणिका

# अनन्तश्री स्वामी निगमानन्द सरस्वती देव प्रणीत तथा श्रीश्री निगमानन्द विद्या निकेतन, वाराणसी से प्रकाशित अमूल्य कृतियाँ

| | | |
|---|---|---|
| १. | ब्रह्मचर्यसाधना या ब्रह्मचर्यपालन की नियमावली | (२५.००) |
| २. | योगीगुरु या योग और साधना की पद्धतियाँ | (४०.००) |
| ३. | ज्ञानीगुरु या ज्ञान और साधना की पद्धतियाँ | (८०.००) |
| ४. | तान्त्रिकगुरु या तन्त्रसाधना की पद्धतियाँ | (५०.००) |
| ५. | प्रेमिकगुरु या प्रेमभक्ति और साधना की पद्धतियाँ | (५०.००) |
| ६. | माँ की कृपा | (१२.००) |
| ७. | उपदेश-रत्नमाला | |
| ८. | अभयवाणी | (८.००) |
| ९. | महायोगी सद्‌गुरु निगमानन्द | (२०.००) |
| १०. | मनीषापञ्चक | (१५.००) |
| ११. | श्रीमद्‌भागवत पारिजात - स्वामी श्री भागवतानन्दजी (श्रीमद्‌भागवत् सप्ताहक्रम सारांश) | (४०.००) |
| १२. | वेदान्त रहस्य चिन्तामणि - स्वामी श्री सच्चित्तीर्थ। (हिन्दी भाषा में वेदान्त तत्त्वों का प्रश्नोत्तर क्रम से विशद विवरण) | (४०.००) |
| १३. | श्रीपातञ्जल योगदर्शन - स्वामी श्रीसच्चित्तीर्थ रहस्यचंद्रिका हिन्दी व्याख्या सहित) | (२५.००) |
| १४. | सद्‌गुरुप्रसङ्ग या गुरुवाद | (१०.००) |
| १५. | स्तोत्रमाला | (१२.००) |
| १६. | नैष्कर्म्यसिद्धि चित्सुखाचार्यकृत संस्कृत टीका, हिन्दी व्याख्या सहित | (१२५.००) |

*बंगला भाषा में -*

| | | |
|---|---|---|
| १. | वेदान्तडिण्डिम - भाषा अनुवाद तथा उपनिषद् प्रमाण सहित | (१२.००) |
| २. | साधना ओ ब्रह्मानुभूति - (अध्यात्म पिपासुओं के लिए अति उपादेय ग्रन्थ) स्वामी श्री अखण्डानन्द सरस्वती | (६०.००) |
| ३. | महाप्रस्थान - श्री स्वामी सत्यानन्द सरस्वती जी के अन्तिम २८ दिनों का विवरण | (१५.००) |
| ४. | सारस्वत साधनाय शंकर ओ गौराङ्ग | (२५.००) |
| ५. | वन्दे महापुरुष ते चरणारविन्दम् | (शीघ्रप्राप्त) |

**प्राप्तिस्थान**

**श्री श्रीनिगमानन्द विद्यानिकेतन**, बी. ६/१०६ केदार घाट (पीताम्बरपुरा) वाराणसी-२२१००१



**शंकर मठ**, राम राजातला, संतरागाच्छि, हावड़ा (प. बंगाल) ७ ११०४